# रसेन्द्रसारसंग्रहः ।

## प्रथमोऽध्यायः ।

रसेन्द्रमिव निःशेषजराव्याधिविनाशनम् ।
प्रणमामि गुरुं भक्त्या शङ्करं योगसाधनम् ॥१॥

सकलजनमण्डलसमुपकारकसुसिद्धशास्त्रार्थप्रकाशनार्थकविहतिप्रतिरोधकपटलनिरासार्थं प्रथमतः स्वेष्टदेवनमस्कारस्यावश्यकत्वमित्यवधार्य तदेव निबध्नाति रसेन्द्रमित्यादि। तत्रापि शङ्करनामोत्कीर्त्तनं मङ्गलार्थं शङ्करस्य श्रेयःसाधनत्वेन सर्वोत्कर्षत्वात्। न च गुरुपदार्थो विशेषितः शङ्करनमस्कारेणैव इष्टसिद्धौ विशेषणवैयर्थ्यापत्तिरिति वाच्यं यत्किञ्चित् संज्ञोपलक्ष्यशङ्करधीनिरासकत्वेन ज्योतिःस्वरूपार्थकगुरुपदार्थस्य सार्थक्यात्। प्रपूर्वकनमधात्वर्थश्च स्वापकर्षबोधानुकूलव्यापारः उद्देश्यरूपं कर्मत्वं तत्त्वञ्च नमस्कारजन्यफलजनकप्रीत्याश्रयत्वम्। भक्त्येति विशेषणे तृतीया। आख्यातेनास्मत्पदार्थोपस्थितिः ततश्च भक्तिविशिष्टोऽस्मत्वावच्छिन्नः कर्त्ता परब्रह्मस्वरूपशङ्करत्वावच्छिन्नकर्मतानिरूपकस्वापकर्षबोधजनकव्यापारवानित्यर्थः। ये तु स्वोत्कर्षबोधानुकूलव्यापार एव नमधात्वर्थ इति ब्रुवते तेषां मते विषयत्वरूपं कर्मत्वम् अन्यत् समानम्। अन्ये तु भक्त्येति तृतीयाप्रयोजकतायां तस्य तादृशबोधे चान्वयः। ततश्च भक्तिप्रयोज्यस्तादृशबोध इत्यर्थमवतारयन्ति। ननु वाङ्मनसयोर्वर्त्मातिक्रमस्य तस्य ज्ञानाविषयत्वेन प्रणामः कथं संगच्छते इत्याह। योगसाधनमिति। योगेन साधनं प्राप्तिर्यस्येति बहुव्रीहिः रसेन्द्रमिति योगसाधनं रसेन्द्रं निःशेषेण जराव्याधिविनाशनं तथा योगसाधनं योगगम्यं शङ्करं प्रणमामीति दृष्टान्तसहितार्थः। रसेन्द्रस्य योगसाधनत्वेन शङ्करस्य स्वधर्मवस्तुनः प्रतिबिम्बनरूपदृष्टान्तावगतिरिति ध्येयम् ॥ १ ॥

नत्वा गुरुपदद्वन्द्वं दृष्ट्वा तन्त्राण्यनेकशः ।
श्रील-गोपालकृष्णे नक्रियते रससंग्रहः ॥ २ ॥
सिद्धियोगाश्च ये केचित् कृतिसाध्या भवन्ति हि ।
एकीकृत्य तु ते सर्वे लिख्यन्ते यत्नतो मया ॥३॥
तत्र रसप्राधान्यमाह । अल्पमात्रोपयोगित्वादरुचेरप्रसङ्गतः ।
क्षिप्रमारोग्यदायित्वादौषधेभ्योऽधिको रसः ॥४॥
साध्येषु भेषजं सर्वमीरितं तत्त्ववेदिना ।

---

नत्वा इत्यादौ पदद्वन्द्वमिति परमार्थतत्त्वदर्शकत्वात् अशेषशास्त्रार्थप्रकाशकत्वाच्च पदद्वन्द्वमित्युक्तम् । तन्त्राण्यनेकश इति अन्यानि बहूनि रसतन्त्राणि । सिद्धियोगाश्चेति तस्मिन् रसग्रन्थे सिद्धियोगाः सिद्धफलदा ये योगा उक्तास्तान् एकीकृत्येति ॥ २॥३ ॥

रसप्राधान्यमाह अल्पमात्रेति । औषधेभ्योऽधिको रस इति अस्मात् कारणात् सर्वेभ्यः औषधेभ्योऽधिकगुणकर इत्यर्थः । न केवलमौषधेभ्योऽधिकः योगसाधनत्वात् तथा बहुकार्य्यकरत्वात् मुक्तिप्रदत्वाच्च सर्वेभ्योऽधिक इति । उक्तञ्च अचिराज्जायते देवि ! शरीरमजरामरम् । मनसश्च समाधानं रसयोगादवाप्यते । सत्त्वञ्च लभते देवि ! विज्ञानं ज्ञानपूर्वकम् । सत्त्वं मन्त्राश्च सिध्यन्ति योऽश्नाति मृतसूतकम् । यावन्न शक्तिपातस्तु न यावत् पाशकृन्तनम् । तावत्तस्य कुतो बुद्धिर्जायते भस्मसूतके । यावन्न हरबीजन्तु भक्षयेत् पारदं रसम् । तावत्तस्य कुतो मुक्तिः कुतः पिण्डस्य धारणम् । स्वदेहे खेचरत्वञ्च शिवत्वं येन लभ्यते इति । अन्यच्च दोषहीनरसो ब्रह्मा मूर्च्छितस्तु जनार्दनः । मारितो रुद्ररूपी स्यात् बद्धः साक्षात् सदाशिव इति । तस्य दर्शनात् स्पर्शनात् भक्षणात् स्मरणात् पूजनात् दानाच्च षड्विधं फलं लभ्यते । यथा केदारादीनि लिङ्गानि पृथिव्यां यानि कानिचित् । तानि दृष्ट्वा च यत् पुण्यं तत् पुण्यं रसदर्शनात् । चन्दनागरुकर्पूरकुङ्कुमान्तर्गतो रसः । मूर्च्छितः शिवपूजा सा शिवसान्निध्यसिद्धये । भक्षणात् परमेशानि ! हन्ति पापत्रयं रसः । दुर्लभं ब्रह्मविष्ण्वाद्यैः प्राप्यते परमं पदम् । हृद्योगं कर्णिकान्तस्थं रसेन्द्रं परमेश्वरि ! स्मरन् विमुच्यते पापैः सद्यो जन्मान्तरार्जितैः । स्वयम्भूलिङ्गसाहस्रैर्यत् फलं सम्यगर्चनात् । तत् फलं कोटिगुणितं रसलिङ्गार्चनाद्भवेत् । रसविद्या परा विद्या त्रैलोक्येऽपि च दुर्लभा । भुक्तिमुक्तिकरी यस्मात् तस्मात् ज्ञेया गुणान्वितैः ॥४॥

असाध्येष्वपि दातव्यो रसोऽतः श्रेष्ठ उच्यते ॥५॥

हतो हन्ति जराव्याधिं मूर्च्छितो व्याधिघातकः।
बद्धः खेचरतां धत्ते कोऽन्यः सूतात् कृपाकरः ॥६॥

अथ रसपर्य्यायमाह। रसेन्द्रः पारदः सूतः सूतराजश्च सूतकः।
शिवतेजो रसः सप्त नामान्येवं रसस्य तु ॥ ७ ॥
शिववीजं रसः सूतः पारदश्च रसेन्द्रकः।
एतानि रसनामानि तथान्यानि यथाशिवे ॥ ८ ॥

## अथ रसलक्षणम्।

अन्तः सुनीलो वहिरुज्ज्वलो यो मध्याह्नसूर्य्यप्रतिमप्रकाशः।
शस्तोऽथ धूम्रः परिपाण्डरश्च चित्रो न योज्यो रसकर्मसिद्धौ ॥९॥
नागो वङ्गो मलो वह्निश्चाञ्चल्यञ्च विषं गिरिः।
असह्याग्निर्महादोषा निसर्गाः पारदे स्थिताः ॥ १० ॥

---

हेत्वन्तरमाह। साध्येष्वित्यादि। साध्येषु रोगेषु सर्वं भेषजमुक्तम् असाध्येषु भेषजं नोक्तं रसश्च साध्येषु असाध्येषु अपि दातव्य इति। यदौषधैर्न सिध्यति तद-साध्यमिति तदौषधं निष्प्रयोजनं यच्च सूतैरपि सिध्यति तत्कथमसाध्यमिति। नैवम् असाध्येषु सर्वमौषध निष्प्रयोजनं नन्न सूतमिति। असाध्यं हि द्विविधम् अप्रतिक्रियं याप्यञ्च अप्रतिक्रियेषु तथा याप्येषु च औषधं निष्प्रयोजनं सूतञ्चाप्रति-क्रियेषु तथा याप्येषु प्रयोक्तव्य यापनार्थमिति नतु व्याधिनिःशेषकरणार्थञ्च ॥५॥

हेत्वन्तरमाह हत इत्यादि। हत इत्यत्र सूत इति शेषः। जराव्याधिर्वार्द्ध-क्याद्यकालपलितकेशादिरूपव्याधि एव मूर्च्छितोऽपि व्याधिं हन्ति। बद्ध इति बद्धपारदः खेचरतां ददातीति ॥ ६ ॥

रसपर्य्यायमाह रसेन्द्र इत्यादि। यथा शिव इत्यनेन शिवपर्य्यायाणामपि रस-वाचकत्वं बोधयति ॥ ७ ॥ ८ ॥

रसलक्षणमाह अन्तःसुनील इत्यादि। पारदे स्थितदोषमाह नागेत्यादि। नागः सीसकः निसर्गा इति स्वाभाविकाः। ते सीसकादयः यथाक्रमं व्रणादि कुर्वन्ति तन्त्रान्तरे त्वन्यथा पठ्यते यथा नागो वङ्गो मलो वह्निश्चाञ्चल्यञ्च विषं

व्रणं कुष्ठं तथा जाड्यं दाहं वीर्य्यस्य नाशनम्।
मरणं जड़तां स्फोटं कुर्वन्त्येते क्रमान्नृणाम् ॥ ११॥
तस्माद्रसस्य संशुद्धिं विदध्याद्भिषजां वरः।
शुद्धोऽयममृतं साक्षाद्दोषयुक्तो रसो विषम् ॥
दोषहीनो यदा सूतस्तदा मृत्युज्वरापहः ॥१२॥
अथातः संप्रवक्ष्यामि पारदस्य विशोधनम्।
रसो ग्राह्यः सुनक्षत्रे पलानां शतमात्रकम्।
पञ्चाशत् पञ्चविंशद्वा दशपञ्चैकमेव वा ॥ १३ ॥
पलाद्धीनो न कर्त्तव्यो रससंस्कार उत्तमः ॥१४॥ मतान्तरम्।
शतं पञ्चाशतं वापि पञ्चविंशद्दशैव च।
पञ्चैकं वा पलञ्चैव पलार्द्धं कर्षमेव च ॥ १५ ॥
कर्षान्न्यूनो न कर्त्तव्यो रससंस्कार उत्तमः।
प्रयोगेषु च सर्वेषु यथालाभं प्रकल्पयेत् ॥ १६ ॥
शुभेऽह्नि विष्णुं परिचिन्त्य कुर्य्यात् सम्यक् कुमारीवटुकार्चनञ्च।
सुलौहपाषाणसमुद्भवेऽस्मिन् दृढे च वेदाङ्गुलिगर्भमात्रे ॥१७॥
सुतप्तखल्ले निजमन्त्रयुक्तां विधाय रक्षां स्थिरसारबुद्धिः।
अनन्यचित्तः शिवभक्तियुक्तः समाचरेत् कर्म्म रसस्य तज्ज्ञः॥१८॥
अजाशकृत् तुषाग्निञ्च भूगर्त्ते त्रितयं क्षिपेत्।

---

गिरिः। असह्याग्निर्नहादोषाः निसर्गाः पारदे स्थिताः। पर्पटी पाटलीभेदी द्रावी मलकरी तथा। अन्धकरी तथा ध्वाङ्क्षी विज्ञेयाः सप्त कञ्चुकाः। तस्मादिति सीसकादिदोषात्'। शुद्धिरित्यादि शुद्धिरिति सा च द्विविधा प्रोक्ता उक्तं हि व्याधौ रसायने चैव द्विविधा सा प्रकीर्त्तिता। या शुद्धिः कथिता व्याधौ सा नेष्टा हि रसायने। रसायने तु या शुद्धिः सा व्याधावपि कीर्त्तितेति ॥९—१५॥

यथालाभं प्रकल्पयेदिति औषधप्रयोगेषु यथा प्रयोजनं तन्मात्रं वा ग्राह्यत्यमित्यर्थः ॥ १६—१८ ॥

तस्योपरि स्थितं खल्वं तप्तखल्वमिति स्मृतम् ॥१९॥
अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यश्च ।
सर्वतः सर्वसर्वेभ्यो नमस्ते रुद्ररूपिभ्यः ॥२०॥ इति रक्षामन्त्रः ।
स्नुह्यर्कसम्भवं क्षीरं ब्रह्मबीजञ्च गुग्गुलुः ।
सैन्धवं द्विगुणं मर्द्यं निगड़ोऽयं महोत्तमः ॥ २१ ॥ रसनिगड़ः ।
अथ साधारणशुद्धिः । षोड़शांशैर्भिषक् चूर्णैरेकत्र मर्दयेद्रसम् ।
प्रत्येकं प्रत्यहं दत्त्वा सप्तवारं विमर्दयेत् ॥२२॥
विशेषशुद्धिमाह । सोर्णैर्निशेष्टकाधूमजम्बीराम्बुभिरादिनम् ।
मर्द्दितः काञ्जिकैर्धौतो नागदोषं रसस्त्यजेत् ॥२३॥
विशालाङ्कोठचूर्णेन वङ्गदोषं विमुञ्चति ।
राजवृक्षो मलं हन्ति चित्रको वह्निदूषणम् ॥२४॥
चाञ्चल्यं कृष्णधूस्तूरं त्रिफला विषनाशिनी ।
कटुत्रयं गिरिं हन्ति असह्याग्निं त्रिकण्टकः ॥२५॥
प्रतिदोषं कलांशेन तत्तच्चूर्णं सकन्यकम् ।
उद्धृत्योष्णारनालेन मृत्पात्रे क्षालयेत् सुधीः ।
एवं संशोधितः सूतः सप्तकञ्चुकवर्जितः ॥२६॥ मतान्तरम् ।

---

तप्तखल्वलक्षणमाह अजाशकृदित्यादि । अथ रसनिगड़माह स्नुह्यर्केत्यादि स्नुही सीज इति लोके । अर्क आकन्दः । ताभ्यां सम्भवं यत् क्षीरं तत् । ब्रह्मबीजं पलाशबीजम् । द्विगुणमिति रसापेक्षया मिलित सर्वं द्विगुणम् ॥ १९—२१ ॥

षोड़शांशैरित्यादौ चूर्णैरिति रसमारकद्रव्याणां चूर्णैः । षोड़शांशैरित्युत्तरत्रापि सम्बध्यते विशेषाभावात् । सोर्णैरित्यादिना विशेषशुद्धिमाह ऊर्णैर्मेषरोमैः निशा हरिद्रा आदिनम् इत्यतः सप्ताहमित्युपदिशन्ति वृद्धाः । ऊर्णादिसर्वं कुमार्य्या सहितं रसात् षोड़शांशं दत्त्वा सप्ताहं मर्दितं ततः काञ्जिके प्रक्षालनीयम् । एवं विशालादिचूर्णमपि विशाला गोरक्षकर्कटी । अङ्कोठ इत्यत्र अङ्कोल इति केचित् पठन्ति । अङ्कोलः आँकोड़ इति ख्यातः । राजवृक्षः श्योणाकः तस्य

श्रीखण्डं देवकाष्ठञ्च काकजङ्घाजयाद्रवैः।
कर्कटीमूषलीकन्याद्रवं दत्त्वा विमर्दयेत्।
दिनैकं पातयेत् पश्चात् तं शुद्धं विनियोजयेत्॥२७॥मतान्तरम्।
कुमार्य्या च निशाचूर्णैर्दिनं सूतं विमर्दयेत्।
पातयेत् पातनायन्त्रे सम्यक् शुद्धो भवेद्रसः॥२८॥ मतान्तरम्।
रसस्य द्वादशांशेन गन्धं दत्त्वा विमर्दयेत्।
जम्बीरोत्थैर्द्रवैर्यामं पाच्यं पातनयन्त्रके।
पुनर्मर्द्यं पुनः पाच्यं सप्तवारं विशुद्धये॥२९॥ मतान्तरम्।
जयन्त्या वर्द्धमानस्य चार्द्रकस्य रसेन च।
वायस्याश्चानुपूर्व्वं मर्दनं रसशोधनम्॥३०॥
एषां प्रत्येकशस्तावत् मर्दयेत् स्वरसेन च।
यावच्च शुष्कतां याति सप्तवारं विचक्षणः॥३१॥
उद्धृत्योष्णारनालेन स्थाण्डे क्षालयेत् सुधीः।
सर्व्वदोषविनिर्मुक्तः सप्तकञ्चुकवर्जितः।
जायते शुद्धसूतोऽयं युज्यते सर्व्वकर्मसु॥३२॥ मतान्तरम्।
निशेष्टकाधूमरजोऽम्लपिष्टो विकञ्चुकः स्याद्धि रसेन सोर्णः।
वरा बला पावककन्यकाभिः सत्र्यूषणाभिर्म्मर्दितस्तु सूतः॥३३॥
मतान्तरम्।

---

फलमज्जा ग्राह्या। कलांशेनेति पारदस्य षोड़शांशेनेत्यर्थः। सप्तकञ्चुकवर्जित इति सीसकादिसप्तदोषवर्जित इत्यर्थः॥ २२—२६॥

श्रीखण्डमित्यादि श्रीखण्डं श्वेतचन्दनं मूषली तालमूली पातयेदित्यूर्द्धपातनायन्त्रेण॥ २७—२८॥

रसस्य द्वादशांशेनेत्यादौ पातनयन्त्रक इत्यूर्द्धपातनायन्त्रे॥ २९॥

निशेष्टकेत्यादौ। सोर्णःमेषरोमसहितः वरा त्रिफला आरनालः काञ्जिकः। अनलश्चित्रकः त्र्यूषणं त्रिकटु॥ ३०—३३॥

दिनैकं मर्दयेत् सूतं कुमारीसम्भवैर्द्रवैः।
तथा चित्रकजैः क्वाथैर्मर्दयेदेकवासरम्।
काकमाचीरसैस्तद्वत् दिनमेकन्तु मर्दयेत्॥३४॥ मतान्तरम्।

रसोनमर्दितः सूतः नागवल्लीदले स्थितः।
सर्वदोषविनिर्मुक्तो योजयेत् रसकर्मसु॥ ३५॥
त्रिफलायास्तथा क्वाथै रसो मर्द्यः प्रयत्नतः।
ततस्तेभ्यः पृथक् कृत्वा सूतं प्रक्षाल्य काञ्जिकैः॥३६॥

अथोर्द्धपातनम्। भागास्त्रयो रसस्यार्कं भागमेकं विमर्दयेत्।
जम्बीरद्रवयोगेन यावदायाति पिण्डताम्॥३७॥
तत्पिण्डं तलभाण्डस्थ मूर्द्धभाण्डे जलं क्षिपेत्।
कृत्वारनालकेनापि ततः सूतं समुद्धरेत्॥
ऊर्द्धपातनमित्युक्तं भिषग्भिः सूतशोधने॥३८॥

अथाधःपातनम्। नवनीताभ्रकं सूतं घृष्ट्वा जम्बाम्भसा दिनम्।
वानरीशिग्रुशिखिभिः सैन्धवासूरिसंयुतैः॥३९॥
नष्टपिष्टं रसं कृत्वा लेपयेदूर्द्धभाण्डकम्।
ऊर्द्धभाण्डोदरं लिप्ताऽधोभाण्डं जलसंयुतम्॥ ४०॥
सन्धिलेपं द्वयोः कृत्वा तत्यन्त्रं भुवि पूरयेत्।

---

अधुना रसायने विशेषशुद्धिमाह ऊर्द्धपातनमित्यादि। ऊर्द्धपातनमाह भाग इत्यादि अर्कभागमेकमिति ताम्रस्य चैको भागः। ऊर्द्धपातनलक्षणञ्चाह तत्पिण्डमिति। तन्त्रान्तरेऽस्य विद्याधरयन्त्रमिति संज्ञान्तरं यथा स्थालिकोपरिन्यस्त-स्थालीं सम्यक् निरोधयेत्। स्थालीमूर्द्धि जलं दत्त्वा वह्निं प्रज्वालयेदधः। एत-द्विद्याधरं यन्त्रं पातनायन्त्रमित्यपि। पातनायन्त्रमित्यूर्द्धपातनार्थत्वम्। हण्डि-कोपरितनभागेऽन्यां हण्डिकाञ्चोर्द्धमुखीं विन्यस्याधो हण्डिकाभ्यन्तरे पाच्यं सूता-दिकं निवेश्य च द्वयोः सन्धिं निरोधयेत् ततः उपरितनस्थाल्यां जलं दत्त्वा अधो वह्निं प्रज्वालयेदिति। पातनञ्च त्रिविधं ऊर्द्धपातनम्, अधःपातनं तिर्य्यक्-पातनञ्च॥ ३४—३८॥

उपरिष्टात् पुटे दत्ते जले पतति पारदः ।
अधःपातनमित्युक्तं सिद्धाद्यैः सूतकर्म्मणि ॥ ४१ ॥
अथ तिर्य्यक् पातनम् । घटे रसं विनिःक्षिप्य सजलं घटमन्यकम् ।
तिर्य्यङ्मुखं द्वयोः कृत्वा तन्मुखं रोधयेत् सुधीः ॥४२॥
रसाधो ज्वालयेदग्निं यावत् सूतो जलं विशेत् ।
तिर्य्यक् पातनमित्युक्तं सिद्धैर्नागार्जुनादिभिः ॥ ४३ ॥
अथ रोधनम् । एवं कदर्थितः सूतः षण्डत्वमधिगच्छति ।
तन्मुक्तयेऽस्य क्रियते रोधनं कथ्यते हि तत् ॥४४॥
विश्वामित्रकपाले वा काचकुप्यामथापि वा ।
सूते जलं विनिःक्षिप्य तत्र तन्मज्जनावधि ॥४५॥
पूरयेत्त्रिदिनं भूम्यां गजहस्तप्रमाणतः ।
अनेन सूतराजोऽयं षण्डभावं विमुञ्चति ॥ ४६ ॥
अथवा हिङ्गुलात् सूतं ग्राहयेत्तन्निगद्यते ।
जम्बीरनिम्बुनीरेण मर्दितो हिङ्गुलो दिनम् ॥ ४७॥
ऊर्द्धपातनयन्त्रेण ग्राह्यः स्यात् निर्मलो रसः ।
कञ्चुकैर्नागवङ्गाद्यैर्निर्मुक्तो रसकर्म्मणि ।
विना कर्म्माष्टकेनैव सूतोऽयं सर्वकर्म्मकृत् ॥ ४८ ॥
अष्टकर्म्म यथा । स्वेदनं मर्दनञ्चैव मूर्च्छनोत्थापनन्तथा ।
पातनं रोधनञ्चैव नियामनमतःपरम् ॥४९॥

---

अथ अधःपातनमाह नवनीतेति । नवनीताभ्रकं लाउया गन्धक इति स्यातः । स च सूतः समः नम्बाम्भसा जम्बीररसेन ॥ ३९—४१ ॥

अथ तिर्य्यक्पातनमाह । घटे रसमित्यादि । रोधयेदिति संवध्नयेदित्यर्थः ॥४२॥४३॥

अथ रोधनमाह एवमित्यादि । विश्वामित्रेत्यादि । विश्वामित्रकपाले नारिकेलखर्परे ॥ ४४—४६ ॥

अथ हिङ्गुलाकृष्टरसमाह । अथवेति स्पष्टम् ॥ ४७—४८ ॥

स्वेदनमित्यादिना अष्टादशरसकर्मणां मध्ये दीपनान्ता अष्टौ संस्कारा

दीपनञ्चेति संस्काराः सूतस्याष्टौ प्रकीर्त्तिताः॥५०॥ मतान्तरम्।
दरदं तण्डुलस्थूलं कृत्वा मृत्पात्रके त्रिदिनम्।
भाव्यं जम्बीररसैश्चाङ्गेर्य्या वा रसैर्बहुधा॥५१॥
ततश्च जम्बीरवारिणा चाङ्गेर्य्या रसेन परिप्लुतम्।
कृत्वा स्थालीमध्ये निधाय तदुपरि कठिनोद्धृष्टम्॥५२॥

---

उक्ताः। तेषां लक्षणं यथा रसं चतुर्गुणे वस्त्रे दिनं दोलकगतं पचेत्। वरा-व्योषाग्निकन्याक्ते काञ्जिके स्वेदनन्त्विदम्। गृहधूमेष्टकाजाजीदग्धोर्णागुड़सैन्धवैः। सकाञ्जिकैः षोड़शांशैर्मर्दनं त्रिदिनं शुभम्। वराव्ह्निकुमारीभिः सप्तधा मूर्च्छितो रसः। पात्यःपातनयन्त्रेण मूर्च्छितो भवति ध्रुवम्। मर्दयेत् कन्यका-द्रावैश्चूर्णिते राजिपादिकैः। पातयेत् पातनायन्त्रे इत्युत्थापनमीरितम्। पातनमिति ऊर्द्धादिपातनम्। रोधनं विश्वामित्रकपालेत्यादिना चोक्तम्। नियामनं यथा। सर्पाक्षिचिञ्चिकावन्ध्या भृङ्गाब्जकनकाम्बुभिः। त्रिदिनं मर्दितः सूतो नियमात् स्थिरतां व्रजेत्॥ दीपनं यथा—काशीशं पञ्चलवणं राजिका मरिचानि च। भूशिगुवीजमेकत्र टङ्कनेन समन्वितम्॥ आलोड्य काञ्जिके दोलायन्त्रे पाकाद्दिनै-स्त्रिभिः। दीपनं जायते सम्यक् सूतराजस्य जारणे॥ अष्टादशरसकर्म्मणां मध्ये दीपनान्ता अष्टौ संस्काराः संक्षेपोक्ताः ग्रासादयश्चापरे दशसंस्काराः ग्रन्थ-बाहुल्याद्भेयाः। अत्र प्रयोगार्थञ्च रसस्य चतुर्विधसंस्करणमुक्तं यथा शोधनं मूर्च्छनं बन्धनं मारणञ्च। तत्र शोधनाग्रे वाच्यं तप्तखल्लादीनां दशसंस्काररूपम्। मूर्च्छ-नञ्च द्विविधं निर्गन्धं सगन्धञ्च। निर्गन्धं रसकर्पूरादि। सगन्धञ्च कज्जलरूपं रस-गन्धं तथा रससिन्दूरादि च। उक्तञ्च गौरवं घनता यस्मिन् तेजस्वित्वञ्च दृश्यते। सोऽयं मूर्च्छितः सूतो विज्ञेयो नैव वाह्निना। निर्गन्धञ्च सगन्धं द्विविधं विद्यात्त् मूर्च्छनं सूतम्। निर्गन्धं रसकर्पूरं रससिन्दूरं रसगन्धकं विद्यात्। यस्मिन् गुरुता अरुणता तेजस्वित्वञ्च सूते दृश्यते दृढ़शिखिमध्ये तिष्ठेत् स बद्धः सूतोऽमृत-समः। बन्धनश्च कलौ सुदुष्करः साधकाभावादुपदेशाभावाच्च। रसमारणञ्च वस्तुतः कलौ नास्ति साधकाभावादुपदेशाभावाच्च। द्रवघनगुरुता चञ्चलता तेजस्वित्वञ्च न दृश्यते यत्र। तं मृतसूतं विद्यात् नैकः सर्वत्र वर्णनियमोऽस्ति॥४९—५०॥

अथ हिङ्गुलाकृष्टरसमाह दरदमित्यादि। स्थालीमध्ये हिङ्गुलं यथोक्तविधिना संस्थाप्य तदुपरि कठिनीलिप्तम् उत्तानं शरावं दत्त्वा मृदाम्बरैः सन्धिं दृढं रुन्ध्यात्

उत्तानं चारु शरावं तत्र त्रिंशद्वारं जलं देयम्।
उष्णे हेयं तथैव तदूर्द्धपातनेन निर्म्मल: शिवज:॥५३॥ मतान्तरम्।
पारिभद्ररसै: पेष्यं हिङ्गुलं याममात्रकम्।
जम्बीराणां रसैर्वाथ पचेत् पातनयन्त्रके ॥५४॥
तं सूतं योजयेत् योगे सप्तकञ्चुकवर्जितम्।
संशुद्धिमन्तरेणापि शुद्धोऽयं रसकर्म्मणि ॥५५॥
इति हिङ्गुलाकृष्टो रस:।
गन्धकेन रसं प्राज्ञ: सुदृढ़ं मर्दयेद्भिषक्।
कज्जलाभो यदा सूतो विहाय घनचापलम् ॥५६॥
दृश्यतेऽसौ तदा ज्ञेयो मूर्च्छितो रसकोविदै:।
असौ रोगचयं हन्यादनुपानस्य योगत: ॥५७॥ इति मूर्च्छनम्।
द्विपलं शुद्धसूतस्य सूतार्द्धं गन्धकं तथा।
कन्यानीरेण संमर्द्य दिनमेकं निरन्तरम्।
रुद्ध्वा तद्भूधरे यन्त्रे दिनैकं मारयेत् पुटे ॥५८॥ मतान्तरम्।
भुजङ्गवल्लीनीरेण मर्दयेत् पारदं दृढ़म्।
कर्कटीकन्दमूषायां संपुटस्थं पुटेद् गजे।
भस्म तत् योगवाहि स्यात् सर्वकर्म्मसु योजयेत्॥५९॥ मतान्तर

---

तत: पाताधो ज्वाला देया शरावोपरि वारंवारं जलं देयं किञ्चिदुष्णं च परित्यज्य पुन: जलं देयमिति। एवं त्रिंशद्वारं कृत्वा चावनामयेत्। सुशीते च पात्रे शरावमुद्घाट्य खटिकासहितं पारदं गृह्णीयात्। ततो वस्त्रे छानयित्वा वारंवारं जले काञ्जिके वा प्रक्षाल्य निर्मलं पारदं गृह्णीयादिति ॥५१॥५३॥

मतान्तरमाह पारिभद्रेति। पातनायन्त्रके इति ऊर्द्ध्वपातनायन्त्रे संशुद्धिमन्तरेण अपीति। तप्तखल्वादिशुद्धिव्यतिरेकेण अयं शुद्ध:। अत्र तप्तखल्वादिना तथा पातनादिना च शोधनं निष्प्रयोजनमिति भाव:। मूर्च्छनमाह। गन्धकेनेति। सुगमम् ॥५४॥५७॥

मारणमाह द्विपलमित्यादि। भूधरयन्त्रे इति वालुकासु समस्ताङ्गं गर्त्तं मूषा रसान्विता। दीप्तोपलै: संवृणुयात् यन्त्रं भूधरनामकमित्यादिनोक्तम् ॥५८॥

मतान्तरमाह भुजङ्गवल्लीति। भुजङ्गवल्ली पर्णपत्रम् ॥ ५९ ॥

श्वेताङ्कोठजटानीरैर्मर्द्यः सूतो दिनत्रयम्।
पुटेत्तु चान्धमूषायां सूतो भस्मत्वमाप्नुयात् ॥६०॥ मतान्तरम्।

देवदाली हंसपादी यमचिञ्चा पुनर्नवा।
एभिः सूतो विष्टष्ट्व्यो पुटनात् म्रियते ध्रुवम् ॥६१॥ इति भस्म।

भागो रसस्य त्रय एव भागा गन्धस्य माषः पवनाशनस्य।
संमर्द्य गाढं सकलं सुभाण्डे तां कज्जलीं काचघटे निदध्यात्॥६२
संरुध्य मृत्कर्पटकैर्घटीन्तां मुखे सुचूर्णां खटिकाञ्च दत्त्वा।
क्रमाग्निना त्रीणि दिनानि पक्वा तां बालुकायन्त्रगतां ततः स्यात्६३
बन्धूकपुष्पारुणमीशजस्य भस्म प्रयोज्यं सकलामयेषु।
निजानुपानैर्मरणं जराञ्च हन्त्यस्य वल्लः क्रमसेवनेन ॥६४॥

मतान्तरम्।

पलमात्रं रसं शुद्धं तावन्मात्रन्तु गन्धकम्।
विधिवत् कज्जलीं कृत्वा न्यग्रोधाङ्कुरवारिभिः ॥ ६५ ॥
भावनात्रितयं दत्त्वा स्थालीमध्ये निधापयेत्।
विरच्य कवचीयन्त्रं बालुकाभिः प्रपूरयेत् ॥ ६६ ॥
दद्यात्तदनुमन्दाग्निं भिषग्यामचतुष्टयम्।
जायते रससिन्दूरस्तरुणादित्यसन्निभः।
अनुपानविशेषेण करोति विविधान् गुणान् ॥६७॥ मतान्तरम्।

---

मतान्तरमाह श्वेताङ्कोठेत्यादि। अन्धमूषादीनि यन्त्राणि यन्त्रप्रकरणेऽनुसन्धेयानि ॥ ६० ॥

मतान्तरमाह देवदालीत्यादि। देवदाली हस्तिघोषकः। हंसपादी थानकुनीति ख्याता ॥ ६१ ॥

अथ रससिन्दूरमाह भाग इत्यादि। पवनाशनस्येति। सीसकस्य मृत्कर्पटकैः इति मृत्तिकायुक्तवस्त्रखण्डैः लेपयित्वा ॥ ६२—६४ ॥

मतान्तरमाह पलमित्यादि। अत्र रसस्य द्विपलं गन्धकस्य च द्विपलं ग्राह्यम्।

पृथक् समं समं कृत्वा पारदं गन्धकं तथा।
नवसारं धूमसारं स्फटिकं याममात्रकम् ॥ ६८ ॥
निम्बुरसेन संमर्द्य काचकुप्यां निवेशयेत्।
मुखे पाषाणखटिकां दत्त्वा मुद्रां प्रलेपयेत् ॥ ६९ ॥
सप्तभिर्मृत्तिका वस्त्रैः पृथक् संशोष्य वेष्टयेत्।
सच्छिद्रायां मृदः स्थाल्यां कुपिकां तां निवेशयेत् ॥ ७० ॥
पूरयेत् सिकतापूरैः आगलं मतिमान् भिषक्।
निवेश्य चुल्ल्यां दहनं मन्दं मध्यं खरं क्रमात् ॥ ७१ ॥
प्रज्वाल्य द्वादशं यामं साङ्गशीतं समुद्धरेत्।
स्फोटयित्वा तु मुक्ताभमूर्द्ध्वलग्नं बलिं त्यजेत् ॥
अधःस्थं रससिन्दूरं सर्वरोगेषु योजयेत् ॥७२॥

इति रससिन्दूरम्।

टङ्कणं मधु लाक्षा च ऊर्णागुञ्जायुतो रसः।
मर्दितो भृङ्गजद्रावैर्दिनैकं चालयेत् पुनः।
ध्मातो भस्मत्वमाप्नोति शुद्धकर्पूरसन्निभः ॥७३॥ मतान्तरम्।
पिष्टं पांशुपटुप्रगाढ़ममलं वज्राम्बुना नैकशः।
सूतं धातुगतं खटीकवलितं तं संपुटे रोधयेत् ॥ ७४ ॥

---

रसं शुद्धमिति पूर्वोक्तशोधनीयद्रव्यैः शोधितम्। न्यग्रोधाङ्कुरवारिभिरिति वटाङ्कुर रसैः इत्यर्थः ॥ ६५—६७ ॥

मतान्तरमाह पृथगित्यादि। नवसारं निसादलम्। मुद्रां प्रलेपयेदि सन्धिस्थानं लेपयेत्। आगलमिति काचकुपिकाया गलपर्यन्तं न तु मृद्भाण्डस्य अधःस्थं रससिन्दूरमित्यूर्द्ध्वलग्नगन्धकादधःस्थं रससिन्दूरं ग्राह्यं न तु पात्राधस्ता पात्राधस्तु न रससिन्दूरं सम्भवतीति ॥ ६८—७२ ॥

अथ रसकर्पूरमाह टङ्कनमित्यादि। ऊर्णा मेषरोमं गुञ्जा श्वेतगुञ्जा ॥७३॥

मतान्तरमाह पिष्टमित्यादि। धातुगतमिति लौहपात्रगतं खटीकवलितमिति खटिकया बद्धमुखम् ॥७४॥

अन्तस्थं लवणस्य तस्य च तले प्रज्वाल्य वह्निं दृढम् ।
घस्रं ग्राह्यमथेन्दुकुन्दधवलं भस्मोपरिस्थं शनैः ॥ ७५ ॥
तद्वल्लद्वितयं लवङ्गसहितं प्रातःप्रयुक्तं भजेत्
ऊर्द्ध्वं रेचयति द्वियाममसकृत् पेयं जलं शीतलम् ।
एतद्धन्ति च वत्सराधिकविषं षाण्मासिकं मासिकम् ।
शैलोत्थं गरलं मृगेन्द्रकुलिशोद्भूतं च तात्कालिकम् ॥ ७६ ॥

सुधानिधि रसः ।

रसकर्पूरमिति रसमञ्जरीकारः । श्वेतभस्मेति चन्द्रिका ।

मर्दयेत् रसगन्धौ च हस्तिशुण्डीद्रवैर्दृढम् ।
भूधात्रिकारसैः पिष्ट्वा पर्य्यन्तं दिनसप्ततः ॥ ७७ ॥
विघृष्य वालुकायन्त्रे मूषायां सन्निवेशयेत् ।
दिनमेकं प्रदायाग्निं मन्दं मन्दं निशावधि ॥ ७८ ॥
एवं निष्पाद्यते शीतः पीतः सूतस्तु गृह्यते ।
पर्णखण्डेन तद्गुञ्जां भक्षयेत् सततं हिताम् ॥ ७९ ॥
क्षुद्बोधं कुरुते पूर्वमुदराणि विनाशयेत् ।
जराणां नाशनः श्रेष्ठस्तद्वत् स्त्रीसुखकारकः ॥ ८० ॥
हृदयोत्साहजननः सुरूपतनयप्रदः ।
बलप्रदः सदा देहे जरानाशनतत्परः ॥ ८१ ॥
अङ्गभङ्गादिकं दोषं सर्वं नाशयति क्षणात् ।
एतस्मान्नापरः सूतो रसात् सर्वाङ्गसुन्दरात् ॥ ८२ ॥
सर्वाङ्गसुन्दरो रसः । पीतभस्मेति चन्द्रिकाकारः ॥ ८३ ॥
धान्याभ्रकं रसं तुल्यं मारयेत् मारकद्रवैः ।

---

सर्वाङ्गसुन्दरमाह मर्दयेदिति । रसगन्धकौ समौ कज्जलीकृत्य हस्तिशुण्डी-रसैर्भूम्यामलकीरसैश्च दिनसप्तकं विघृष्य मूषायां निरुध्य वालुकायन्त्रे कृत्वा दिनमेकं पचेत् । पीत इति पीतवर्णः सूतो गृह्यते इति ॥ ७५—८२ ॥

दिनैकं तेन कल्केन वस्त्रं लिप्त्वा तु वर्त्तिकाम् ॥ ८४ ॥
विलिप्य तैलैर्वर्त्तिं तामेरण्डोत्थैः पुनः पुनः ।
प्रज्वाल्य तदाज्यभाण्डे गृह्णीयात् पतितञ्च यत् ॥ ८५ ॥
कृष्णभस्म भवेत्तच्च पुनर्मर्द्यं नियामकैः ।
दिनैकं पातयेत् यन्त्रे कन्दुकाख्ये न संशयः ॥८६॥
मृतः सूतो भवेत् तच्च तत्तद्रोगेषु योजयेत् ॥८७॥ कृष्णभस्म
श्वेतं पीतं तथा रक्तं कृष्णञ्चेति चतुर्विधम् ।
लक्षणं भस्म सूतानां श्रेष्ठं स्यादुत्तरोत्तरम् ॥ ८८ ॥
द्वौ भागौ तुषदग्धस्य चैका वल्मीकमृत्तिका ।
लौहकिट्टस्य भागैकं श्वेतपाषाणभागिकम् ॥८९॥
नरकेशं समं पश्चाच्छागीक्षीरेण पेषयेत् ।
याममात्रं दृढ़ं पश्चात् तेन मूषां प्रकल्पयेत् ॥ ९० ॥
शोषयित्वा तु संलिप्य तत्कल्कैः सन्निरोधयेत् ।
वज्रमूषियमाख्याता सम्यक् पारदसाधिका॥९१॥ मूषाकरण
सर्पाक्षी वन्ध्यकर्कोटी कञ्चुकी यमचिञ्चिका ।
शतावरी शङ्खपुष्पी शरपुङ्खा पुनर्नवा ॥ ९२ ॥
मण्डूकपर्णी मत्स्याक्षी ब्रह्मदण्डी शिखण्डिनी ।
अनन्ता काकजङ्घा च काकमाची कपोतिका ॥ ९३ ॥
विष्णुक्रान्ता सहचरा सहदेवी महाबला ।
बला नागबला मूर्वा चक्रमर्दः करञ्जकः ।
पाठा तामलकी नीली जालिनी पद्मचारिणी ॥ ९४ ॥

---

कृष्णभस्माह धान्याभ्रकमित्यादि । मारकद्रवैरिति वक्ष्यमाणमारकद्रव्यरसैः ॥ ८४—८८ ॥

मूषाकरणमाह द्वौ भागाविति । तुषदग्धस्येति अर्द्धदग्धतुषस्य द्वौ भागाविति ॥ ८८ ॥ ९१ ॥

घण्टा त्रिकण्टा गोजिह्वा कोकिलाची घनध्वनिः।
आखुपर्णी चीरिणी च त्रपुषी मेषशृङ्गिका ॥ ९५ ॥
कृष्णवर्णा च तुलसी सिंहिका गिरिकर्णिका।
एता नियामकौषध्यः पुष्पमूलदलान्विताः ॥ ९६ ॥
इति नियामकगणः।

घनवचाचित्रकगोक्षुराः कटुतुम्बी दन्तिकाजातिः।
सर्पाक्षी शरपुङ्खा कन्या चाण्डालिनी कन्दम् ॥९७॥
विषमुष्टिवज्रवल्ल्यौ लज्जा देवदालिका लाक्षा।
सहदेवी नीपकणा निर्गुण्डी चक्रलाङ्गलिके ॥९८॥
मानार्कचन्द्ररेखा रविभक्ता काकमाचिका चार्कः।
विष्णुक्रान्ता वायसतुण्डी वञ्ची वला शुण्ठिका चैव ॥९९॥
कोषातकी जयन्ती वाराही हस्तिशुण्डिका रम्भा।
मत्स्याक्षी यमचिञ्चा हरिद्रे द्वे पुनर्नवाद्वितयम् ॥१००॥
धूस्तूरकाकजङ्घा शतावरी कञ्चुकी चैव बन्ध्या।
तिलभेकपर्णिके दूर्वा मूर्वा हरीतकी तुलसी ॥१०१॥
गोकण्टकाखुपर्ण्यौ कर्कटीबन्धुवर्णलता च।
मूषली हिङ्गु गुडूची शिग्रु गिरिकर्णिका महाराष्ट्री ॥१०२॥
मार्कवसैन्धवसरणी सोमलता श्वेतसर्षपी लशुनञ्च।
हंसपदी व्याघ्रपदी किंशुकभल्लातकेन्द्रवारुणिकाः ॥१०३॥
सर्वत्वार्द्धांशं वा अष्टादशाधिका वापि द्रव्यम्।
रसमारणमूर्च्छादौ च युक्तिज्ञैर्विधिवदुपयोज्यम् ॥१०४॥
इति मारकवर्गः।

---

अथ नियामकगणमाह सर्पाचीत्यादि सर्पाक्षी गन्धनाकुली। कञ्चुकी चीरिशङ्खः ॥ ९२—९६ ॥

अथ मारकगणमाह घनवचेति। घनं मुस्तकं नीपं कदम्बः चन्द्रलेखा सोमराजी रविभक्ता पाटमाधा इति ख्याता ॥ ९७—१०४ ॥

अम्लवेतसजम्बीरलुङ्गाम्लचणकाम्लकाः ।
नागरङ्गं तिन्तिड़ी च चिञ्चाफलञ्च निम्बुकम् ॥१०५॥
चाङ्गेरी दाड़िमञ्चैव करमर्दं तथैव च ।
एष चाम्लगणः प्रोक्तो वेतसाम्लसमायुतः॥१०६॥ अम्लगणः।
लवणानि च कथ्यन्ते सामुद्रं सैन्धवं विड़म् ।
सौवर्च्चलं रोमकञ्च चूल्लिकालवणं तथा ॥१०७॥ लवणवर्गः।
मूत्राणि हस्तिकरभमहिषीखरवाजिनाम् ।
गोजावीनां स्त्रियां पुंसां मूत्रवर्ग उदाहृतः॥१०८॥इति मूत्रवर्गः
गुञ्जाटङ्कणमध्वाज्य गुड़ा द्रावकपञ्चकाः ।
पित्तं पञ्चविधं मत्स्यगवाश्वरुरुवर्हिजम्॥१०९॥ द्रावकपित्तवर्गौ
स्वर्जिकाटङ्कणञ्चैव यवक्षार उदाहृतः ॥११०॥ क्षारवर्गः।
प्रातरेव पुरतो विरेचनं तद्दिनोपवसनं विधाय च ।
तत्परेऽहनि च पथ्यसेवनंतत्परेऽहनि च रसेन्द्रसेवनम् ॥११
बुद्धिस्मृतिप्रभाकान्तिबलञ्चैव रसस्तथा ।
वर्द्धन्ते सर्व एवैते रससेवाविधौ नृणाम् ॥११२॥
इति रससेवाक्रमफले ।

---

अम्लवर्गमाह अम्लवेतसेति । लुङ्गाम्लं मातुलुङ्गम् ॥ १०५—१०६ ॥

लवणवर्गमाह लवणानीति। सामुद्रं करकचमिति ख्यातं रोमकं रोमदेशी नदीभवम् ॥ १०७ ॥

मूत्रवर्गमाह मूत्राणीत्यादि। करभः उष्ट्रः, खरः गर्दभः अवीनामि मेषाणाम् ॥ १०८ ॥

अथ द्रावकवर्गमाह गुञ्जेति। गुञ्जा श्वेतगुञ्जा धातूनां द्रवीकरणत्वात् द्रावके पञ्चपित्तमाह मत्स्येत्यादि। तन्त्रान्तरे तु तदन्यथा पठ्यते यथा वाराहश [ माहिषमात्स्यमायूरपित्तकम् । पञ्चपित्तमिति ख्यातं सर्वेष्वेव हि कर्मसु इति ॥१

अथ क्षारवर्गमाह स्वर्जिकेति । स्वर्जिका साजिमाटीति लोके ख्याता ॥१

रससेवाक्रममाह । विरेचनमिति च आत्यन्तिकशोधनोपलक्षितं कफान्तविरेच

हितं मुद्गाम्बु दुग्धाज्यं शाल्यन्नञ्च विशेषतः।
शाकं पौनर्नवं वास्तु मेघनादञ्च यूथिकाम्।
लवणं मागधीं मुस्तं पद्ममूलानि भक्षयेत् ॥११३॥

इति पथ्यकथनम्।

अनुपानन्तु दातव्यं ज्ञात्वा रोगादिकं भिषक्।
कूष्माण्डं कर्कटीञ्चैव कलिङ्गं कारवेल्लकम् ॥११४॥
कुसुम्भिका च कर्कोटी कलम्बी काकमाचिका।
ककाराष्टकमेतद्धि वर्जयेत् रसभक्षकः॥११५॥ रसशोधनविधिः

गन्धकं वज्रवैक्रान्तं वज्राभ्रं तालकं शिला।
खर्परं शिखितुण्डञ्च विमलं हेममाक्षिकम् ॥११६॥
काशीशं कान्तपाषाणं वराटाञ्जनहिङ्गुलम्।
गैरिकं शङ्खभूनागं टङ्कणञ्च शिलाजतु।
एते चोपरसाः प्रोक्ताः शोध्याः साध्या विधानतः ॥११७॥

तत्रादौ गन्धकोत्पत्तिशोधनञ्चाह।—

श्वेतद्वीपे पुरा देव्याः क्रीड़न्त्याः प्रसृतं रजः।
क्षीरार्णवे तु स्नातायाः दुकूलं रजसान्वितम्।
धौतं तत् सलिले तस्मिन् गन्धको गन्धवत् स्मृतः ॥११८॥

---

मिति। पथ्यसेवनमिति वक्ष्यमाणरससेवनोपयोगि पथ्यं भक्षयेत्। एतच्च रसायनोपलक्षितं रससेवनं न च रोगोपशमनार्थमिति। रोगे च वमनविरेचनाभ्यां शुद्धौ देहे प्रयोज्यः। येषु वमनविरेचनादिकमविधेयं तेषु च तद्व्यतिरेकेणापीति ॥ १११ ॥ ११२ ॥

अथ पथ्यमाह हितमित्यादि। मुद्गाम्बु मुद्गयूषम् ॥ ११३ ॥

अपथ्यमाह कूष्माण्डमित्यादि स्पष्टम् ॥११४॥११५॥ इति रसशोधनाधिकारः।

रसशोधनानन्तरमुपरसप्रकरणमाह। प्रथमतः तत्र उपरसानां नामान्याह गन्धकेत्यादि। वज्रं हीरकम्। वैक्रान्तं दग्धहीरकम्। शिखितुण्डं शिखिग्रीवम्। हेममाक्षिकं स्वर्णमाक्षिकम्। अञ्जनं रसाञ्जनम्॥ ११६॥११७ ॥

अथ गन्धकोत्पत्तिमाह श्वेतद्वीप इत्यादि। दुकूलं वस्त्रम् ॥ ११८ ॥

चतुर्धा गन्धकः प्रोक्तो रक्तः पीतोऽसितः सितः ।
रक्तो हेमक्रियासूक्तः पीतश्चैव रसायने ।
व्रणादिलेपने श्वेतः श्रेष्ठः कृष्णः सुदुर्लभः ॥११९॥
अशुद्धगन्धः कुरुते तु तापं कुष्ठं भ्रमं पित्तरुजां करोति ।
रूपं बलं वीर्य्यसुखं निहन्ति तस्मात् सुशुद्धो विनियोजनीयः॥१२॥
गन्धको गन्धपाषाणः शुकपुच्छः सुगन्धकः ।
सौगन्धिकः शुल्वरिपुः पामारिर्नवनीतकः ॥१२१॥
साज्यं भाण्डे पयःक्षिप्त्वा मुखं वस्त्रेण बन्धयेत् ।
तत्पृष्ठे गन्धकं क्षिप्त्वा शरावेण पिधापयेत् ॥ १२२ ॥
भाण्डं निक्षिप्य भूम्यन्तरूर्द्ध्वे देयं पुटं लघु ।
ततः क्षीरे द्रुतं गन्धं शुद्धं योगेषु योजयेत् ॥१२३॥ मतान्तर
लौहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत् ।
तप्ते तप्ते तत् समानं क्षिपेत् गन्धकजं रजः ॥१२४॥
विद्रुतं गन्धकं दृष्ट्वा दुग्धमध्ये विनिक्षिपेत् ।
एवं गन्धकशुद्धिः स्यात् सर्वरोगेषु योजयेत् ॥ १२५ ॥ गन्धकशुद्धि
शुद्धगन्धो हरेद्रोगान् कुष्ठमृत्युजरादिकान् ।
अग्निकारी महानुष्णो वीर्य्यवृद्धिं करोति च ॥१२६॥

---

चतुर्धेत्यादौ । श्रेष्ठो हेमादिषु सर्वत्र प्रशस्ततरः । अशुद्धगन्धस्य दोषमा अशुद्धेत्यादि । पित्तरुजामिति पित्तकृतविकारान् । अथ गन्धकपर्य्यायमा गन्धकेत्यादि ॥ ११९—१२१ ॥

अथ गन्धकशोधनमाह साज्यमित्यादि । भाण्डे साज्यं पयः क्षिप्त्वा घृता सूक्ष्मवस्त्रेण मुखमाच्छाद्य चूर्णितं गन्धकं तस्योपरि संस्थापयेत् । ततः शरावे णाचद्दुखमाच्छाद्य सन्धिमालेपयेत् ततश्च यन्त्रं भूम्यन्तः निधाय उपरिष्टा गोमयाग्निना लघु पुटं देयं तेन पुटेन द्रवीभूतगन्धो निम्नस्थदुग्धमध्ये यदा पत तदा तमुद्धृत्य प्रक्षाल्य आतपे शोषयित्वा चूर्णयेत् एवं वारद्वयं त्रयं कुर्य्यात् ॥ १२२ ॥ १२३ ॥

अन्यच्च । गन्धश्चातिरसायनः सुमधुरः पाके कटूष्णान्वितः
कण्डूकुष्ठविसर्पदर्पदलनो दीप्तानलः पाचनः ।
आमोन्मन्थनशोधनो विषहरः सूताच्च वीर्य्यप्रदः
गौरीपुष्पभवस्तथा क्रिमिहरः स्वर्णाधिकं वीर्य्यकृत् ॥१२७॥

इति गन्धकगुणकथनम् ।

अथ वज्रशोधनमाह ।—

पार्श्वपीड़ां पाण्डुरोगं हृल्लासं दाहसन्ततिम् ।
रोगानीकं गुरुत्वञ्च धत्ते वज्रमशोधितम् ॥१२८॥
व्याघ्रीकन्दगतं वज्रं दोलायन्त्रे विपाचितम् ।
सप्ताहं कोद्रवक्वाथे कौलत्थे विमलं भवेत् ॥१२९॥ शोधनम् ।
व्याघ्रीकन्दगतं वज्रं दोलायन्त्रे विपाचयेत् ।
अहोरात्रात् समुद्धृत्य हयमूत्रेण सेचयेत् ॥१३०॥

---

मतान्तरमाह लौहपात्रे इत्यादि । वदराङ्गारोपरि लौहपात्रं विन्यस्य घृतं निक्षिपेत् तप्ते च घृते चूर्णितं गन्धकं दत्त्वा गण्डिकया सञ्चालयेत् यदा तैलवत् द्रवीभवति तदा दुग्धपरिपूतपात्रे घृताक्तसूक्ष्मवस्त्रेण पिहितमुखे ढालयेत् एवं पुनः पुनः कुर्य्यात् । तदनु प्रक्षाल्य आतपे शोषयित्वा चूर्णयेदिति ॥ १२४ ॥ १२५ ॥

गन्धकगुणमाह शुद्धगन्ध इत्यादि ॥ १२६—१२७ ॥

वज्रशोधनमारणादिकमाह अथ वज्रेति । वज्रं हीरकं यद्यपि अत्र वज्रलक्षणं नोक्तं तथापि तन्त्रान्तरमनुसर्त्तव्यं यथा स्वच्छं विद्युत्प्रभं स्निग्धं सुन्दरं लघुलेखनम् । षड़ारं तीक्ष्णधारञ्च सुशास्यारं श्रियं दिशेत् । भस्माभं काकपादञ्च रेखाक्रान्तञ्च वर्त्तुलम् । आधारमलिनं विन्दु संत्रासि स्फुटितं तथा । नीलाभं चिपिटं रूक्षं तद्वज्रं दोषलं त्यजेत् । स तु श्वेतः स्मृतो विप्रो लोहितः क्षत्रियो मतः । पीतो वैश्योऽसितः शूद्रश्चतुर्वर्णात्मकश्च सः । रसायने मतो विप्रः सर्वसिद्धिप्रदायकः । क्षत्रियो व्याधिविध्वंसी जरामृत्युहरः परः । वैश्यो धनप्रदः प्रोक्तस्तथा देहस्य दार्ढ्यकृत् । शूद्रो नाशयति व्याधीन् वयःस्तम्भं करोति च । स्त्रीपुंनपुंसकाश्चैते लक्षणीयाश्च लक्षणैः । सुवृत्ताः फलसम्पूर्णास्तेजोयुक्ता बृहत्तराः । पुरुषास्ते समाख्याता रेखाविन्दुविवर्जिताः । रेखाविन्दुसमायुक्ताः षड़स्रास्ते

वन्ध्याक्षीरेण वा सिञ्चेत् कुलिशं विमलं भवेत् ॥१३१॥

मतान्तरम्।

त्रिवर्षारूढ़कार्पासमूलमादाय पेषयेत्।
त्रिवर्षनागवल्ल्यास्तु निजद्रावैः प्रपेषयेत् ॥१३२॥
तद्गोलके क्षिपेद्वज्रं रुद्ध्वा गजपुटे पचेत्।
एवं सप्तपुटेनैव म्रियते कुलिशं ध्रुवम् ॥१३३॥ मतान्तरम्।
कांस्यपात्रे तु भेकस्य मूत्रे वज्रन्तु निक्षिपेत्।
त्रिःसप्तकृत्वः सन्तप्तं वज्रमेवं मृतं भवेत् ॥१३४॥
अथान्यः। त्रिःसप्तकृत्वः सन्तप्तं खरमूत्रेण सेचयेत्।
मत्कुणैस्तालकं पिष्ट्वा तद्गोले कुलिशं क्षिपेत् ॥१३५॥
प्रध्मातं वाजिमूत्रेण सिक्तं पूर्वक्रमेण तु।
भस्मीभवति तद्वज्रं वज्रवत् कुरुते तनुम् ॥१३६॥

---

स्त्रियः स्मृताः। त्रिकोणाश्च सुदीर्घाश्च ते विज्ञेया नपुंसकाः। तेऽपि स्युः पुरुषा श्रेष्ठा रसबन्धनकारिणः। स्त्रियः कुर्वन्ति कायस्य कान्तिं स्त्रीणां सुखप्रदाः नपुंसकास्त्ववीर्याः स्युरकामाः सत्त्ववर्जिताः। स्त्रियः स्त्रीभ्यः प्रदातव्याः क्लीबे क्लीबं प्रयोजयेत। सर्वेभ्यः सर्वदा देयाः पुरुषाः वीर्यवन्धना इति। अथ अशुद्धवज्र दोषमाह पार्श्वपीड़ेति। रोगानीकं रोगसमूहम्। अशोधितवज्रस्य दोषपरि हरणाय शोधनमाह व्याघ्रीकन्देति व्याघ्री कण्टकारिका तस्या मूलपिण्डान्तर्गतं वज्रं कोद्रवक्काथैः कौलत्थैर्वा क्वाथैर्दोलायन्त्रे सप्ताहं पचेदित्यर्थः ॥१२८॥१२९॥

मतान्तरमाह व्याघ्रीकन्देति। प्रागुक्तप्रकारेण पाचितं वज्रम् अश्वमूत्रेण वन्ध्या क्षीरेण वा सिञ्चेदिति भावः ॥ १३०॥१३१ ॥

वज्रमारणविधिमाह त्रिवर्षेत्यादि। त्रिवर्षारोपितस्य कार्पासस्य मूलमादाय त्रिवर्षारूढ़नागवल्ल्या रसैः पेषयेत् तत्पिण्डान्तर्निहितं सुशुद्धं वज्रं गजपुटे सप्तधा पचेदित्यर्थः ॥ १३२ ॥ १३३ ॥

मतान्तरमाह कांस्येत्यादि स्पष्टम्। अन्यमतमाह त्रिःसप्तकृत्व इत्यादि। त्रिःसप्तेत्येकविंशतिवारं सन्तप्तं वज्रं गर्दभमूत्रेण सेचयेत्। ततः मत्कुणं हरि

आयुष्यं सौख्यजननं बलरूपप्रदं तथा।
रोगघ्नं मृत्युहरणं वज्रभस्म भवत्यलम् ॥१३७॥ इति मारणम्।
वैक्रान्तं वज्रवच्छोध्यं भातं तत् हयमूत्रके।
हिमं तद्भस्म संयोज्यं वज्रस्थाने विचक्षणैः ॥१३८॥ मतान्तरम्।

वैक्रान्तं वज्रवच्छोध्यं मारणञ्चैव तस्य तत्।
हयमूत्रेण तत्सेच्यं तप्तं तप्तं त्रिसप्तधा ॥१३९॥
ततश्चोत्तरवारुण्याः पञ्चाङ्गे गोलके क्षिपेत्।
रुद्ध्वा मूषापुटे पाच्यं उद्धृत्य गोलके पुनः ॥१४०॥
क्षिप्त्वा रुद्ध्वा पचेदेवं यावत्तत् भस्मतां व्रजेत्।
भस्मीभूतञ्च वैक्रान्तं वज्रस्थाने नियोजयेत् ॥१४१॥

इति वैक्रान्तशोधनमारणम्।

अभ्रकं गिरिजावीजममलं गगनाह्वयम्।
तत्र कृष्णाभ्रके वज्रं पीतात्मनि तु ग्राहिकम् ॥१४२॥
सिताभ्रके तारकं स्याद्गौरणं रक्तकं वरम्।
सुप्रशस्तं कठोराङ्गं गुरु कज्जलसन्निभम् ॥१४३॥



---

तालपिण्डान्तर्निहितं कृत्वा दहेत् ततस्तं च पिण्डं वाजिमूत्रेण सेचयेत् एवमेकविंशतिवारं कुर्य्यात् ॥ १३४—१३६ ॥

मृतवज्रस्य गुणमाह आयुष्यमित्यादि। आयुष्यमायुष्करम् ॥ १३७ ॥

वैक्रान्तशोधनमारणादिकमाह वैक्रान्तमित्यादि। वैक्रान्तं दग्धहीरकम्। वैक्रान्तं वज्रवत्शोधनीयं मारणीयञ्च। मतान्तरे तु एकविंशतिवारं भातं तत् हयमूत्रेण सेचयेत्। ततः उत्तरवारुण्या मूलपत्रफलपुष्पवल्कलरूपं पञ्चाङ्गं निष्पिष्य तन्मध्ये तत्संशुद्धं वैक्रान्तं निधाय मूषापुटे पचेत्। एवं वारवार कुर्य्यात् यावत् भस्मतां याति ॥ १३८—१४१ ॥

अथाभ्रकशोधनमारणादिकमाह तत्रेति। तेषां वज्राभ्रलक्षणमाह सुप्रशस्तेति क्षूनं भवेदिति वह्नौ क्षिप्तं सत् स्फीततां न याति अन्ये तु नैवोक्षूनं भवेदित्यत्र नैव शूलं भवेदिति पठन्ति। तन्मते पीतादीनि त्राणि शूलकराणि वज्राभ्रन्तु

यन्न शब्दायते वह्नौ नैवोच्छूनं भवेदपि।
सदाकरसमुद्भूतं वज्रेति प्रथितं घनम् ॥१४४॥
पिनाकं दर्दुरं नागं वज्रञ्चेति चतुर्विधम्।
ध्मातमभ्रं दलचयं पिनाकं विसृजत्यलम् ॥१४५॥
फूत्कारं भुजगः कुर्य्यात् दर्दुरं भेकशब्दवत्।
चतुर्थञ्च वरं ज्ञेयं न वह्नौ विकृतिं व्रजेत् ॥१४६॥
कुष्ठप्रदं पिनाकं स्याद्दर्दुरं मरणप्रदम्।
नागं देहगतं नित्यं व्याधिं कुर्य्याद् भगन्दरम् ॥१४७॥
रसे रसायने चैव योज्यं वज्राभ्रकं प्रिये !।
तस्माद्वज्राभ्रकं ग्राह्यं व्याधिवार्द्धक्यमृत्युजित् ॥१४८॥
अशुद्धाभ्रं निहन्त्यायुर्वर्द्धयेत् मारुतं कफम्।
आहत्योच्छादयेद्गात्रं मन्दाग्निक्रिमिवर्द्धनम् ॥१४९॥
पादांशं शालिसंयुक्तमभ्रकं कम्बलोदरे।
त्रिरात्रं स्थापयेत् नीरे तत् क्लिन्नं मर्दयेद्दृढ़म् ॥१५०॥

---

न शूलकरमिति। यदि अपि अत्र महागुणत्वात् दृढ्व्यवहारात् सर्वरोगहन्तृत्वाच्च वज्राभ्रगुणमत्रोक्तं तथापि च इतरासां याच्छिकादीनां गुणदोषं व्यवहारसौकर्य्यार्थं तन्त्रान्तरेऽनुसर्त्तव्यम्। यथा—विप्रक्षत्रियविट्शूद्रभेदात् तत् स्याच्चतुर्विधम्। क्रमेणैव सितं रक्तं पीतं कृष्णं च वर्णतः। प्रशस्यते सितं तारे रक्तं तत्तु रसायने पीतं हेमनि कृष्णन्तु गदेषु भूतयेऽपि च इति। तत्तु वज्राभ्रं चतुर्विधं पिनाकदर्दुरनागर-भेदात्। यदि अपि वज्रमिति सामान्येनैव पूर्वमुक्तं तथापि तदेकदेशं तत्तु न विशेषतो दोषाय्हमिति। यथा भारतशब्देन समग्रभूभागोक्तोऽपि तदन्तर्गतवर्ष-मात्रोऽपि उपलभ्यते। पिनाकादीनां लक्षणमाह ध्मातमित्यादि। फूत्कारं भुज इति नागन्तु वह्नौ नागवत् फूत्कारं परिमुञ्चति। पिनाकादीनां साधारणगुणदोष-माह कुष्ठप्रदमित्यादि। अशुद्धाभ्रस्य दोषमाह। अशुद्धाभ्रेति स्पष्टम् ॥१४२—१४९॥

अभ्रस्य शोधनार्थं धान्याभ्रमाह पादांशेति। वालुकारहितमभ्रं शालिधान्येन

कम्बलाद्गलितं श्लक्ष्णं वालुकारहितञ्च यत् ।
तद्धान्याभ्रमितिप्रोक्तमभ्रमारणसिद्धये ॥१५१॥ मतान्तरम् ।
त्रिफलाक्काथगोमूत्रक्षीरकाञ्जिकसेचितम् ।
भस्त्राग्नौ सप्तधा व्योम तप्तं तप्तं विशुध्यति ॥१५२॥
अथवा वदरीक्काथे ध्मातमभ्रं विनिक्षिपेत् ।
मर्दितं पाणिना शुष्कं धान्याभ्रादतिरिच्यते १५३॥ मतान्तरम्
अगस्त्यपुष्पतोयेन पिष्टं शूरणकन्दगम् ।
गोष्ठभूमिगतं मासं जायते रससन्निभम्॥१५४॥ अभ्रशोधनम्
वज्राभ्रकं समादाय निःक्षिप्य स्थालिकोदरे ।
रम्भादिक्षारतोयेन पचेद् गोमयवह्निना ॥ १५५ ॥
यावत् सिन्दूरसङ्काशं न भवेत् स्थालिकावहिः ।
सेचनीयं ततः क्षीरैस्ततः सूक्ष्मं विचूर्णयेत् ॥१५६॥ मतान्तरम् ।
धान्याभ्रकं समादाय मुस्ताक्काथैः पुटत्रयम् ।
तद्वत् पुनर्नवानीरैः कासमर्दरसैस्तथा ॥ १५७ ॥
नागवल्लीरसैः सूर्य्यक्षीरैर्देयं पृथक् पृथक् ।
दिनं दिनं मर्दयित्वा क्काथैर्वटजटोद्भवैः ॥१५८॥
दत्त्वा पुटत्रयं पश्चात् त्रिःपुटेत् मूषलीजलैः ।
त्रिर्गोक्षुरकषायेण त्रिः पुटेत् वानरीरसैः ॥१५९॥

---

सह कम्बले बद्धा त्रिदिनं नीरे स्थापनीयं ततस्तत् क्लिन्नमभ्रं मर्दयेत् यत्तु कम्बलात् गलति तत् धान्याभ्रकमिति ॥१५०॥१५१॥

मतान्तरशोधनमाह त्रिफलेति । व्योम इति अभ्रम् । अन्यमतमाह अथवेति । ध्मातमभ्रं वदरीक्काथे निक्षिपेत् तत्र आतपसंयोगात् संशोष्य पाणिना क्षालयेच्चेत्यर्थः ॥१५२॥१५३॥

मतान्तरमाह अगस्त्यपुष्पेति । अगस्त्यपुष्पं वकपुष्पं तस्य रसेन पिष्टमभ्रकं वन्यशूरणकन्दमध्ये निरुध्य गोगृहभूमितले मासं स्थापयेदिति भावः ॥१५४॥

मोचकन्दरसैः पाच्यं त्रिरात्रं कोकिलाक्षकैः ।
रसैः पुटेल्लोध्रकैस्तु क्षीरादेकं पुटेत् पुनः ॥१६०॥
दध्ना घृतेन मधुना स्वच्छया सितया तथा ।
एकमेकं पुटं दद्यादभ्रस्यैवं मृतिर्भवेत् ॥१६१॥
सर्वरोगहरं व्योम जायते योगवाहिकम् ।
कामिनीमददर्पघ्नं शस्तं पुंस्त्वोपघातिनाम् ।
वृष्यमायुष्करं शुक्रवृद्धिसन्तानकारकम् ॥१६२॥

अथ मारकगणः ।—

तण्डुलीयकवृहतीनागवल्लीपिण्डतगरपुनर्नवा हिलमोचिका मण्डूकपर्णी ।
तिक्ताखुपर्णिका मदनार्का वपि लक्ष्मतमाल्यकाभिः ॥१६३॥

मतान्तरम् ।

रम्भादिनाभ्रं लवणेन पिष्ट्वा चक्रीकृतं तद्दलमध्यवर्त्ति ।
दग्धेन्धनेषु व्यजनानिलेन स्नुह्यर्कमूलाखुपुटेन सिद्धम् ॥१६४॥

मतान्तरम् । धान्याभ्रकस्य भागैकं भागौ द्वौ टङ्कणस्य च ।
पिष्ट्वा तदन्धमूषायां रुद्ध्वा तीव्राग्निना पचेत् ।
स्वभावं शीतलं चूर्णं सर्वयोगेषु योजयेत् ।॥ १६५ ॥

मतान्तरम् । धान्याभ्रकं दृढं मर्द्यमर्कक्षीरैर्दिनावधि ।
वेष्टयेदर्कपत्रेण चक्राकारन्तु कारयेत् ॥ १६६ ॥
कुञ्जराख्ये पुटे दग्ध्वा सप्तवारान् पुनःपुनः ।

---

अभ्रमारणमाह वज्राभ्रकमित्यादि । रम्भादिक्षारतोयेनेति वक्ष्यमाणरम्भादिगणीक्तक्षारतोयेन । मतान्तरमाह धान्याभ्रकमित्यादि स्पष्टम् ॥१५५—१६२॥

अथ मारकगणमाह तण्डुलीयकेत्यादि ।—एभिस्तण्डुलीयकैर्व्यस्तैः समस्तैर्वा प्रपुटेदित्यर्थः ॥ ६३ ॥

मतान्तरमाह रम्भादीत्यादि ।—रम्भादिना वक्ष्यमाण रम्भादिगणेन । व्यजनानिलेनेति ।—व्यजनानिलेन प्रज्वलितेषु दग्धेन्धनेषु इत्यर्थः ॥ १६४ ॥

ततो वटजटाक्वाथैस्तद्वद्देयं पुटत्रयम्।
म्रियते नात्र सन्देहः सर्वरोगेषु योजयेत्॥ १६७॥
मतान्तरम्। दुग्धत्रयं कुमार्य्यम्बु गङ्गापत्रं नृमूत्रकम्।
वटशुङ्गमजारक्तमेभिरभ्रं विमर्दयेत्॥ १६८॥
शतधा पुटितं भस्म जायते पद्मरागवत्।
निश्चन्द्रकं भवेत् व्योम शुद्धदेहे रसायनम्॥ १६९॥
निश्चन्द्रमारितं व्योम रूपं वीर्य्यं दृढ़ं तनुम्।
कुरुते नाशयेत् मृत्युं जरारोगकदम्बकम्॥१७०॥ अभ्रमारणम्।
हरितालं तालमालं मालं शैलूषभूषणम्।
पिञ्जकं रोमहरणं तालकं पीतमित्यपि।
तालकं पटलं पिण्डं द्विधा तत्राद्यमुत्तमम्॥ १७१॥
अशुद्धतालमायुघ्नं कफमारुतमेहकृत्।
तापस्फोटाङ्गसङ्कोचान् कुरुते तेन शोधयेत्॥ १७२॥
शुद्धं स्यात्तालकं स्विन्नं कूष्माण्डसलिले ततः।
चूर्णोदके पृथक् तैले तस्मिन् पूते न दोषकृत्॥ १७३॥
अन्यच्च। तालकं कणशः कृत्वा दशांशेन च टङ्गनम्।

---

धान्याभ्रकमित्यादौ।—कुञ्जराख्यपुट इति गजपुटे॥ १६५—१६९॥

मारिताभ्रस्य गुणमाह निश्चन्द्रकेति।—यद्यपि निश्चन्द्रमारणमभ्रस्य सामान्येन एव पूर्वमुक्तं तथापि अत्र निश्चन्द्रमिति विशेषणेन निश्चन्द्रकत्वं तस्य विशेषमारण-लक्षणमेव ज्ञेयम्। रोगकदम्बकमिति रोगसमूहम्। सर्वरोगहरमिति॥१७०॥

हरितालशोधनमारणादिकमाह हरितालमित्यादि। तालकं हि द्विविधं पत्राख्यं पिण्डञ्च तयोराद्यं स्वर्णवर्णं गुरु स्निग्धं अभ्रपत्रवत् सपत्रं गुणाढ्यं रसायनञ्च। पिण्डञ्च निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वं गुरु स्त्रीपुष्पहारकं स्वल्पगुणञ्च। ताभ्यां पत्राख्यं ग्राह्यं भिषग्भिः यदत्र मारणजारणाद्यर्थं प्रयोक्तव्यं तदपि पत्राख्यञ्चेति। पटलमिति पत्राख्यम्। वंशपत्रेति लोके॥ १७१॥

अशुद्धतालकस्य दोषमाह अशुद्धमित्यादि। आयुघ्नमिति मृत्युपदम॥१७२॥

शुद्धमित्यादि। कूष्माण्डसलिले स्विन्नं शुद्धतालं चूर्णोदके तिलतैले पृथक्

जम्बीरोत्थैर्द्रवैः चाल्यं काञ्जिकैः चालयेत् पुनः १७४ ॥
वस्त्रे चतुर्गुणे बद्धा दोलायन्त्रे दिनं पचेत् ।
संचूर्ण्य आरणालेन दिनं कूष्माण्डजैः रसैः ।
स्वेद्यं वा शाल्मलीतोयैस्तालकं शुद्धिमाप्नुयात् ॥ १७५ ॥
तालकं पोट्टलीं बद्धा सुचूर्णे काञ्जिके पचेत् ।
दोलायन्त्रेण यामैकं ततः कूष्माण्डजे रसे ॥ १७६ ॥
तिलतैले पचेत् यामं यामं तत् त्रैफले जले ।
दोलायन्त्रे चतुर्यामं पाच्यं शुध्यति तालकम् ॥१७७॥ शोधनम् ।
तालकं कणशः कृत्वा सुशुद्धं हरिडकान्तरे ।
चूर्णोदकेन संपिष्टमपामार्गजटोद्भवैः ॥ १७८ ॥
चारोदकैश्च संपिष्ट सूर्द्धाधो यावशूकजम् ।
चूर्णं दत्त्वा निरुध्याथ कूष्माण्डैश्च प्रपूरयेत् ॥ १७९ ॥
पुनर्मुखं निरुध्याथ चतुर्यामं क्रमाग्निना ।
पचेदेवं हि तच्चूर्णं कुष्ठादौ परियोजयेत् ॥ १८० ॥
हरितालं कटु स्निग्धं कषायञ्च विसर्पनुत् ।
तालकं हरते रोगान् कुष्ठमृत्युजरादिकान् ।
संशुद्धं कान्तिवीर्य्यौजः कुरुते मृत्युनाशनम् ॥ १८१ ॥
अम्लरोलीजलैर्भाव्यं तालं द्वादशयामकम् ।
तथैव निम्बुनीरेण ततश्चूर्णोदकेन च ॥ १८२ ॥

---

क्रमेण यामैकं दोलायां पचेदित्यर्थः । तालकमित्यादि । तालकं क्षुद्रितं कृत्वा दस्त्रतो बद्धा शस्त्रकयुक्तयोर्भस्मकृतचूर्णसहितकाञ्जिके दोलायां यामैकं पचेत् । ततः कूष्माण्डादिरसैः प्रत्येकशो यामैकैकं पचेदिति ॥१७३—१७७॥

अथ हरितालमारणमाह तालकमित्यादि । तच्चूर्णमिति अन्तःशरावोर्द्धलग्नं यत् कुन्दप्रकाशं भस्म तदिति । एवंविधस्तत्हरितालस्य गुणमाह हरितालमित्यादि । स्पष्टम् ॥१७८—१८१॥

प्रक्षाल्य शाल्मलीक्षारैर्द्विगुणैः खातमध्यगम्।
विधाय कवचीयन्त्रं वालुकाभिः प्रपूरयेत्॥ १८३॥
द्वादशप्रहरं पक्त्वा स्वाङ्गशीतञ्च चूर्णयेत्।
खादयेत् रक्तिकामेकां कुष्ठश्लीपदशान्तये॥ १८४॥

इति हरितालमारणम्।

तालकं वंशपत्राख्यं कूष्माण्डसलिले क्षिपेत्।
सप्तधा वा त्रिधा वापि दध्ना चाम्लेन वा पुनः॥ १८५॥
शोषयित्वा पुनः शुष्कं चूर्णयेत् तण्डुलाकृति।
ततः शरावके पात्रे स्थापयेत् कुशलो भिषक्॥ १८६॥
वदरीपल्लवोत्थेन कल्केन लेपयेद्भिषक्।
अरुणाभमधःपात्रं तावज्ज्वाला प्रदीयते॥ १८७॥
स्वाङ्गशीतं समुद्धृत्य माणिक्याभं भवेद्ध्रुवम्।
तत् रक्तिद्वितयं खादेद् घृतस्वामरमर्दितम्॥ १८८॥
संपूज्य देवदेवेशं कुष्ठरोगाद्विमुच्यते।
स्फुटितं गलितं यच्च वातरक्तं भगन्दरम्॥ १८९॥
नाड़ीव्रणं व्रणं दुष्टमुपदंशं विचर्चिकाम्।
नासास्यसम्भवान्रोगान् क्षतान् हन्ति सुदारुणान्।
पुण्डरीकञ्च चर्माख्यं विस्फोटं मण्डलं तथा॥ १९०॥

इति रसमाणिक्यम्।

---

मतान्तरमाह अम्लरीलीति। अम्लरीली चाङ्गेरी अम्लरीलीरसैः निम्बुनीरैः तथा चूर्णोदकैः प्रत्येकशो द्वादश यामकं भावयेत् ततः प्रक्षाल्य द्विगुणैः शाल्मलीक्षारैः सह कवचीयन्त्रं विधाय द्वादशप्रहरं पचेत्। शीते च रक्तिकामेकां कुष्ठश्लीपदादौ प्रयोजयेदिति॥१८२—१८४॥

रसमाणिक्यमाह—तालकमित्यादि। कूष्माण्डसलिले क्षिपेदिति कूष्माण्डरसे सप्तधा त्रिधा वा शोधितं हरितालं भावयेत् एवं दध्नाम्लेनेति। ततः शरावके पात्रे कृत्वा वदरीकल्केन सन्धिं लेपयेत्। ततः हण्डिकामध्ये संस्थाप्य वालुकाभिः

मनःशिला च नैपाली शिलाह्वा नागजिह्विका ।
मनोह्वा कुनटी गोणी करञ्जी करवीरिका ।
मनोह्वा लोहपुष्पाभा शस्यते सर्वकर्मसु ॥ १९१ ॥

मनःशिला मन्दबलञ्च नूनं करोति जन्तोः शुभपाकहीना ।
मलन्तु बद्धं कुरुते च नूनं सशर्करं कृच्छ्रगदं करोति ॥१९२॥

मतान्तरम् । अश्मरीमूत्रहृद्रोगमशुद्धा कुरुते शिला ।
मन्दाग्निं मलदुष्टिञ्च शुद्धा सर्वरुजापहा ॥ १९३ ॥

जयन्तीभृङ्गराजोत्थैः रक्तागस्त्यरसैः शिला ।
दोलायन्त्रे दिनं पाच्या यामं छागस्य मूत्रके ।
चालयेदारनालेन सर्वरोगेषु योजयेत् ॥ १९४ ॥

मतान्तरम् । मातुलुङ्गरसैः पिष्टा जयानीरैर्मनःशिला ।
शृङ्गवेररसैर्वापि विशुध्यति मनःशिला ॥ १९५ ॥

कटुः स्निग्धा शिला तिक्ता कफघ्नी लेखनी सरा ।

---

प्रपूरयेत् । ततः पात्राधोऽग्निज्वाला तावत् देया यावत् पात्राधोऽरुणाभं भवतीति । सुशीते च माणिक्याभं भस्म यदुपलभ्यते तत् समुद्धृत्य कुष्ठादौ देयमिति ॥१८५।१९०

मनःशिलायाः साभिधानशोधनादिकमाह मनःशिलेत्यादि । मनःशिलापि हरितालभेदा तालकं पीतं मनःशिला रक्तेति ॥१९१॥

अथ अशुद्धमनःशिलाया दोषमाह मनःशिलेति । मन्दबलमिति बलह्रासं करोति इत्यर्थः । पाकहीनेति मन्दाग्निकरी ॥१९२॥

मतान्तरमाह अश्मरीत्यादि । शिला मनःशिला । मूत्रं मूत्रकृच्छ्रम् उक्तञ्च सशर्करं कृच्छ्रगदं करोतीति ॥१९३॥

शोधनमाह जयन्तीत्यादि । जयन्त्यादीनामन्यतमरसेन दिनं दोलायन्त्रे पक्वा काञ्जिकेन चालयेत् । अथवा छागमूत्रेण यामं पक्वा काञ्जिकेन चालयेत् इति ॥१९४॥

मतान्तरमाह मातुलुङ्गेत्यादि । मातुलुङ्गरसैः पिष्ट्वा जयन्तिकारसैरार्द्रक-रसैर्वा पूर्वोक्तविधानेन दोलायन्त्रे दिनं पचेदिति भावः ॥१९५॥

भूतावेशभयं हन्ति कासश्वासहरा शुभा ॥ १९६ ॥

इति मनःशिलाशुद्धिः ।

पुष्पाणां रक्तपीतानां रसैः पिष्ट्वा च भावयेत् ।
नरमूत्रैश्च गोमूत्रैर्यवाम्लैश्च ससैन्धवैः ।
सप्ताहं त्रिदिनं वापि पश्चात् शुध्यति खर्परः ॥ १९७ ॥

मतान्तरम् । खर्परः परिसन्तप्तः सप्तवारान् निमज्जितः ।
निम्बुवीजरसे चान्तर्निर्मलत्वमवाप्नुयात् ॥ १९८ ॥

अथ मारणम् । खर्परं पारदेनैव वालुकायन्त्रगं पचेत् ।
चूर्णयित्वा दिनं यावत् शोभनं भस्म जायते ।
नेत्ररोगहरः क्लेदी व्ययया खर्परो गुरुः ॥ १९९ ॥

इति खर्परशोधनमारणञ्च ।

तुत्थके तु शिखिग्रीवं हेमसारं मयूरकम् ।
विष्ठया मर्दयेत्तुत्थं मार्जारककपोतयोः ॥ २०० ॥
दशांशं टङ्कनं दत्त्वा पाच्यं मृदुपुटे ततः ।
पुटं दद्यात् पटुक्षौद्रैः किल तुत्थविशुद्धये ॥ २०१ ॥

---

एवं शोधितमनःशिलाया गुणमाह कटु स्निग्धेत्यादि ॥१९६॥

अथ खर्परशोधनमारणादिकमाह पुष्पाणामित्यादि । यवाम्लैरिति यव-काञ्जिकैः ॥१९७॥

अथ मारणमाह खर्परमित्यादि । खर्परं चूर्णयित्वा समांशेन पारदेन सह वालुकायन्त्रे दिनैकं पचेत् तेन भस्म उपजायते इति ॥१९८॥

एवं मृतखर्परस्य गुणमाह नेत्ररोगहर इत्यादि ॥१९९॥

तुत्थकस्य सपर्य्यायशोधनमारणादिकमाह तुत्थक इत्यादि।—तुत्थञ्च ताम्रोप-धातु यथा तुत्थं ताम्रोपधातु हि किञ्चित् ताम्रेण तद्भवेत् । किञ्चित् ताम्रगुणं तस्मादवस्यमाणं गुणञ्च तदिति । मार्जारकपोतयोर्विष्ठया समं तुत्थं तथा तुत्थात् दशांशं टङ्कनञ्च दत्त्वा मर्दयेत् मृदुपुटे पचेच्च । ततः पादांशं सैन्धवं किञ्चिच्च क्षौद्रं दत्त्वा पुनः प्रपुटेदिति ॥२००॥२०१ ॥

अन्यच्च। ओतोर्विष्ठासमं तुत्थं सक्षौद्रं टङ्गनाङ्घ्रियुक्।
त्रिधा सुपुटितं शुद्धं वान्तिभ्रान्तिविवर्जितम् ॥ २०२ ॥

अन्यच्च। गन्धकेन समं तुत्थं तुत्थार्द्धेनार्द्धयामकम्।
वान्तिभ्रान्ती यदा नस्तस्तदा सिद्धिं विनिर्दिशेत् ॥२०३॥

तुत्थं सकटु सक्षारं कषायं विशदं लघु।
लेखनं भेदि चक्षुष्यं कण्डूक्रिमिविषापहम् ॥२०४॥

इति तुत्थकशुद्धिः।

मूत्रारणालतैलेषु गोदुग्धे कदलीरसे।
कौलत्थे कोद्रवक्काथे माक्षिकं विमलं तथा ॥ २०५ ॥

मुहुः शूरणकन्दस्थं स्वेदयेद्दरवह्निना।
क्षाराम्ललवणैश्चैव तैलसर्पिः समन्वितम् ॥ २०६ ॥

पुटत्रयं प्रदातव्यं ततस्तु शोधितं भवेत्।
जम्बीरस्य रसैः स्विन्नो मेषशृङ्गीरसैस्तथा।
रम्भातोयेन वा पाच्यं घस्रं विमलशुद्धये ॥ २०७ ॥

इति विमलशुद्धिः।

माक्षिके धातुमाक्षिकस्तमस्तापीसमुद्भवः।
गरुड़ो माक्षिकः पक्षी हेमवर्णं इति स्मृतः ॥ २०८ ॥

---

मतान्तरमाह ओतोर्विष्ठेति। ओतुर्विड़ालः तस्य विष्ठा पुरीषम्। अङ्घ्रि पादः ॥२०२॥

मतान्तरमाह गन्धकेनेति। सममिति सहार्थे। तेन तुत्थार्द्धेन गन्धकेन सह तुत्थं इत्यर्थः। अर्द्धयामकमिति अत्र पुटेदिति शेषः। पुटनञ्च तावदेव कर्त्तव्यं यावत् वान्त्यादि रहितं स्यादिति। एवं सिद्धस्य तुत्थस्य गुणमाह तुत्थमित्यादि ॥२०३।२०४

अथ विमलशुद्धिमाह मूत्रेत्यादि। शूरणकन्दस्थं विमलं मूत्रादीनां व्यस्तसम स्तर्वा यामैकैकं दोलायन्त्रे स्वेदयेत् ततः क्षारादिभिः पुटत्रयं दातव्यम्। अथवा जम्बीरादीनां स्वरसैर्दिनैकं स्वेदयेदिति ॥२०५—२०७॥

सनामलक्षणमाक्षिकशोधनादिकमाह माक्षिक इत्यादि। माक्षिकं

भङ्गे सुवर्णसङ्काशो मनाक् कृष्णच्छविर्बहिः ।
बृहद्वर्ण इति ख्यातो माक्षिकः श्रेष्ठ उच्यते ॥ २०९ ॥

मन्दाग्निं बलहानिञ्च व्रणं विष्टम्भगात्ररुक् ।
कुरुते माक्षिको मृत्युमशुद्धो नात्र संशयः ॥ २१० ॥

स्वर्णमाक्षिकचूर्णन्तु वस्त्रे बद्ध्वा विपाचयेत् ।
कालमारिषशालिञ्च क्वाथे दोलाविधानतः ।
तदधः पतितं शस्तमेवं शुध्यति माक्षिकम् ॥ २११ ॥

मतान्तरम् । माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च ।
मातुलुङ्गद्रवैर्वाथ जम्बीरोत्थद्रवैः पचेत् ॥ २१२ ॥
लौहपात्रे पचेत्तावत् लौहदर्व्या च चालयेत् ।
भासवर्णमयो यावत् तावच्छुध्यति माक्षिकम् ॥ २१३ ॥

मतान्तरम् । माक्षिकस्य चतुर्थांशं गन्धं दत्त्वा विमर्दयेत् ।
उरुवुकस्य तैलेन ततः कुर्य्याच्च चक्रिकाम् ॥ २१४ ॥
शरावसम्पुटे कृत्वा पुटेद्गजपुटेन तु ।
सिन्दूराभं भवेद्भस्म माक्षिकस्य न संशयः ॥ २१५ ॥
माक्षिकं तिक्तमधुरं मेहार्शः क्रिमिकुष्ठनुत् ।

---

द्विविधं स्वर्णमाक्षिकं रौप्यमाक्षिकञ्च उक्तं हि माक्षिकं द्विविधं प्रोक्तं हेमाह्वं तारमाक्षिकम् । भिन्नवर्णविशेषत्वात् रसवीर्य्यादिकं पृथक् । तारमाक्षिकं विमलमिति ख्यातञ्चाग्रे वाच्यम् । इदानीं स्वर्णमाक्षिकलक्षणादिकमाह भङ्ग इत्यादि ॥२०८॥२०९

अशुद्धस्य माक्षिकस्य दोषमाह मन्दाग्निमित्यादि । स्पष्टम् ॥२१०॥

स्वर्णमाक्षिकस्य दोषपरिहरणाय शोधनमाह स्वर्णमाक्षिकेत्यादि । स्वर्ण-माक्षिकचूर्णं सूक्ष्मवस्त्रे बद्ध्वा कालमारिषस्वरसेन शालिञ्च क्वाथेन रसेन वा दोलायन्त्रे विपचेत् वस्त्रस्य सूक्ष्मावकाशात् यच्चूर्णमधःपतति तत् प्रशस्तमिति ॥ २११—२१३ ॥

मतान्तरमाह माक्षिकस्येत्यादि माक्षिकस्य स्वर्णमाक्षिकस्य । चतुर्थांशं चतुर्थं भागम् । उरुवुकस्य एरण्डस्य ॥२१४॥२१५॥

कफपित्तहरं बल्यं योगवाहि रसायनम् ॥ २१६ ॥

इति माक्षिकशुद्धिः ।

काशीशं धातुकाशीशं खेचरं दन्तरञ्जनम् ।
सकृद्भृङ्गाम्बुना स्विन्नं काशीशं निर्मलं भवेत् ॥ २१७ ॥
काशीशं निर्मलं स्निग्धं चित्तनेत्ररुजापहम् ।
पित्तापस्मारशमनं रसवद्गुणकारकम् ॥ २१८ ॥

इति काशीशशुद्धिः ।

राजपट्टं महापट्टं शिखिग्रीवं वराटकम् ॥ २१९ ॥
चूर्णितं कान्तपाषाणं महिषीक्षीरसंयुतम् ।
त्रिपचेदायसे पात्रे गोघृतेन समन्वितम् ॥ २२० ॥
लवणे च तथा क्षारे शोभाञ्जनरसे क्षिपेत् ।
अम्लवर्गस्य तोयेन दिनं घर्मे विभावयेत् ॥ २२१ ॥
तथैव दोलिकायन्त्रे दिवसं पाचयेत् सुधीः ।
कान्तपाषाणशुद्धौ तु रसकर्म समाचरेत् ॥ २२२ ॥

इति कान्तपाषाणशुद्धिः ।

---

मृतमाक्षिकस्य गुणमाह माक्षिकमित्यादि । स्वर्णमाक्षिकञ्च स्वर्णोपधातुः स्वर्णानुकल्पं किञ्चिद्धीनगुणं मत इति । उक्तं हि उपधातुसुवर्णस्य किञ्चित् स्वर्णगुणान्वितम् । तथा च काञ्चनाभावे दीयते स्वर्णमाक्षिकम् । किन्तु तस्य अनुकल्पत्वात् किञ्चित् हीनगुणास्तत इति ॥२१६॥

काशीशशोधनादिकमाह । काशीश इत्यादि । काशीशं हिराकस् इति लोके तत् द्विविधं धातुकाशीशं पुष्पकाशीशञ्च धातुकाशीशं हरिद्वर्णं लोहितञ्च पुष्पकाशीशं शुक्लवर्णं कृष्णञ्च ॥२१७॥२१८॥

अथ राजपट्टशोधनादिकमाह राजपट्ट इत्यादि । राजपट्टं कान्तपाषाणम् । तथैव दोलिकायन्त्र इति दोलायन्त्रे महिषीक्षीरादिभिः पचेदिति । दिनं घर्मे विभावयेदिति अम्लवर्गरसेन रौद्रे दिनैकं भावयेदिति ॥२१९॥२२२॥

पीताभा ग्रन्थिला पृष्ठे दीर्घवृत्ता वराटिका।
सार्द्धनिष्कभरा श्रेष्ठा निष्कभारा च मध्यमा॥ २२३॥
पादोननिष्कभारा च कनिष्ठा परिकीर्त्तिता।
रसवैद्यैर्विनिर्दिष्टा सा वराटकसंज्ञका॥ २२४॥
वराटी काञ्जिके स्विन्ना यावच्छुद्धिमवाप्नुयात्।
परिणामादिशूलघ्नी क्षयहा ग्रहणीहरा।
कटूष्णा दीपनी वृष्या तिक्ता वातकफापहा॥ २२५॥
मतान्तरम्। भूगर्त्ते च समे शुद्धे पोट्टलीं स्थापयेत् सुधीः।
तुषेण पूरयेत्तस्याः किञ्चिन्मध्यं भिषग्वरः॥ २२६॥
वराटपूरितां मूषां तन्मध्ये विनिवेशयेत्।
करीषाग्निं ततो दद्यात् पालिकायन्त्रमुत्तमम्।
अनेन म्रियते नूनं वराटं सर्वरोगजित्॥२२७॥इति वराटशुद्धिः।
नीलाञ्जनं चूर्णयित्वा जम्बीरद्रवभावितम्।
दिनैकमातपे शुद्धं ततः कार्य्येषु योजयेत्॥२२८॥
इति रसाञ्जन शुद्धिः।

---

वराटिकाया नामलक्षणशोधनादिकमाह पीताभेति। ग्रन्थिलेति ग्रन्थियुक्ता सार्द्धनिष्कभरा इति सार्द्धनिष्कैकपरिमिता। एवं सर्वत्र। वराटिकाशोधनमाह वराटीत्यादि। काञ्जिके स्विन्नेति दोलायन्त्रे। एवंविधशुद्धवराटिकाया गुणमाह परिणामादीत्यादि॥ २२३॥२२५॥

मतान्तरमाह भूगर्त्ते इत्यादि॥२२६॥२२७॥

नीलाञ्जनमाह नीलाञ्जनमित्यादि। नीलाञ्जनमित्युपलक्षणं तेनाञ्जनपञ्चकं बोध्यम्। अत्र अञ्जनानां भेदो नोक्तः। तत् यथा सौवीरमञ्जनं प्रोक्तं रसाञ्जनमतःपरम्। स्रोतोऽञ्जनं तदन्यच्च पुष्पाञ्जनकमेव च। नीलाञ्जनञ्च तेषान्तु स्वरूपमिह कथ्यते। सौवीरमञ्जनं धूम्रं रक्तपित्तहरं परम्। विषहिक्काक्षिरोगघ्नं व्रणरोपणशोधनं रसाञ्जनञ्च पीताभं विषरक्तगदापहम्। श्वासहिक्काहरं बल्यं वातपित्तास्रनाशनम्। स्रोतोऽञ्जनं हिमं स्निग्धं कषायं स्वादु लेखनम्। नेत्रं

हिङ्गुले हिङ्गुलुर्याति दरदः शुकतुण्डकः ।
रसगन्धकसम्भूतो हिङ्गुलो दैत्यरक्तकः ॥२२९॥
अम्लवर्गद्रवैः पिष्टा दरदो माहिषेण च ।
दुग्धेन सप्तधा पिष्टः शुष्कीभूतो विशुध्यति ॥२३०॥
अन्यच्च । मेषीदुग्धेन दरदमम्लवर्गैर्विभावितम् ।
सप्तवारं प्रयत्नेन शुद्धिमायाति निश्चितम् ॥२३१॥
अन्यमतं । दरदं दोलिकायन्त्रे पक्वं जम्बीरजैर्द्रवैः ।
सप्तवारमजामूत्रैर्भावितं शुद्धिमेति हि ॥२३२॥
अथान्यः । आर्द्रकैर्लकुचद्रावैः सप्तधा भावितो यदि ।
हिङ्गुलः शुद्धतां याति निर्दोषो जायते खलु ॥२३३॥
बिम्बाभं हिङ्गुलं दिव्यं रसगन्धकसम्भवम् ।
मेहकुष्ठहरं रुच्यं बल्यं मेधाग्निवर्द्धनम् ॥२३४॥ इति हिङ्गुलशु[illegible]
शिलाजतुनि शैलेयमद्रिं गिरिजमश्मजम् ।
धातुजं चाश्मजतुकं शैलजं चाश्मसम्भवम् ॥२३५॥

---

हिक्काविषच्छर्दिकफपित्तास्ररोगजित् । पुष्पाञ्जनं सितं स्निग्धं हिमं सर्वाक्षिरोग-
जित् । नीलाञ्जनं गुरु स्निग्धं नेत्रदोषत्रयापहम् । रसायनं सुवर्णघ्नं लोहमार-
कारकम् । अञ्जनानि विशुध्यन्ति भृङ्गराजद्रवैर्दिनम् । मनोह्वासदृशं सत्वमञ्जनानां
समाहरेदिति ज्ञेयम् ॥२२८॥

सपर्य्यायहिङ्गुलशोधनादिकमाह । हिङ्गुल इत्यादि । हिङ्गुलं हि त्रिवि[illegible]
यथा दरदस्त्रिविधःप्रोक्तश्चर्मारः शुकतुण्डकः । हंसपादस्तृतीयः स्याद्गुणवानुत्त-
रः । चर्मारः शुक्लवर्णः स्यात् सपीतः शुकतुण्डकः । जवाकुसुमसङ्काशो हं[illegible]
पादो महोत्तम इति ॥२२९॥

शोधनमाह अम्लवर्गेत्यादि । आर्द्रकैरित्यादौ । लकुचद्रावैर्डहुकरसैः ॥२३०॥२३[illegible]

अथ हिङ्गुललक्षणमाह बिम्बाभमित्यादि बिम्बाभं पक्वबिम्बीफलाभ[illegible]
दिव्यं श्रेष्ठम् । एवं शोधितहिङ्गुलस्य लक्षणमाह मेहकुष्ठेति । रुच्यं रु[illegible]
करम् ॥ २३४ ॥

शिलाजतुशोधनमारणादिकमाह शिलाजतुनीत्यादि । शिलाजतु च [illegible]

गोदुग्धत्रिफलाभृङ्गद्रवैः पिष्टं शिलाजतु ।
दिनैकं लौहजे पात्रे शुद्धिमायात्यसंशयः ॥ ॥२३६॥

---

निस्रवम् उक्तं हि हेमाद्याः सूर्य्यसन्तप्ताः स्रवन्ति गिरिधातवः । जलाभं मृदु मृत्स्नाभं यत् मलं तत् शिलाजतु । तच्च चतुर्विधं स्वर्णादीनां मलभेदात् । उक्तं हि अनम्लता कषायञ्च कटुपाकि शिलाजतु । नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भवः । हेम्नोऽथ रजतात्ताम्रादरं कृष्णायसादपि । तेषां लक्षणं गुणाश्च यद्यप्यत्र नोक्तास्तथापि तन्त्रान्तरेऽनुसर्त्तव्याः । यथा मधुरञ्च सतिक्तञ्च जवापुष्पनिभञ्च यत् विपाके कटु शीतञ्च तत् सुवर्णस्य निस्रवम् । राजतं कटुकं शीतं श्वेतं स्वादु विपच्यते ताम्रात् वर्हिणकण्ठाभं तीक्ष्णोष्णं पच्यते कटु । यत्तु गुग्गुलुसङ्काशं तिक्तकं लवणान्वितम् । विपाके कटु शीतञ्च सर्वश्रेष्ठं तदायसम् । गोमूत्रगन्धः सर्वेषां सर्वे सर्वसु यौगिकाः । रसायनप्रयोगेषु पश्चिमन्तु विशिष्यते । यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु । विशेषेण प्रशस्यन्ते मला हेमादिधातुजाः । एषां मध्ये चायसः श्रेष्ठत्वात् रसायनत्वात् सर्वरोगोपशान्तिकरत्वाच्च सर्वत्रैवाद्रियते । तल्लक्षणं यथा । लौहकिट्टायते वह्नौ विधूमं दह्यतेऽम्भसि । तृणाद्यग्रे कृतं श्रेष्ठमधो गलति तन्तुवत् । यत्तु गुग्गुलुसङ्काशं तिक्तकं लवणान्वितम् । विपाके कटुशीतञ्च सर्वश्रेष्ठं तदायसमिति ॥ २३५॥

साधारणशुद्धिमाह गोदुग्ध इत्यादि । गोदुग्धे तथा त्रिफलाक्वाथे तथा भृङ्गराजद्रवैश्च दिनैकमातपसंयोगात् शिलाजतु शोधयेदित्यर्थः । अत्र यद्यपि सामान्येन एव उक्तं तथापि हारीतोक्तविधानमत्र विशेषतो ज्ञेयम् । तद्यथा । विन्ध्यादौ बहुलं तत्तु तत्र लौहं यतोऽधिकम् । तच्छोधनमृते व्यर्थमेकैकाकमलमेलनात् । शिलाजतु समानीय सूक्ष्मं खण्डं विधाय च निक्षिप्यात्युष्णपानीये यामैकं स्थापयेत् सुधीः । मर्दयित्वा ततो नीरं गृह्णीयात् वस्त्रगालितम् । स्थापयित्वा च मृत्पात्रे धारयेदातपे बुधः । उपरिस्थं घनं यत् स्यात् तत् क्षिपेदन्यपात्रके एवं पुनः पुनर्नीतं द्विमासाभ्यां शिलाजतु । भवेत् कार्य्यक्षमं वह्नौ क्षिप्तं लिङ्गोपमं भवेत् । निर्धूमञ्च ततः शुद्धं सर्वकर्मसु योजयेदिति । केचित्तु तत्र प्रथमतस्तस्य वह्निमलमपाकर्त्तुं जलेन प्रक्षालनं कर्त्तव्यं ततस्तदन्तर्गतमृत्तिका सिकतादिदोषदूरीकरणाय हारीतोक्तशिलाजतुशोधनप्रकरणं क्वाथेन भावना देयेत्याहुः । तदुक्तं शिलाजतु जले धौतं कीटादिदुष्टौषधिदोष-

शिलाजतु भवेत् तिक्तं कटुकञ्च रसायनम्।
क्षयशोथोदरार्शांसि हन्ति वस्तिरुजं जयेत् ॥२३७॥

इति शिलाजतुशुद्धिः।

सौवीरं टङ्कनं शङ्खं कङ्कुष्ठं गैरिकं तथा।
एते वराटवच्छोध्या भवेयुर्दोषवर्जिताः ॥२३८॥

मतान्तरम्। कङ्कुष्ठं गैरिकं शङ्खं काशीशं टङ्कनं तथा।
नीलाञ्जनं शुक्तिभेदाः खुल्वकाः सवराटकाः ॥२३९॥
जम्बीरवारिणा स्विन्नाः क्षालिताः कोष्णवारिणा।
शुद्धिमायान्त्यमी योज्या भिषग्भिर्योगसिद्धये ॥२४०॥
टङ्कनं क्षामणष्टङ्कः सम्यक् क्षारश्च पाचनः।
शुभगोमालतीजातो द्रवी लोहविशुद्धिदः ॥२४१॥
आदौ टङ्कनमादाय काञ्जिकाम्ले विनिक्षिपेत्।
एकरात्रात् समुद्धृत्य रौद्रयन्त्रे विभावयेत् ॥२४२॥
नरमूत्रगतं टङ्कं गवां मूत्रगतं तथा।
दिनान्ते तत् समुद्धृत्य जम्बीराम्बुगतं ततः ॥२४३॥
जम्बीराम्लात् समुद्धृत्य नारिकेलस्य पात्रके।
मरीचचूर्णसंयुक्तं क्षालयेच्छीतलाम्बुना ॥२४४॥

---

विनाशाय अगुरुतुवरीनिम्बपत्रयवगुडूचीघृतैर्धूपयित्वा तदनु शुष्कं चूर्णीकृत्य लौह-पात्रे कृत्वा दशमूलकषायं त्रिफलाक्वाथं केवलोष्णोदकं वा प्रक्षिप्य लौहमूषलिकया तरलीकृत्य प्रचण्डातापे स्थापनीयम्। ततस्तु सरवद्यदूर्द्धमुत्तिष्ठेत् तत् पुनः गृहीत्वा काचादिपात्रे स्थापनीयमित्याहुः। विस्तारस्तु अग्निवेशसंहितायां वाग्भटे च ज्ञेयः ॥ २३६ ॥

शोधितशिलाजतुगुणमाह शिलाजतु भवेत्यादि ॥ २३७ ॥

सौवीरादीनां साधारणशोधनमाह सौवीरमित्यादि। तथा पुनः कङ्कुष्ठादीनां साधारणशोधनमाह कङ्कुष्ठमित्यादि जम्बीरवारिणा स्विन्नेति जम्बीररसैः दोला-यन्त्रे स्विन्ना ॥ २३८—२४० ॥

एवं टङ्कं समादाय सर्वरोगेषु योजयेत्।
टङ्कनोऽग्निकरो रूक्षः कफघ्नो रेचनो लघुः ॥२४५॥
इति टङ्कनशुद्धिः।

अन्धमूषागतं शङ्खं पलमेकं विचक्षणः।
माषार्द्धटङ्कनैर्मिश्रं दण्डयन्त्रेण मारयेत् ॥२४६॥
शङ्खः सर्वरुजं हन्ति विशेषादुदरामयम्।
शूलाम्लपित्तविष्टम्भमेहहृत् वह्निदीपनः ॥२४७॥ शङ्खशुद्धिः।

इति रसेन्द्रसारसंग्रहे उपरसशोधनाधिकारः।

हेमादिलौहकिट्टान्तं शोधनं मारणं शृणु।
तैले तक्रे गवां मूत्रे काञ्जिकेऽथ कुलत्थजे ॥२४८॥
तप्ततप्तानि सिञ्चेत तत्तद्द्रावेच सप्तधा।
एवं स्वर्णादिलौहानि शुद्धिमायान्त्यसंशयः ॥२४९॥
स्वर्णादीनामष्टानां साधारणशोधनम्—
सौख्यं वीर्य्यं बलं हन्ति नानारोगं करोति च।
अशुद्धमम्रतं स्वर्णं, तस्मात् शुद्धन्तु कारयेत् ॥२५०॥

---

अथ सपर्य्याय टङ्कनशोधनादिकमाह टङ्कनमित्यादि। आदावित्यादौ काञ्जिकाम्ले अम्लकाञ्जिके। एकरात्रादिति अहोरात्रात् ॥ २४१—२४५ ॥

अथ शङ्खशुद्धिमाह अन्धमूषागतमित्यादि। अत्र पचेदिति शेषः। अन्धमूषागतं यच्छं शङ्खम् अर्द्धमाषटङ्कनैः सह दण्डयन्त्रेण मारयेदिति। शुद्धशङ्खस्य गुणमाह शङ्ख इत्यादि। उदरामयम् अतिसाररोगम् ॥ २४६—२४७ ॥

स्वर्णादीनां साधारणशोधनमाह हेमादीत्यादि। स्वर्णादीनां पत्राणि तप्ततप्तानि पृथक् तैलादिषु सप्तधा सिञ्चेदिति। सप्तधेति सामान्येन एव उक्तः। यत एकादिशतपर्य्यन्तनिषेको विधीयते। प्रत्येकेन सप्तधेति केचित्। मनाक् तप्तलौहपत्राणि द्विगुणे तद्द्रवे चिपेदिति तद्द्रवमानम्। तेषु अष्टलौहेषु नागं वङ्गञ्च कथं तप्तं निषेक्तव्यम् अल्पतापेन गलतः ततश्च खल्पभाण्डे कलैव गलिते ते नागवङ्गे तेषु निषेचिते इति। सद्रवं सर्वलौहं दिनमेकं रक्षेत्। रात्रौ च निर्द्रवं नैव रक्षेत् एवं रजनीमेकां विश्राम्य कर्मान्तरञ्च समाचरेदिति ॥२४८॥२४९॥

मृत्तिकामातुलुङ्गाम्लैर्भावितं पञ्चवासरम्।
मृत्भस्म लवणाङ्केम शोधयेत् पुटयेत्ततः ॥२५१॥

मतान्तरम्। वल्मीकमृत्तिका धूमं गैरिकं चेष्टका पटु।
इत्येता मृत्तिकाः पञ्च जम्बीरैरारणालकैः ॥२५२॥
पिष्ट्वा लेप्यं स्वर्णपत्रं पुटेन तु विशुध्यति।
धारयेत् स्वर्णपत्रीभिस्त्रिदिनं पञ्चमृत्तिकाः ॥२५३॥

इति स्वर्णशोधनम्।

माक्षिकं नागचूर्णञ्च पिष्टमर्करसेन च।
हेमपत्रं पुटेनैव म्रियते क्षणमात्रतः ॥२५४॥

---

इदानीं विशेषशुद्धिमाह। तत्रादौ सुवर्णस्य विशेषशोधनादिकं वक्तव्यम्। यद्यपि अत्र मारणयोग्यसुवर्णस्य लक्षणादिकं नोक्तं तथापि तज्ज्ञाना तन्त्रान्तरमनुसर्त्तव्यम्। यथा दाहेति रक्तमथ यच्च सितं छिदायां काश्मीरकान्ति विभाति निकाषपट्टे:। स्निग्धञ्च गौरवमुपैति च यत्तुलायां जानीत टेवकन मृदु रक्तपीतम्। तत्रैकं रसवेधनं तदपरं जातं स्वयं भूमिजम्। किञ्चान्य वङ्गलोहसङ्करभवं चेति त्रिधा काञ्चनम्। तत्राद्यं किल पीतरक्तमपरं र ततोऽन्यत यथा गौराभं तदिन्ति क्रमेण गदितं स्यात् पूर्वपूर्वोत्तमम्। इति राज निर्घण्ट:। मृत्युञ्जयतन्त्रे तु दाहे रक्तं सितं छेदे निषेके कुङ्कुमप्रभम्। तारशुल्व निभं स्निग्धं कोमलं गुरु हेम सत्। तत् श्वेतं कठिनं रूक्षं विवर्णं समलं दलम् दाहे छेदेऽसितं श्वेतं कषे त्याज्यं लघु स्फुटमिति। अशुद्धामृतस्य च सुवर्णस्य दोषमाह सौख्यमित्यादि॥ २५०॥

दोषपरिहारार्थं शोधनमाह मृत्तिकेति। मृत्तिका पञ्चमृत्तिका मातुलुङ्गाम्लै मातुलुङ्गरसै:॥ २५१॥

मतान्तरमाह वल्मीकेत्यादि। धूमेति धूममृत्तिका कृष्णमृत्तिकेति ख्याता पटु पांशुजलवणम्। जम्बीरैर्जम्बीररसै:। पुटेनेति लघुपुटेन॥ २५२॥२५३॥

अथ स्वर्णमारणमाह माक्षिकमित्यादि। हेमपत्रमिति कण्टकवेध्यं स्वर्णपत्रम् शोधितस्वर्णमाक्षिकचूर्णं तथा सीसकचूर्णञ्च अर्कक्षीरेण संमर्द्य तेन स्वर्णप प्रलिप्य तं मूषायां संस्थाप्य प्रपुटेदिति॥ २५४॥

मतान्तरम्। सुशुद्धं पारदं दत्त्वा कुर्य्यात् यत्नेन पीठिकाम्।
दत्त्वोर्द्धाधो नागचूर्णं पुटेन म्रियते ध्रुवम् ॥२५५॥
मतान्तरम्। गलितस्य सुवर्णस्य षोड़शांशेन सीसकम्।
योजयित्वा समुद्धृत्य निम्बुनीरेण मर्दयेत् ॥२५६॥
गोलं कृत्वा गन्धचूर्णं समं दद्यात् तदोपरि।
शरावसम्पुटे कृत्वा पुटेत् त्रिंशद्वनोपलैः।
एवं सुनिपुटैर्हेम नोत्थानं लभते पुनः ॥२५७॥
मतान्तरम्। शुद्धसूतसमं स्वर्णं खल्ले कृत्वा तु गोलकम्।
ऊर्द्धाधो गन्धकं दत्त्वा सर्वतुल्यं निरुध्य च ॥२५८॥
त्रिंशद्वनोपलैर्दद्यात् पुटान्येवं चतुर्दश।
निरुत्थं जायते भस्म गन्धो देयः पुनः पुनः ॥२५९॥
कषायतिक्तमधुरं सुवर्णं गुरु लेखनम्।
हृद्यं रसायनं बल्यं चक्षुष्यं कान्तिदं शुचि ॥२६०॥
आयुर्मेधावयःस्थैर्य्यवाग्विशुद्धिस्मृतिप्रदम्।
क्षयोन्मादगदानाञ्च कुष्ठानां नाशनं परम् ॥२६१॥
इति स्वर्णशोधनमारणम्।

दग्धोत्तीर्णं सुशीतं यन्निर्मलं कुन्दसन्निभम्।
गुरु स्निग्धं कुमारञ्च तारमुत्तममिष्यते ॥२६२॥

---

मतान्तरमाह सुशुद्धमित्यादि। सुशुद्धं पारदं स्वर्णात् द्विगुणं दत्त्वा पीठिकां कुर्य्यात् तदूर्द्धाधो सीसकचूर्णं षोड़शांशं दत्त्वा मूषायां प्रपुटेदिति ॥ २५५॥२५७॥

मतान्तरमाह शुद्धसूतेति। कण्टकवेध्यं स्वर्णपत्रं तुल्येन सूतेन समं मेलयेत् ततो गोलकं कुर्य्यात्। आदौ अर्द्धांशं गन्धकं पात्रोपरि विन्यस्य ततो गोलकं स्थापयेत् तदुपरि गन्धकमर्द्धं निःक्षिप्य भाण्डमुखं रुद्धा पुटो देयः। एवं चतुर्दश-पुटो देयः-प्रतिपुटे तु तुल्यांशं गन्धं प्रदातव्यमिति ॥ २५८॥२५९॥

मृतसुवर्णस्य गुणमाह कषायेत्यादि। कषायतिक्तमधुरमिति कषायादित्रिरस-प्रधानम् ॥ २६०॥२६१ ॥

आयुः शुक्रं बलं हन्ति रोगसङ्घं करोति च।
अशुद्धञ्चामृतं तारं शुद्धं कार्य्यमतो बुधैः ॥२६३॥

नागेन क्षारराजेन द्रावितं शुद्धिमिच्छता।
रजतं दोषनिर्मुक्तं किंवा क्षाराम्लपाचितम् ॥२६४॥ रजतशोधन

माक्षिकं गन्धकञ्चैव मर्कक्षीरेण मर्दयेत्।
तेन लिप्तं रूप्यपत्रं पुटेन म्रियते ध्रुवम् ॥२६५॥

मतान्तरम्। कण्टवेध्ये तारपत्रे दत्त्वा द्विगुणहिङ्गुलम्।
पातयन्त्रे रसो ग्राह्यो रजतं मृतमुच्यते ॥२६६॥

मतान्तरम्। तालं गन्धं रौप्यपत्रं मर्दयेत् निम्बुकद्रवैः।
त्रिः पुटैश्च भवेद्भस्म योज्यमेतद्रसादिषु ॥२६७॥

तारपत्रं चतुर्भागं भागैकं शुद्धतालकम्।
मर्द्यं जम्बीरजैर्द्रावैस्तारपत्राणि लेपयेत् ॥२६८॥

रुद्ध्वा त्रिभिः पुटैः पाच्यं पञ्चविंशद्वनोपलैः।
म्रियते नात्र सन्देहो गन्धो देयः पुनः पुनः ॥२६९॥

---

अथ रजतशोधनादिकमाह। तत्र मारणयोग्यं रजतमाह दग्धोत्तीर्णमित्यादि। अग्नौ दग्धे सति यत् सुशीतं कुन्दसन्निभम् अमलं तत् दग्धोत्तीर्णमिति। तन्त्रान्तरे तु गुरु स्निग्धं मृदु श्वेतं दाहच्छेदघनक्षमम्। वर्णाढ्यं चन्द्रवत् स्वच्छं तारं नवगुणं शुभम्। अथायोग्यलक्षणमाह। कठिनं कृत्रिमं रूक्षं रक्तं पीतं दलं लघु। दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्त्तितमिति। अथाशुद्धस्य तारस्य दोषमाह आयुरित्यादि ॥ २६२॥२६३ ॥

अथ शोधनमाह नागेनेत्यादि। क्षारराजेनेति टङ्कनक्षारेण ॥ २६४ ॥

अथ मारणमाह माक्षिकमित्यादि। स्वर्णमाक्षिकगन्धकरौप्याणां तुल्यो भागः। पुटनमत्र मूषायाम् ॥ २६५ ॥

मतान्तरमाह कण्टकवेध्ये इत्यादि। पातनयन्त्रे इत्यूर्द्धपातनायन्त्रे। एवंविधमृतस्य रौप्यस्य गुणमाह शीतमित्यादि ॥ २६६॥२७०॥

ताम्रशोधनादिकमाह न विषमित्यादि। शोधनयोग्यताम्रस्य लक्षणं यद्यपि अत्र नोक्तं तथापि प्रयोगशिष्टार्थं तल्लक्षणं विशेषतो ज्ञेयम्। यथा जवाकुसुमसङ्काशं

शीतं कषायं मधुरमम्लं वातप्रकोपजित्।
दीपनं बलकृत् स्निग्धं गुल्माजीर्णविनाशनम्।
आयुष्यं दीर्घरोगघ्नं रजतं लेखनं स्मृतम् ॥२७०॥ रजतमारणम्।

न विषं विषमित्याहुस्ताम्रञ्च विषमुच्यते।
एको दोषो विषे त्वष्टौ दोषास्ताम्रे प्रकीर्त्तिता: ॥२७१॥
भ्रमो मूर्च्छा विदाहश्च उत्क्लेदशोषवान्तय:।
अरुचिश्चित्तसन्ताप: एते दोषा विषोपमा: ॥२७२॥
तस्माद्विशुद्धं ताम्रं हि ग्राह्यं रोगोपशान्तये।
पटुना रविदुग्धेन ताम्रपत्राणि लेपयेत्।
अग्नौ सन्ताप्य निर्गुण्डीरसे सिञ्चेत् पुन: पुन: ॥२७३॥

मतान्तरम्। गोमूत्रेण पचेद्यामं ताम्रपत्रं दृढाग्निना।
शुध्यति नात्र सन्देहो मारणञ्चात्र कथ्यते ॥२७४॥ ताम्रशोधनम्।

सूतमेकं द्विधा गन्धं यामं मर्द्यन्तु कन्यया।
द्वयोस्तुल्यं ताम्रपात्रं लिप्त्वा स्थाल्यां निधापयेत् ॥२७५॥
सम्यक् शूरणजै: सार्द्धं पार्श्वे भस्म निधापयेत्।

---

स्निग्धं मृदु घनं चमम्। लौहनागोज्झितं ताम्रं मारणाय प्रशस्यते। कृष्ण-रूक्षमतिशुद्धं श्वेतञ्चापि घनासहं लौहनागयुतञ्चापि शुल्वं दुष्टं प्रकीर्त्तितमिति। ताम्रञ्च विषमिति अशुद्धताम्रं विषवद्गुणकारकमिति भाव: ॥ २७१ ॥

ताम्रस्याष्टौ दोषानाह भ्रम इत्यादि ॥ २७२ ॥

शोधनप्रयोजनमाह तस्मादित्यादि। शोधनमाह पटुनेति। पटुना सैन्धवेन रविदुग्धेन अर्कदुग्धेन। अग्नौ सन्ताप्येति तप्ततप्तानि ताम्रपत्राणि सिन्धुवाररसे सप्तधा अभिषिक्तानि ॥ २७३ ॥

मतान्तरमाह गोमूत्रेणेति। लवणलिप्तं ताम्रपत्रं दिनत्रयानन्तरं दृढाग्निना गोमूत्रेण सह याममात्रं पचेत् इत्युपदिशन्ति वृद्धा: ॥ २७४ ॥

अथ मारणमाह सूतमेकमित्यादि। स्पष्टम्। मतान्तरमाह जम्बीरेति। ताम्रतुल्यं सैन्धवं गन्धकञ्च संगृह्य जम्बीररसेन मर्दयेत् तेन ताम्रपत्रं लेपयेत्

चतुर्यामं पचेच्चुल्ल्यां पात्रपृष्ठे सगोमये ॥२७६॥
जलं पुनः पुनर्देयं स्वाङ्गशीतं विमर्दयेत् ।
म्रियते नात्र सन्देहः सर्वरोगेषु योजयेत् ॥२७७॥

मतान्तरम्। जम्बाम्भसा सैन्धवसंयुतेन सगन्धकं स्थापय शुल्वचूर्णं पक्वायमानं पुटयेत् सुयुक्त्या वान्तादिकं यावदुपैति शान्तिम्२७८

अन्यमतम् । शुद्धं ताम्रदलं विमर्द्य पटुना चारेण जम्बीरजैः
नीरैर्घस्रमिदं स्नुगर्कपयसा लिप्तं धमेत् सप्तधा ॥
निर्गुण्ड्यम्बुहिमं रसेन्द्रकलितं दुग्धाज्यगन्धेन तत्
तुल्येनाथ मृतं भवेत् सुपुटितं पञ्चामृतेन त्रिधा ॥२७९॥
वान्तिभ्रान्तिविवर्जितं चयरुजाकुष्ठानि पाण्ड्वामयम्
शूलं मेहगुदाङ्कुरानिलगदानुक्तानुपानैर्जयेत् ।
गुञ्जामात्रमिदं ततो द्विगुणितं तच्छुद्धकायेन चेत्
भुक्तः स्थौल्यजरापमृत्युशमनं पथ्याशिना वत्सरात् ॥२८०॥
ताम्रगुणं गरहरं यकृत्प्लीहोदरापहम् ।
क्रिमिशूलामवातघ्नं ग्रहण्यर्शोऽम्लपित्तजित् २८१॥ ताम्रमारण
पित्तलञ्च तथा कांस्यं ताम्रवत् मारयेत् पृथक् ।

---

ततः स्थालीमध्ये संस्थाप्य स्वल्पशरावेण आच्छाद्य सन्धिं लेपयेत् ततो वालुकाभिरूर्ध्वमापूर्य विपचेत् । मृते च संचूर्ण्य पञ्चगव्यैर्वारंवारं प्रपुटेद् यावद्वान्त्यादिशान्तिमुपैतीति ॥ २७५॥२७८ ॥

मतान्तरमाह शुद्धमित्यादि। सैन्धवं चारत्रयञ्च ताम्रतुल्यं संगृह्य जम्बीररसैस्तथा सुह्यर्कदुग्धेन सह मर्दयेत् । तेन लिप्तं ताम्रपत्रं सप्तधा धमेत् निर्गुण्डीरसैश्च सिञ्चेत् । यत् गैरिकाभचूर्णमधः पतति तत्संगृह्य प्रचाल्य तुल्येन गन्धकेन सूतेन च संमर्द्य दुग्धाज्याभ्यां पीठिकां कृत्वा प्रपुटेत् ततः पञ्चामृतेन त्रिधा पुटेदिति । एवंविधमृतताम्रस्य गुणमाह वान्तिभ्रान्तीत्यादि । गुदाङ्कुरम् अर्शोरोगम् । गुञ्जामात्रमिदमिति रोगोपशमनार्थं गुञ्जामात्रं ताम्रं प्रयोक्तव्यम् । रसायनार्थञ्च गुञ्जाद्वयमिति ॥ २७९॥२८० ॥

ताम्रवच्छोधनं तेषां ताम्रवत् गुणकारकम् ॥ २८२ ॥

इति पित्तलकांस्यमारणम् ।

नागवङ्गे च गलिते रविदुग्धेन सेचिते ।

त्रिवारं शुद्धिमायातः सच्छिद्रे हण्डिकान्तरे ॥२८३॥

मतान्तरम् । वङ्गं चूर्णोदके स्विन्नं यामार्द्धेन विशुध्यति ॥२८४॥

इति नागवङ्गशुद्धिः ।

भुजङ्गमगस्त्यञ्च पिष्ट्वा पत्रं प्रलेपयेत् ।

तत्र संविद्रुते नागे वासापामार्गसम्भवम् ॥२८५॥

क्षारं विमिश्रयेत्तत्र चतुर्थांशं गुरूक्तितः ।

प्रहरं पाचयेच्चुल्ल्यां वासादर्व्या च चालयेत् ॥२८६॥

तत उद्धृत्य तच्चूर्णं वासानीरेण मर्दयेत् ।

एवं सप्तपुटैर्नागं सिन्दूरं जायते ध्रुवम् ॥२८७॥

अन्यमतम् । त्रिभिः कुक्षिपुटैर्नागो वासारसविमर्दितः ।

सशिलो भस्मतामेति तद्रजः सर्वमेहजित् ॥२८८॥

दश नागबलं धत्ते वीर्य्यायुः कान्तिवर्द्धनम् ।

मेहात् हन्ति हृतं नागं सेव्यं वङ्गञ्च तद्गुणम् ॥२८९॥

---

कांस्यपित्तलयोः शोधनमारणादिकमाह पित्तलञ्चेत्यादि । स्पष्टम् ॥ २८१॥२८२

नागवङ्गयोः शोधनमाह नागवङ्गे इति । गलिते ते नागवङ्गे सच्छिद्रहण्डि-कान्तरनिविष्टे त्रिवारं च अर्कक्षीरेण अभिषिक्ते इति ॥ २८३ ॥

वङ्गशोधनमाह वङ्गेति । वङ्गपत्रं चूर्णोदके यामार्द्धं दोलायन्त्रे स्वेदये-दिति ॥ २८४ ॥

अथ नागमारणमाह भुजङ्गममिति । भुजङ्गमं सीसकम् । अगस्त्यं वकपुष्पम् । द्राविते नाग इति पर्णागस्त्ययोः पत्रलिप्तं सीसकं हण्डिकान्तर्निवेश्य अग्नौ प्रतापयेत् गलिते सति वासकापामार्गयोः क्षारं नागात् चतुर्थांशं वारंवारं क्षिपेत् । एवं प्रहरद्वयं पक्त्वा उद्धृत्य वासकरसैः मर्दयेत् ततः सप्तधा पुटेदिति ॥ २८५॥२८७ ॥

मतान्तरमाह त्रिभिरित्यादि । सशिलः मनःशिलया सहितः कुम्भीपुटैः

तारस्य रञ्जनो नागो वातपित्तकफापहः।
ग्रहणीकुष्ठगुल्मार्शः शोषव्रणविषापहः॥२९०॥ नागमारणम्।

वङ्गं सतालमर्कस्य पिष्ट्वा दुग्धेन संपुटेत्।
शुष्काश्वत्थभवैर्वल्कैः सप्तधा भस्मतां नयेत्॥२९१॥

मतान्तरम्। विशुद्धवङ्गपत्राणि द्रावयेद्धण्डिकान्तरे।
अपामार्गोद्भवं चूर्णं तत्तुल्यं तत्र मेलयेत्॥२९२॥
स्थूलाग्रया लौहदर्व्या शनैस्तदभिमर्दयेत्।
यावद्भस्मत्वमाप्नोति तावत् मर्द्यन्तु पूर्ववत्॥२९३॥
ततस्तं कोक्कतं चूर्णं कृत्वा चाङ्गारवर्जितम्।
नूतनेन शरावेण रोधयेच्च भिषग्वरः।
पश्चात्तीव्राग्निना पक्वं वङ्गभस्म भवेद्ध्रुवम्॥२९४॥

मतान्तरम्। वङ्गं खर्परके कृत्वा चुल्ल्यां संस्थापयेत् सुधीः।

---

गजपुटैः। एवंविधमृतस्य सीसकस्य गुणमाह सर्वमेहजिदित्यादि। अथ सीसकगुणं वङ्गेऽप्यतिदिशति वङ्गञ्च तद्गुणम् इति॥ १८८॥२९०॥

अथ वङ्गशोधनादिकमाह वङ्गमित्यादि। यद्यप्यत्र मारणयोग्यं वङ्गं नोक्तं तथापि दोषवद्वङ्गपरिहारार्थं तल्लक्षणं विशेषतो ज्ञेयम्। यथा श्वेतं मृदु लघु स्वच्छं स्निग्धमुष्णसहं हिमम्। सूक्ष्मपत्रकरं कान्तं वपु श्रेष्ठमुदाहृतम्। खुरकं मिश्रकञ्चापि द्विविधं वङ्गमुच्यते। उत्तमं खुरकं तत्र मिश्रकं त्वहितं मतमिति। वङ्गमित्यादि। हरितालं वङ्गञ्च समभागं गृह्णीयात्। अर्कदुग्धेन हरितालं निःपिष्य तेन वङ्गपत्रं लेपयेत्। ततोऽश्वत्थस्य शुष्कवल्कलैः सप्तधा वेष्टयित्वा प्रपुटेत्। एवं पुटैकेन भस्मतां याति॥ २९१॥

मतान्तरमाह विशुद्धवङ्गपत्राणीत्यादि। विशुद्धवङ्गपत्राणि हण्डिकामध्ये निक्षिप्य च अग्नौ प्रतापयेत्। गलिते सति तुल्यांशं अपामार्गक्षारं वारंवारं दत्त्वा लौहदर्विकया मर्दयेत् यावत् भस्मतामाप्नोति ततो जले वारंवारं प्रक्षाल्य च अङ्गाररहितं कुर्य्यात्। तत आतपे संशोष्य दुग्धेन मर्दयेत् तदनु नूतनशरावद्वयान्तर्निहितं कृत्वा सन्धिमालिप्य मृत्तिकावस्त्रैरावेष्ट्य तीव्राग्निना पचेदिति॥ २९२॥२९४॥

द्रवीभूते पुनस्तस्मिन् चूर्णान्येतानि दापयेत् ॥२९५॥
प्रथमे रजनीचूर्णं द्वितीये च यमानिका ।
तृतीये जीरकञ्चैव ततश्चिञ्चात्वगुद्भवम् ॥२९६॥
अश्वत्थवल्कलोत्थञ्च चूर्णं तत्र विनिक्षिपेत् ।
एवं विधानतो वङ्गं म्रियते नात्र संशयः ॥२९७॥
वङ्गं तिक्ताम्लकं रूक्षं किञ्चिद्वातप्रकोपणम् ।
मेदःश्लेष्मामयघ्नञ्च क्रिमिघ्नं मेहनाशनम् ॥२९८॥ वङ्गमारणम्
तप्तानि सर्वलौहानि कदलीमूलवारिणि ।
सप्तधा त्वभिषिक्तानि शुद्धिमायान्त्यनुत्तमाम् ॥२९९॥

---

वङ्गमित्यादि। वङ्गं स्थालिमध्ये संस्थाप्य च अग्नौ प्रतापयेत् । द्रवीभूते च प्रथमे तुल्यांशं हरिद्राचूर्णं देयं किञ्चित् विश्राम्य तदनन्तरं यमानिकाचूर्णं तत्तुल्यं प्रक्षेप्यम् एवं सर्वत्र। चिञ्चात्वगुद्भवमिति चिञ्चायास्त्वग्भस्म एवमश्वत्थवल्कलोद्भवं क्षारं प्रदेयमिति । एवं मृतवङ्गस्य गुणमाह वङ्गमित्यादि ॥१९५॥२९८॥

इदानीं लौहशोधनमारणादिकमाह तप्तानीति । सर्वलौहानीति सर्वाणि कान्तपाण्डिवज्रादीनि । यद्यपि अत्र लौहशोधनं सामान्येनैव उक्तं तथापि पातञ्जलीक्तशोधनविधिना लौहं निर्मलं कार्य्यम्। अन्यथा तदैव सुशोधितं न स्यात् । उक्तं हि लौहं प्रथमतः शाणादिना निर्मलीकृत्य पत्तलं कार्य्यं तदनु चाङ्गेरीमातुलुङ्गाम्लवेतसेन अम्लयित्वा प्रत्येकेन सप्तवारं आतपे संशोष्य ततः काञ्जिकादौ दिनद्वयं त्रयं वा स्थाप्यं एवमम्लभावनां विधाय तदनु गोमूत्रपिष्ट-त्रिफलाकल्केन आलिप्य आतपे शोषणीयम्। ततश्च मनःशिलावल्मीकमृत्तिका-कुठारिकामूलचाङ्गेरीश्वेतदूर्वासैन्धवैश्च जले पिष्टैः क्रमेण प्रलिप्य आतपे शोषणीयं ततश्च पत्तलं निर्मलं कृत्वा लौहम् अम्लीकृतं पुनः मूत्रपिष्टत्रिफलया वारिपिष्टमनोह्वया भावितं तत् भावयेत् । तदनु भस्त्रया वह्निं ध्मापयित्वा नातितप्तं कृत्वा लौहापेक्षया द्विगुणेषु गव्यदुग्धकाञ्जिकगोमूत्रत्रिफलाक्वाथेषु पृथक् वारत्रयं निर्वापणीयम् अथवा तप्तं कृत्वा सप्तवारं कदलीमूलवारिणि च अभिषिञ्चेत् । निषेकमात्रा च लौहपत्रं मनाक् तप्तं द्विगुणे तद्रसे क्षिपेत् । निषेक एष निर्दिष्टो निषेकार्थैःकवादिभिरिति । तदेवं निषेकं विधाय रात्रिमेकां विश्राम्य पुनरपि

मतान्तरम्। त्रिफलाष्टगुणे तोये त्रिफला षोड़शं पलम्।
तत्क्वाथे पादशेषे तु लौहस्य पलपञ्चकम् ॥२००॥
कृत्वा च सप्तपत्राणि सप्तवारं निषेचयेत्।
एवं प्रलीयते दोषो गिरिजे ! लौहसम्भवः ॥२०१॥ लौहशोधनम्
भानुपाकात्तथा स्थालीपाकाच्च पुटपाकतः।
निरुत्थो जायते लौहो यथोक्तफलदो भवेत् ॥२०२॥
अथ भानुपाकविधिः।—लौहे दृशदि लौहञ्च मुद्गरेण हतं मुहुः।
कृत्वाम्बुगलितं शुद्धं जलेन त्रैफलेन वा ॥२०३॥
च्चालयेद्बहुशः पश्चात् कृत्वा द्रवान्तरं पृथक्।
शोधितं भानुभिर्भानोर्भानुपाके प्रयोजयेत् ॥२०४॥

---

स्वच्छकाञ्जिकमात्रे लौहनिषेकं कर्त्तव्यम्। तदनु मारणादिषु योजये-दिति ॥ २९९ ॥

एवं शोधितस्य लौहस्य पलपञ्चकं गृहीत्वा लौहार्द्धभागं षोड़शांशं वा स्वर्णमाक्षिकचूर्णं त्रिफलाक्वाथेन आलोड्य लेपयेत्। तदनु कुठारच्छिन्ना त्रिफला-पराजितास्थि-संहार-हस्तिकर्ण-पलाशमूल-शतावरी-केशराजशालिमूलकर्णिकामूल-पुनर्नवाभृङ्गराजैः भेषजैः षोड़शांशैः आलिप्तम् आध्मापितभस्त्रमुक्तपवनेन प्रज्वलितवह्नौ स्थापयेत् धूलिमत् सर्वमस्वच्छसलिलञ्च सर्वथा विवर्जयेदिति। यदा गलति लौहं तदा यथोक्तत्रिफलाक्वाथे निक्षिपेत्। एवं सति यत् न मृतं तत् पुनरपि ध्मात्वा त्रिफलाक्वाथे क्षेपणीयम् एवं सप्तवारकृते सति यत् न मृतं तत् परित्याज्यम् अलौहकत्वात्। उक्तं हि सप्तवारं तथा लौहं पूर्ववत् पूर्वभेषजैः। ध्मात्वा ततः समुत्थाप्य निक्षिपेत् त्रिफलाम्भसि। एवंनामात्र यो लौहो न मृतस्त्याज्य एव स इति। लौहनिर्वापणार्थं यथा त्रिफलाक्वाथं कर्त्तव्यं तदाह त्रिफलाष्टगुणेति। ध्मातलौहनिर्वापणावशिष्टं त्रिफलाक्वाथं भानुपाकार्थं स्थापनीय-मिति। एवं मृतस्य लौहस्य भानुपाकादिभिः निरुत्थीकर्त्तव्यम्। निरुत्थीकरणहेतु-माह भानुपाक इत्यादि। भानुपाकविधिमाह लौहे इत्यादि। मारणानन्तरं लौहो-दूखले लौहमुद्गरेण सूक्ष्मसन्निभं सचूर्णं सलिलं त्रिफलाक्वाथं वा बहुशो दत्त्वा वारंवारं

क्षालयेत् भानुपाके तु लौहतुल्यं फलत्रिकम्।
जलं द्विगुणितं दत्त्वा चतुर्भागञ्च शेषयेत् ॥२०५॥
एवमुक्तं फलक्वाथजलं दत्त्वा पुनः पुनः।
शोषयेत् सूर्य्यतेजोभिर्निरन्तरमहस्त्रयः ॥२०६॥
अथवा तत्र तत् क्वाथं दत्त्वा दत्त्वा भिषग्वरः।
सप्त सप्तविधैरेव सप्तवारान् विशोधयेत्॥२०७॥ भानुपाकः।
इत्थमादित्यपाकान्ते स्थाल्यां पाकमुपाचरेत्।
स्थालीपाके फलं ग्राह्यमयसस्त्रिगुणीकृतम् ॥२०८॥
तस्य षोड़शिकं तोयमष्टभागावशेषितम्।
मृदुमध्यकठोराणामन्येषामयसा समम् ॥२०९॥
क्वाथनीयं समादाय चतुरष्टौ च षोड़श।
गुणानां स्थाप्यते तोयं शेषयेदयसा समम् ॥२१०॥
स्वरसस्यापि लौहेन स्थालीपाके समानता।
स्थाल्यां क्वाथादिकं दत्त्वा यथाविधि विनिर्मितम्।
पाकेन चीयते यस्मात् स्थालीपाक इति स्मृतः ॥२११॥

---

प्रक्षाल्य च अङ्गाररहितं कुर्य्यात्। ततोऽग्नौ वा आतपे शुष्कीकृत्य तीक्ष्णलौहखल्ले मर्दयेत्। ततो यथोक्तत्रिफलाक्वाथसहितं भानुपाके योजयेत् ॥ २००॥२०२ ॥

चालनार्थं भानुपाकार्थं वा कियन्माना त्रिफला ग्राह्या जलं वा कियन्मानं तदाह चालयेदित्यादि। निरन्तरमहस्त्रय इति। एवं कृतं क्वाथं निरन्तरं त्रिदिनं दत्त्वा सूर्य्यांशुभिः शोषयेत्। अथवा क्वाथं सप्तधा विभज्य सप्तवारं दत्त्वा शोषयेत् एवं सप्तधा कुर्य्यादिति भावः ॥-२०४॥२०७ ॥

भानुपाकानन्तरं स्थालीपाकः कर्त्तव्यः। तत्र कियत्त्रिफलामानं कर्त्तव्यं कियन्मानं वा जलं देयमित्यत आह स्थालीपाके इत्यादि। यथानिर्दिष्टद्रव्याणां मध्ये लौहोद्दिष्टजनस्य यद्दोषप्रत्यनीकं न भवति तत् परित्याज्यं यद्दोषप्रत्यनीकं तदनुक्तमपि देयमित्यत आह यथा दोषेति। यद्दोषप्रत्यनीकं व्याधिप्रत्यनीकञ्च स्थालीपाकार्थमुक्तं तेषां स्वरसाप्राप्तौ क्वाथं कीदृशं कर्त्तव्यमित्यतत आह मृदु

हस्तिकर्णपलाशस्य मूलञ्च शतमूलिका।
भृङ्गराजाख्यराजानामेषां निजरसैः सह ॥३१२॥
मिलित्वा वा विधातव्यं स्थालीपाके फलादनु।
यथा दोषौषधेनापि स्थालीपाको विधीयते ॥३१३॥
इति स्थालीपाकविधिः।

स्थालीपाके सुसंपक्वं प्रक्षाल्य स्वच्छवारिणा।
शुष्कं संचूर्ण्य यत्नेन पुटपाके प्रयोजयेत् ॥३१४॥
पुटाद्दोषविनाशः स्यात् पुटादेव गुणोदयः।
म्रियते च पुटाल्लौहस्तस्मात् पुटमुपचरेत् ॥३१५॥
यथा यथा प्रदीयन्ते पुटाः सुबहुशो यदि।
तथा तथा प्रकुर्वन्ति गुणानेव सहस्रशः ॥३१६॥
पुटपाकेन पक्वन्तु शस्यते रसकर्मसु।
दशादिशतपर्य्यन्तो गदे पुटविधिर्मतः ॥३१७॥

---

मध्येति। मृदुमध्यकठोराणां द्रव्याणां क्वाथ्यम् अयसा समं गृहीत्वा यथाक्रमं चतुरष्टौ षोड़शगुणं वा तोयं दत्त्वा लौहसमं ग्रहणीयमिति। केचित्तु व्याख्यनुरूपस्थालीपचनीयद्रव्याणामन्तरे कस्यचित् यदि स्वरसप्राप्तिर्नास्ति तत्र स्थालीपाकार्थं त्रिफलाक्वाथानुसारेण एव क्वाथ्यजलादिकं दत्त्वा क्वथनीयम्। तच्च क्वाथं स्थालीपाके प्रयोजयेदिति। स्वरसमानार्थमाह स्वरसस्येति। स्थालीपाकस्य निरुक्तिमाह स्थाल्यामित्यादि ॥ ३०८ ॥ ३११ ॥

प्रथमतः स्थाल्यां लौहचूर्णं त्रिफलाक्वाथेन आलोड्य वह्निपाकं विधाय ततोऽनन्तरं हस्तिकर्णपलाशादीनां व्यस्तानां समस्तानां वा स्वरसैरपि पूर्ववत् स्थालीपाकः कार्य्यः। ततो दोषप्रत्यनीकद्रव्याणां स्वरसैः क्वाथैर्वा स्थालीपाकः कार्य्यः इति ॥ ३१२ ॥ ३१३ ॥

स्थालीपाकानन्तरं स्वच्छवारिणा लौहं प्रक्षाल्य चातपे शोषयेत्। ततः संचूर्ण्य, वक्ष्यमाणविधिना पुटपाकं कुर्य्यात् इति। पुटपाकस्य प्रयोजनम् आह पुटादित्यादि। यैः द्रव्यैः पुटो देयः तेषां गुणाः सहस्रशो लौहेऽपि वर्त्तन्ते इत्यत आह यथा यथेति। पुटानां संख्याभेदेन कर्मभेदानाह दशादीत्यादि। दशादि

शतादिस्तु सहस्रान्तः पुटो देयो रसायने।
वाजीकर्मणि विज्ञेयः दशादि शतपञ्चकः ॥३१८॥
तावदेव पुटेल्लौहं यावच्चूर्णीकृतं जले।
निर्मलत्वे लघुत्वेन समुत्तरति हंसवत् ॥३१९॥
पुटपाकौषधस्यापि क्वाथो वा स्वरसोऽपि वा।
वक्ष्यमाणप्रमाणेन कर्त्तव्यो भिषजांवरैः ॥३२०॥
रसाभावे तु सर्वेषां क्वाथो ग्राह्यो मनीषिभिः।
अभावे स्वरसस्यापि क्वाथ एव फलत्रिकात् ॥३२१॥
त्रिफला त्रिवृता दन्ती कटुकी तालमूलिका।
वृद्धदारश्च वृश्चीरवृषपत्रकचित्रकाः ॥३२२॥
शृङ्गवेरविड़ङ्गौ च भृङ्गभल्लातकौषधम्।
दाड़िमस्य च पत्राणि शतपुत्री पुनर्नवा ॥३२३॥
कुठारक्रामकौ कन्दः तन्त्री भेकस्य पर्णिका।
हस्तिकर्णपलाशश्च कुलिशः केशराजकः ॥३२४॥
माणः खण्डितकर्णश्च गोजिह्वा लौहमारकः ॥३२५॥
गिरिशाल्तनकः प्रोक्तस्त्रिफलादिरयं गणः ॥३२६॥
सामान्यपुटपाकार्थमेतानिच्छन्ति सूरयः ॥३२७॥

---

शतपर्यन्तं व्याधिनिवारकम् एवमन्यच्च। एतच्च विशिष्टज्ञानार्थम्। यदा तु प्रतिपुटानन्तरं कतकीरज सदृशं पेषणं वस्त्रपूतञ्च भवति तदा संख्याविभेद-प्रयोजनं नास्ति सप्ताष्टाभिरेव विशिष्टफलदं भवतीति। यदा संख्याविभेदो न कार्य्यस्तथा विभेदेऽपि यथाविधल्लौहं कर्त्तव्यं तदर्थमाह तावदेवेति ॥३१८॥३१९

अथ पुटपाकौषधस्य क्वाथं स्वरसमपि यथा प्रयोज्यं तदर्थं साधारणविधान-माह पुटपाकेत्यादि ॥ ३२० ॥ ३२१ ॥

साधारणपुटपाकार्थं त्रिफलादिगणमाह त्रिफलेत्यादि। त्रिवृता रक्ततेउड़ीति ख्याता। चित्रकं चित्रकमूलं शतपुत्री शतमूली। कुठारः कुड़ाड़िया इति ख्याता। क्रामकः क्रान्तक्रामकः कन्दः शूरणकन्दः कुलिशोऽस्थिसंहारः ॥३२२॥३२७॥

विशेषपुटपाकाय गणानन्यान् शृणूदितान्।
एरण्डशारिवाद्राचाशिरीषाश्च प्रसारणी ॥३२८॥
माषमुद्गाख्यपर्ण्यौ विदारी कन्दकेतकौ।
एरण्डादिगणो ह्येष सर्ववातविकारनुत् ॥३२९॥
किरातममृता निम्बं कुस्तुम्बुरु शतावरी।
पटोलं चन्दनं पद्मं शाल्मल्युडुम्बरी जटा।
पैत्तिकामयंहन्तायं किरातादिगणो मतः ॥३३०॥
शृङ्गवेरस्य मूलानि निर्गुण्डी कौटजं फलम्।
करञ्जद्वितयं मूर्वा शोभाञ्जनशिरीषकौ ॥३३१॥
वरुणश्चार्कपर्णञ्च पटोलं कण्टकारिका।
शृङ्गवेरादिको ह्येष गणः श्लेष्मगदापहः ॥३३२॥
गोक्षुरक्षुरकौ व्याघ्री सिंहपुच्छीद्वयं स्थिरा।
गोक्षुरादिरिति प्रोक्तो वातश्लेष्महरो गणः ॥३३३॥
पटोलपत्रकोशीरकासमर्दापराजिताः।
लोध्रेन्दीवरकह्लारवाराहीकान्तया सह।
पटोलादिरिति ज्ञेयः पित्तश्लेष्मगदापहः ॥३३४॥
किंशुकः काश्मरी विश्वमग्निमन्थस्त्रिकण्टकः।
श्योनाकः शालपर्णी च सिंहपुच्छीद्वयं स्थिरा ॥३३५॥
पाटला कण्टकारी च बृहती विल्वमेव च।

---

विशेषपुटपाकार्थमाह विशेषेत्यादि। एरण्डादिगणमाह एरण्डेति। ए-
रण्डादिगणश्च वातघ्नः। तेन पुटनादिना लौहोऽपि वातघ्नो भवति ॥३२८॥ ३२९
किरातादिगणमाह किरातमित्यादि। कुस्तुम्बुरु धन्याकम्। किरातादिग[णः]
पित्तघ्नः ॥ ३३० ॥
शृङ्गवेरादिगणमाह शृङ्गवेरेति। शृङ्गवेरादिगणः कफघ्नः। कौटजं फ[लम्]
इन्द्रयवम् ॥ ३३१ ॥ ३३२ ॥
गोक्षुरादिगणमाह गोक्षुरेति। गोक्षुरादिगणश्च वातश्लेष्मघ्नः। एवमन्यत्र ॥[...]

किंशुकादिगणो ह्येष दोषत्रयहरो मतः ॥२३६॥
शतावरी बला धात्री गुडूची वृद्धदारकम् ॥२३७॥
वानरीभृङ्गराजाख्यविदारीगोक्षुरक्षुरैः।
वाजिगन्धाकणायुक्तैर्वाजीकर्मसु शस्यते ॥२३८॥
विदारी कन्दपिण्डाह्वभृङ्गराजशतावरी।
चीरकञ्चुकभल्लातामृतका चित्रकैस्तथा ॥२३९॥
करिकर्णपलाशैश्च मूषलीमधुकैरपि।
मुण्डिरी केशराजैश्च पुटो देयो रसायने ॥२४०॥
सामान्ये च विशेषे च पुटे यद्यत् प्रकीर्त्तितम्।
मिलितैरेकशो वा तैर्यथेष्टं पुटयेत्ततः ॥२४१॥
पुटपाके फलादीनामयसा ग्रहणं समम् ॥२४२॥
अथ पुटपाकप्रकरणमाह।—
हस्तमात्रमिते गर्त्ते करीषेणार्द्धपूरिते।
अथवा तुषकाष्ठाभ्यां पूरितेऽर्द्धे निधापयेत्।
लौहमग्निं ततो दत्त्वा तथैवोर्द्ध्वं प्रपूरयेत् ॥२४३॥

---

वाजीकर्मसु येन प्रपुटेत् तदाह शतावरीत्यादि। बला श्वेतवाट्यालं वाजिगन्धा अश्वगन्धा ॥ २३४ ॥ २३८ ॥

रसायनार्थं येश्च पुटो देय स्तानाह विदारीकन्देति। विदारी शुक्लभूमिकुष्माण्डम् ॥ २३९ ॥ १४० ॥

सामान्यविशेषपुटगणैर्व्यस्तैः समस्तैः वा पुटो देय इत्यत आह सामान्य इत्यादि तैरेकशः समस्तैः वा यथेष्टमिति दशादिसहस्रपर्य्यन्तं निर्मलत्वेन लघुत्वेन वा यथा हंसवत् जले समुत्तरति तथा प्रपुटेदिति ॥ २४१ ॥

पुटनार्थञ्च पुटकगणस्य स्वरसो ग्राह्यः स्वरसाभावे लौहसमं पुटनद्रव्यं संगृह्य यथोक्तक्वाथः कर्त्तव्यः। तेनायश्चूर्णं पङ्कोपमं कुर्य्यात्। ततो लौहे स्मयश्रे पात्रे वा चिक्षा सत्तुल्येन अपरपात्रेण आच्छाद्य सन्धिमालिप्य यथोक्तविधिना प्रपचेदिति ॥ २४२ ॥

दिवा वा यदि वा रात्रौ विधिनानेन पाचयेत्।
चतुर्भिः प्रहरैरेव पुटपाकेन मारयेत् ॥३४४॥
पुटपाके चणादूर्द्धं स्थितो भवति भस्मसात्।
अधस्तादपकृष्टस्तु मन्दो भवति वीर्य्यतः ॥३४५॥
कुण्डस्थो भस्मनाच्छन्न आकृष्टव्यः सुशीतलः।
समाकृष्टस्य तप्तस्य गुणहानिः प्रजायते ॥३४६॥ पुटपाकविधिः।

गुडस्य सूतराजस्य भागो भागद्वयं बलेः।
द्वयोः समं लौहचूर्णं मर्दयेत् कन्यकाद्रवैः ॥३४७॥
यामद्वयं ततो गोलं स्थापयेत्ताम्रभाजने।
आच्छाद्यैरण्डजैः पत्रैरुष्णो यामद्वयाद्भवेत् ॥३४८॥
त्रिरात्रं धान्यराशिस्थं तत् ततो मर्दयेद्दृढम्।
रजस्तद्वस्त्रगलितं नीरे तरति हंसवत्।
तीक्ष्णं मुण्डं कान्तलौहं निरुत्थं जायते मृतम् ॥३४९॥

---

पुटपाकप्रकारमाह हस्तमात्रेति हस्तैकमात्रं सर्वतो हस्तैकपरिमाणं तेन हस्तैकमात्रखननं सममध्यं कटाहसदृशं वर्त्तुलाकारं गर्त्तं कर्त्तव्यम्। वन्य करीषेण तुषेण काष्ठेन वा अर्द्धपूरिते तस्मिन् च अग्निं निधाय सम्पुटञ्च दत्त्वा अपरमर्द्धं करीषादिभिः पूरयेत्। एवं विधानेन चतुर्भिः प्रहरैरेव पुटपाकः कीर्त्तितः। प्रतिपुटान्ते लौहपात्रे सुपाषाणपात्रे वा केतकीरजःसदृशं चूर्णयेदिति। अन्यत् लौहमारणादिविशेषविधानं लौहप्रदीपादौ बोध्यम् ॥ ३४३ ॥ ३४४ ॥

पुटपाकस्य गुणदोषमाह पुटपाक इत्यादि ॥ ३४५ ॥ ३४६ ॥

पुटपाकमतान्तरमाह गुडस्येत्यादि। सूतराजस्य पारदस्य भागैकं तथा बलेर्गन्धकस्य भागद्वयं द्वयोः समं लौहचूर्णं संगृह्य मर्दयेत् यावत् कज्जलतामुपैति ततः कन्याद्रवैः यामद्वयं पिष्ट्वा ताम्रपात्रे तत् गोलकं संस्थाप्य एरण्डपत्रैः आच्छाद्य प्रपुटेत्। तत एरण्डकपत्रैः पुनरावेष्ट्य धान्यराशौ त्रिदिनं स्थापयेत्। तत उद्धृत्य मर्दयेत्। एवं पुनः पुनः कुर्य्यात् यावत् जले तरति ॥ ३४७॥३४९॥

मतान्तरम्। त्रिपिष्टाद्दशमांशेन दरदं तीक्ष्णचूर्णतः।
कन्यानीरेण संमर्द्य यामयुग्मञ्च संपुटेत्।
एवं सप्तपुटे मृत्युं लौहचूर्णमवाप्नुयात् ॥२५०॥

अथ लौहनिरुत्थीकरणम्।—
सर्वमेतत् मृतं लौहं पक्तव्यं मित्रपञ्चकैः।
यद्येवं स्यात् निरुत्थञ्च सेव्यं रक्तिचतुष्टयम् ॥२५१॥
मधुसर्पिस्तथा गुञ्जा टङ्कनं गुग्गुलुस्तथा।
मित्रपञ्चकमेतत्तु गलितं धातुमेलने ॥२५२॥

मतान्तरम्। गोघृतं गन्धकं लौहं तप्तखल्ले विमर्दयेत्।
दिनैकं कन्यकाद्रावै रुद्ध्वा गजपुटे पचेत्।
इत्येवं सर्वलौहानां कर्त्तव्यं स्यात् निरुत्थितम् ॥२५३॥

रसायने विशेषो यथा।—
घृतमधुगुञ्जाटङ्कनैः समं लौहभस्म मर्दयेच्च विचक्षणः।
धमेद्वह्नौ पुनर्लौहं तदा योज्यं रसायने ॥२५४॥
कषायः शोथशूलार्शःक्रिमिपाण्डुत्वशोषनुत्।
वयस्यं गुरु चक्षुष्यं सर्वमेदोऽनिलापहम् ॥२५५॥
आयुः प्रदाता बलवीर्य्यकर्त्ता रोगापहर्त्ता मदनस्य कर्त्ता।
अयः समानं न हि किञ्चिदस्ति रसायनं श्रेष्ठतमं नराणाम् २५६

---

मतान्तरमाह द्वादशमांशेनेति। दरदं हिङ्गुलं तीक्ष्णं लौहम् ॥ २५० ॥

अथ निरुत्थलौहस्य परीक्षामाह सर्वमित्यादि। मित्रपञ्चकैरिति वक्ष्यमाण-मित्रपञ्चकैः ॥ २५१ ॥

मित्रपञ्चकमाह मधुसर्पिरित्यादि। मतान्तरपरीक्षामाह गोघृतमित्यादि। अत्र घृतं गन्धं लौहञ्च समभागम्। रसायने तु घृतमधुगुञ्जाटङ्कनैः समं लौहं मर्दयित्वा वह्नौ धमेत् यदि पूर्ववत् संश्लिष्टं न भवति तदा योज्यम् अन्यथा परित्याज्यमिति ॥ २५२ ॥ २५४ ॥

कूष्माण्डं तिलतैलञ्च रसोनं राजिकां तथा।
मद्यमम्लरसञ्चैव त्यजेत् लौहस्य सेवकः ॥२५७॥
सामान्याद्द्विगुणं क्रौञ्चं कालिङ्गोऽष्टगुणस्ततः।
कलेः शतगुणं भद्रं भद्राद्वज्रं सहस्रधा ॥२५८॥
वज्रात् शतगुणं पाण्डि निरङ्गं दशभिर्गुणैः।
ततः कोटिसहस्रैर्वा कान्तलौहं महागुणम् ॥२५९॥ लौहमारण

ये गुणा मारिते मुण्डे ते गुणा मुण्डकिट्टके।
तस्मात् सर्वत्र मण्डुरं रोगशान्त्यै प्रयोजयेत् ॥२६०॥
शतोर्द्ध्वमुत्तमं किट्टं मध्यञ्चाशीति वार्षिकम्।
अधमं षष्टिवर्षीयं ततो हीनं विषोपमम् ॥२६१॥
दग्ध्वाचकाष्ठैर्मलमायसन्तु गोमूत्रनिर्वापितमष्टवारान्।
विचूर्ण्य लीढं मधुना चिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति ॥२६
किट्टाद्दशगुणं मुण्डं मुण्डात्तीक्ष्णं शताधिकम्।

---

मृतलौहस्य गुणमाह क्रमेत्यादि। क्रमाय: पाण्डिवज्रादिव्यतिरिक्तं लौहम्
लौहसेवनकाले वर्जनीयद्रव्याण्याह कूष्माण्डमित्यादि। कूष्माण्डमित्युपलक्ष
ककाराष्टकवर्जनाभिप्रायेण कूष्माण्डमित्युक्तं क्रमायसां गुणं पूर्वमुक्तम्। इदानीं
वज्रपाण्ड्यादिगुणञ्चाह सामान्यात् द्विगुणमित्यादि ॥ २५५ ॥ २५९ ॥

इति लौहाध्यायः।

अथ मण्डूरशोधनादिकमाह ये गुणा इति। मृतलौहे ये गुणाः प्रोक्ताः मुण्
किट्टे मण्डूरेऽपि ते गुणा वर्त्तन्ते। अत्र मुण्डं लौहोपलक्षितम्। यतो य
लौहस्य यद्गुणं तदुत्थितमण्डूरेऽपि तद्गुणमिति। उक्तं हि यत् लौहं यद्गु
प्रोक्तं तत् किट्टमपि तद्गुणमिति। यद्द यन्मण्डूरं श्रेष्ठं यच्च हीनं तदाह शतो
मित्यादि शतोर्द्धं शतवर्षादूर्द्धम् ॥ २६० ॥ २६१ ॥

इदानीं शोधनमाह दग्ध्वाचेत्यादि। आयसं मलं मण्डूरं विभीतककाष्ठानलै
दग्धव्यं यदा अग्निवर्णं भवति तदा गोमूत्रे निर्वापयेदिति एवं सप्तवारं कृत
शोधयेदिति ॥ २६२ ॥

तीक्ष्णात् लक्षगुणं कान्तं भक्षणात् कुरुते गुणम् ॥२६३॥
इति किट्टशोधनमारणम् ।

नागैः सुवर्णं रजतञ्च ताप्यैर्गन्धेन ताम्रं शिलया च नागम् ।
तालेन वङ्गं त्रिविधञ्च लौहं नारीपयो हन्ति च हिङ्गुलेन ॥२६४॥
इति स्वर्णादिशोधनमारणविधिः ।

स्वेदयेद्वालुकायन्त्रे जयन्त्याः स्वरसेन च ।
मणिमुक्ताप्रवालानि यामैकेन च शोधयेत् ॥२६५॥
मुक्ताफलानि शुद्धानि खल्ले पिष्ट्वा पुटेल्लघु ।
एवं भस्मत्वमाप्नोति वज्रकं काञ्जीयोगतः ॥२६६॥

मतान्तरम् । कुमार्य्या तण्डुलीयेन तुल्येन च निषेचयेत् ।
प्रत्येकं सप्तवारांश्च तप्ततप्तानि कृत्स्नशः ॥२६७॥
मौक्तिकानि प्रवालानि तथा रत्नान्यशेषतः ।
क्षणाद्विविधवर्णानि म्रियन्ते नात्र संशयः ॥२६८॥
स्त्रीदुग्धेन प्रवालञ्च भावयित्वा तु हण्डिके ।
मध्येऽपि तक्रसहितं स्थापयेत् तां निरोधयेत् ।
चुल्लयामग्निप्रतापेन म्रियते प्रहरद्वये ॥२६९॥ प्रवालमारणम् ।

कुलत्थस्य पलशतं वारिद्रोणेन पाचयेत् ।
तस्मिन् पादावशेषे च क्वाथेऽष्टौ मणयः शिलाः ॥२७०॥

---

मण्डूरात् मुण्डादिलौहानां गुणविभेदमाह किट्टादित्यादि ॥ २६३ ॥

अथ स्वर्णादीनां साधारणमारणद्रव्यं समासत आह नागैरित्यादि ॥ २६४ ॥

अथ मणिमुक्ताप्रवालादीनां साधारणशोधनमाह स्वेदयेदित्यादि ॥ २६५ ॥

तेषां साधारणमारणमाह मुक्ताफलेति विशुद्धानि मुक्ताफलानि खल्ले पिष्ट्वा लघुपुटे पचेत् वज्रकन्तु काञ्जिकसहितं पुटे पचेदिति । अथवा त्रिविधानि मणिमुक्ताप्रवालानि सप्तवारान् तप्ततप्तानि कुमार्य्यादिस्वरसे प्रक्षेप्याणि ॥२६६॥२६८

विशेषमारणमाह स्त्रीदुग्धेति । स्पष्टम् ॥ २६९ ॥

आतपे त्रिदिनं शोध्याः क्वाथसिक्ताः पुनः पुनः।
शुध्यन्ते सर्वरत्नानि मणयश्च न संशयः ॥३७१॥

इति मुक्तादिशोधनमारणम्।

कृत्वा चणकसंस्थानं गोमूत्रैर्भावयेत् त्र्यहम्।
समटङ्गनसंपिष्टं मृतमित्युच्यते विषम् ॥३७२॥
अथवा त्रैफले क्वाथे विषं शुध्यति पाचितम्।
दोलायां त्रिफलाक्वाथे छागीक्षीरे च पाचितम् ॥३७३॥

---

कल्लत्येत्यादौ। अष्टौ मणयः शिला इति। अष्टौ मणयः मुक्तादयः। शिला मनःशिला ॥ ३७० ॥

अथ विषोपविषशोधनादिकमाह। विषं हि द्विविधं स्थावरजङ्गमभेदात्। मूलाद्यात्मकं स्थावरविषं दशविधम्। सर्पादिसम्भवं जङ्गमविषं षोड़शात्मकम्। मूलं पत्रं फलं पुष्पं त्वक्क्षीरं सारं निर्य्यासो धातवः कन्दः स्थावरस्याश्रया दश। तत्र मूलविषं करवीरादि, पत्रविषं विषपत्रादि फलविषं कर्कोटकादि पुष्पविषं वेत्रादि त्वक्सारनिर्य्यासविषाणि करम्भादीनि क्षीरविष स्नुह्यादि धातुविषं हरितालादि कन्दविषं वत्सनाभशृङ्गकादि। तत्र कन्दजविषञ्चाष्टादशविध यथा दार्विकं वत्सनाभञ्च सैकतं शृङ्गकं मुस्तकं सार्षपं कौमं शृङ्गी कालकूटं दर्दुरं हालाहलं यमदंष्ट्रा मेषशृङ्गी हारिद्रं कर्कटं रक्तशृङ्गी ग्रन्थिकं केशरञ्च कन्दजविषम्। तेषामाद्यञ्चाष्टविधविषं यौगिकम्। अन्यं दशविधञ्च विवर्जनीयमिति। जङ्गमविषस्य षोड़शाश्रयानाह। दृष्टिनिश्वासदंष्ट्राश्च नखमूत्रमलानि च। शुक्रं लालामुखं स्पर्शः संदंशश्चावमर्दितम्। गुदास्थिपित्तशूकानि दशषट्जङ्गमाश्रयाः। दृष्टिनिश्वासविषाः दिव्याः सर्पाः। दंष्ट्राविषाः भौमाः सर्पाः। नखविषाः व्याघ्रादयः। मूत्रपुरीषविषाः गृहगोधिकादयः। शुक्रविषाः मूषिकादयः। लालाविषाः उच्चिटिङ्गादयः। लालास्पर्शमूत्रपुरीषार्त्तव शुक्रमुखसंदंशदंष्ट्रा स्पर्शावमर्दितगुदपुरीषविषाश्चित्रशीर्षादयः। अस्थिविषाः सर्पादयः। पित्तविषाः मकुलमत्स्यादयः। शूकविषाः भ्रमरादयः। एषां स्थावरोपलक्षितं यौगिकमष्टविधकन्दविषं यदुक्तं तेषां शोधनादिकमाह। कृत्वा चणकेति। चणकसंस्थानं चणकसदृशम्। गोमूत्रैः भावयेदिति गोमूत्रैः दोलायन्त्रे स्वेदयेदिति ॥ ३७२ ॥

गोमूत्रपूर्णपात्रे च दोलायन्त्रे विषं पचेत्।
दशतोलकमानेन चादौ वैद्यो दिवानिशम् ॥३७४॥
मतान्तरम्। विषभागांश्चणकवत् स्थूलान् कृत्वा तु भाजने।
तत्र गोमूत्रकं दत्त्वा प्रत्यहं नित्यनूतनम् ॥३७५॥
शोषयेत्त्रिदिनादूर्द्ध्वं धृत्वा तीव्रातपे ततः।
प्रयोगेषु प्रयुञ्जीत भागमानेन तत् विषम् ॥३७६॥ विषशुद्धिः।
अर्कसेहुण्डधूस्तूरलाङ्गलीकरवीरकाः।
गुञ्जाहिफेनावित्येताः सप्तोपविषजातयः ॥३७७॥
धूस्तूरस्य च यद्बीजमन्यच्चोपविषञ्च यत्।
यच्छोध्यं दोलिकायन्त्रे चीरपूर्णेऽथ पात्रके ॥३७८॥ उपविषशुद्धिः
निस्तुषं जयपालञ्च द्विधा कृत्वा विचक्षणः।
एतद्बीजस्य मध्यन्तु पत्रवत् परिवर्जयेत् ॥३७९॥
अष्टमांशेन चूर्णेन टङ्गनस्य च मेलयेत्।
केशयन्त्रे च तद्भाव्यं पाच्यं दुग्धेन संप्लुतम्।
त्रिरात्रं शुद्धिमायाति जैपालमस्तोपमम् ॥३८०॥ जैपालशुद्धिः
चिञ्चापत्ररसे कर्षे वस्त्रपूते पलद्वयम्।
स्नुहीचीरं रौद्रयन्त्रे भावयेद् यत्नतः सुधीः।
द्रवे शुष्के समुत्तार्य्य सर्वरोगेषु योजयेत् ॥३८१॥ स्नुहीचीरशुद्धिः

---

अथवेत्यादौ पाचितमित्यत्र व्याहमिति शेषः। एवं चीरे च पाचितमिति॥३७२॥

अथोपविषमाह अर्केत्यादि। उपविषा गौणविषाः। अर्कादयश्च स्थावरविषान्तर्भूता एव। तेषां शोधनमाह धूस्तूरस्येति ॥ ३७४ ॥ ३७८ ॥

अथ फलविषाणामन्तरे जैपालशोधनमाह निस्तुषमित्यादि। तुषरहितं जैपालं द्विधाकृत्य मध्यस्थं पत्रवत् द्रव्यं परित्यज्य नूतनशरावोपरि घर्षणीयं यावत् निःस्नेहतां व्रजेत् ततोऽष्टमांशटङ्गनेन सह मिश्रीकृत्य केशयन्त्रेण भाव्यं दुग्धेन च पाच्यमिति ॥ ३७९ ॥ ३८० ॥

चिरन्तनं जलौकान्तु ताम्रपात्रेषु रक्षयेत् ।
चतुर्माषं निशाचूर्णं जलाष्टकपले क्षिपेत् ॥३८२॥
तस्मिन् क्षिपेत् जलौकां तां स्वयं लालां परित्यजेत् ।
त्यक्तलालाजलौका च सा योज्या रक्तमोक्षणे ॥३८३॥
रोमपृष्ठा च कपिला रक्तरेखा च दुर्बला ।
वर्जनीया विशेषेण भिषजा कीर्त्तिमिच्छता ॥३८४॥

इति जलौकाशोधनम् ।

वीजमादौ समादाय रौद्रयन्त्रे विशोषयेत् ।
ईषत्सैन्धवयुक्तेन द्रवेण यत्नतः सुधीः ।
अपामार्गस्य वा तोयैर्वार्द्धक्यवीजशोधनम् ॥३८५॥
मतान्तरम् । वृद्धदारकवीजन्तु पक्वं दोलाकृतं पचेत् ।
दुग्धपूर्णेषु पात्रेषु ततः शुध्यति निश्चितम् ॥३८६॥
अपमार्गकषायेण निम्बुवीजं विशोधयेत् ।
शिग्रूकार्पासवीजानि अपामार्गस्य वीजकम् ॥३८७॥
घर्मेण शोधनं तेषां न दद्यात् सैन्धवं ततः ।
तिक्तकोषातकी दन्तीः पटोली चेन्द्रवारुणी ॥३८८॥
कटु तुम्बी देवदाली काकतुण्डी च शस्यते ।
धात्रीफलरसेनैव महाकालस्य शोधने ॥३८९॥
करञ्जयुग्मयोर्वीजं भृङ्गराजेन शोधयेत् ।
गुञ्जादिसर्ववीजानां नरमूत्रैः पटुं विना ।

---

क्षीरविषाणां मध्ये स्नुहीक्षीरशोधनमाह क्षिप्तापत्रेति ॥ ३८१ ॥

अथ जलौकाशोधनमाह चिरन्तनमित्यादि वर्जनीयजलौकामाह रोम पृष्ठेति ॥ ३८२ ॥ ३८४ ॥

वृद्धदारकशोधनमाह । वीजमित्यादि । वार्द्धक्यवीजमिति वृद्धदारक वीजम् ॥ ३८५ ॥ ३८६ ॥

नारिकेलाम्बुना शोध्यं विल्वं भल्लातकोद्भवम् ॥३९०॥
गुडूचीत्रिफलाक्वाथे क्षीरे चैव विशेषतः ।
पक्वा च खण्डशः शुद्धं गृह्णीयात् मृदु गुग्गुलुम् ॥३९१॥

इति विषोपविषशोधनम् ।

---

## द्वितीयोऽध्यायः ।

क्षीराब्धेरुत्थितं देवं पीतवस्त्रं चतुर्भुजम् ।
वन्दे धन्वन्तरिं भक्त्या नानागदनिसूदनम् ॥ १ ॥
प्रायशो वपुषः शुद्धिं कृत्वा देयं तदौषधम् ।
अतः पूर्वं चिकित्सायां रेचकौषधमुच्यते ॥ २ ॥
तुल्यं टङ्कनपारदं समरिचं तुल्यांशकं गन्धकम्
विश्वा च द्विगुणा ततो नवगुणं जैपालचूर्णं क्षिपेत् ।

---

अन्येषां वीजानां साधारणशोधनमाह अपामार्गेति । स्पष्टम् ॥ ३८७ ॥ ३९१ ॥

इति प्रथमोऽध्यायः ।

द्रव्यादीनां शोधनादिपरिभ्यक्त्यनन्तरं धर्मार्थकाममोक्षाणां मूलस्य आरोग्यस्य श्रेयसो जीवितस्य च अपहन्तॄणां रोगाणामुपशमनार्थमिदानीं चिकित्साध्यायः । शिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकं प्रारिप्सिताध्यायसमाप्तिफलकं तत्-प्रतिबन्धकविघ्नविध्वंसमात्रफलकं वा स्वयंकृतमादिदेवधन्वन्तरिनमस्कारं शिष्य-शिक्षार्थं प्राक् प्राथेषीत् । अथवा धन्वन्तरिनामोत्कीर्त्तनमेव सर्वरोगनिवा-रकत्वात् गरीयस्त्वाच्च नमस्कारपूर्वं तन्नाम आदौ निबध्नाति क्षीराब्धेत्यादि । क्षीराब्धेरुत्थितः क्षीरसमुद्रमन्थनादमृतैः सह उत्थितः स च धन्वन्तरिः विष्णो-रवतारविशेषः व्याधिपीडितानां देवानां रोगनिरासार्थं प्रजाहितार्थञ्च अनुकम्पया प्रकाशितः । देवमित्यादि देवम् । नानागदनिसूदनमिति चिकित्सया किंवा तन्नामस्मरणादेव व्याधयो दूरादेव पलायन्ते ॥ १ ॥

शरीरशोधनानन्तरमौषधं प्रदेयमाणकारित्वादत आह प्रायश इत्यादि ॥२॥

गुञ्जैकप्रमितो रसो हिमजलैः संसेवितो रेचयेत्
यावन्नोष्णजलं पिबेदपि वरं पथ्यञ्च दध्योदनम्॥३॥ इच्छाभेदीरस

जैपालाष्टौ द्विको गन्धस्त्रिगुस्ठी मरिचं द्विकम्।
एकः सूतः सोहगैका गुञ्जा माला वटीकृता ॥ ४ ॥
शूलव्याधिप्रभृतयः कुष्ठैकादशपित्तजाः।
भगन्दरादिहृद्रोगाः सर्वे नश्यन्ति भक्षणात् ॥५॥ इच्छाभेदीरस

रसवलिगगनार्कं शुद्धतालं विषञ्च
त्रिकटुत्रिफलमेतत् टङ्कनं भृष्टमेभिः।
सममिह जयपालोद्भूतचूर्णं विमर्द्यम्
द्विनिशमनिशमेतद् भृङ्गराजोत्थवारा ॥ ६ ॥
भवति गदमुरारिः स्वेच्छया भेदकोऽयम्
हरति सकलरोगान् सन्निपातानशेषान्।
इह हि भवति पथ्यं मत्स्यमांसादि सर्वम्
घृतविलुलितमस्मिन् भोजनं भूरि देयम् ॥ ७ ॥

गदमुरारिः इच्छाभेदी

अभयाचूर्णमादाय नूतनैर्जयपालकैः।
पञ्चमांशेन मिलितैः स्नुहीदुग्धेन मर्दिताः ॥८॥
गुड़िकास्तस्य कर्त्तव्या वर्त्तुलाश्चणकप्रभाः।

---

तुल्येति। प्रत्येकमेकभागतुल्यं त्रिवृा च द्विगुणा तत इति त्रिवृायाः एकभाग-
पेक्षया द्वैगुण्यम् एवं जैपालचूर्णस्यापि नवगुणत्वं हिमजलैरिति शिशि-
रजलैः ॥ ३ ॥

जैपालेति। जैपालस्याष्टौ भागाः तथा गन्धकस्यापि द्वौ भागौ एवं शुण्ठी-
मरिचादीनां यथोक्तो भागो ग्राह्यः ॥ ४—५ ॥

गदमुरारिरसे बलिर्गन्धकं गगनमभ्रं अर्कस्ताम्रम्। सममिहेति। जैपाल-
चूर्णस्य सर्वचूर्णसमत्वं ज्ञेयम् एतत् सर्वमेकीकृत्य भृङ्गराजोत्थरसैः निरन्तरं
दिनद्वयं घर्षणीयम् ॥ ६—७ ॥

एकैकस्यास्य टङ्कस्य रेचनैश्च रसैस्तदा ॥९॥
रुक्मिणो न च दाहः स्यात् न च मूर्च्छा भ्रमः क्लमः।
वेगतः सारयेदेषा विशेषादामनाशिनी ॥१०॥
निरूहेण तथा नैव तथा विन्दुघृतेन च।
त्रिवृता न तथा रेच्या यथा स्याद् गुड़िकोत्तमा ॥११॥
अतिशुद्धं भवेद्देहमतिप्रबलमुत्तमम्।
अतिरूपमतिप्रौढ़मत्यायुस्करमुत्तमम् ॥१२॥
विष्टम्भे गुड़िका देया चोदरे दारुणामये।
अधोदेशेषु सर्वेषु गुदेषु च महौषधिः।
यते चीयते सामः कामकायविवर्द्धनः ॥१३॥ रुक्मिणी रसः।
पारदं गन्धकं कुर्य्यात् सौभाग्यं पिप्पलीसमम्।
समानि जयपालानि क्रियन्ते रेचनाय च।
तेन रेचयेत् सम्यगुष्णेनैव प्रशाम्यति॥१४॥इच्छाभेदिका गुड़िका।
शुण्ठीमरिचसंयुक्तं रसगन्धकटङ्कनम्।
जैपालास्त्रिगुणाः प्रोक्ताः सर्वमेकत्र चूर्णयेत् ॥१५॥
इच्छाभेदी द्विगुञ्जः स्यात् सितया सह दापयेत्।
यावन्तश्चुलुकाः पीता स्तावद्वारान् विरेचयेत्।
दनं खादितव्यमिच्छाभेदी यथेच्छया॥१६॥ इच्छाभेदी रसः।
देवदालीस्वर्णपुष्पं गुड़ेन वटकीकृतम्।
गुदमध्ये प्रदेयैषा पातयेच्च महागदम् ॥१७॥

---

अभयेत्यादौ पञ्चमांशेन मिलितैरिति हरीतकीचूर्णात् पञ्चमांशेन मिलितैः
ाजकैः ॥ ८—१२ ॥

च्छाभेदी गुड़िकायां सौभाग्यं टङ्कनक्षारं समानि जयपालानीति सर्वैस्तुल्यं
चूर्णमित्यर्थः। शीतेनेति शीताचारेण ॥ १४ ॥

च्छाभेदीरसे जैपालास्त्रिगुणेति एकभागापेक्षया जैपालचूर्णस्य त्रैगुण्य-
: ॥ १५—१६ ॥

अधश्च साममायाति पुनः सा दीयते गुदे।
प्रक्षाल्य वारिणा चैषा वारंवारं प्रयच्छति ॥१८॥
अनेन क्रमयोगेन मलसामं विरेचनम्।
जायते सकलं देहं शुद्धवर्णं निरामयम् ॥ १९ ॥

पुष्परेचनी गुड़िका।

शुद्धसूतञ्च गन्धञ्च विषञ्च जयपालकम्।
कटुत्रयञ्च त्रिफला टङ्गनञ्च समांशकम् ॥२०॥
अस्य मात्रा प्रयोक्तव्या गुञ्जात्रयसमानतः।
सर्वेषु ज्वररोगेषु सामवाते विशेषतः ॥२१॥
नाशयेत् श्वासकासञ्च अग्निमान्द्यं विशेषतः।
ब्रह्मणा निर्मितः पूर्वं रसः सर्वाङ्गसुन्दरः ॥२२॥ सर्वाङ्गसुन्दरो रसः।

बालवृद्धकृशक्षीणभीरुसार्त्तभयार्दिताः।
कृत्तशोषतृषायुक्ता गर्भिणी च नवज्वरी ॥२३॥
अधो गच्छति यस्यासृक् सूतिकातङ्कपीड़िता।
नैते विरेकयोग्याः स्युरन्येषाञ्च बलाबलम् ॥२४॥
नवज्वरे च ये रोगाः भेदकाः परिकीर्त्तिताः।
ते तथैव प्रयोक्तव्या वीक्ष्य देहमलादिकम् ॥ २५ ॥

विरेकाधिकारः।

---

पुष्परेचनीगुड़िकायां देवदाली हस्तिघोषकः स्वर्णपुष्पम् आरग्वधः त फलमज्जा ग्राह्या। गुड़ेन गुड़िकेति मिलितचूर्णात् गुड़स्य द्वैगुण्यम् ॥ १७—२२

निषिद्धविरेचकानाह बालवृद्धेति बालस्य सुकुमारत्वात्, वृद्धस्य क्षीणध त्वात्, कृशस्य क्षीणप्राणत्वात्, भीतस्य व्याकुलमनस्त्वात्; रूक्षस्य विरेचनं अह दूषकत्वात् शोषिणः पुरीषस्य उपस्तम्भकत्वात्, तृष्णार्त्तस्य रोगवर्द्धकत्वात्, नव अविपक्वदोषनिर्हरणे: मरणप्रसङ्गात् एवं सर्वत्र निषिद्धम् ॥ २३—२५ ॥

# अथ ज्वरचिकित्सा ।

क्रमेण वृद्धान् रसगन्धहिङ्गुलान् नैकुम्भवीजान्यथ दन्तिवारिणा।
पिष्ट्वास्य गुञ्जाभिनवज्वरापहा जलेन चार्द्रा सितया प्रयोजिता १

नवज्वराङ्कुशः ।

तुल्यांशं मर्दयेत् खल्वे पिप्पलीहिङ्गुलं विषम् ।
द्विगुञ्जा मधुना देया वातज्वरनिवृत्तये ॥२॥ हिङ्गुलेश्वरो रसः ।
भवेत् समं सूतसमुद्रफेनहिङ्गूलगन्धं परिमर्द्य यत्नात् ।
नवज्वरे वल्लमितं त्रिघस्रमार्द्राम्बुनाऽयं ज्वरधूमकेतुः ॥३॥

ज्वरधूमकेतुः रसः ।

अव्यक्तः सिद्धिदः शुद्धो रोगघ्नः कीर्त्तिवर्द्धनः ।
यशःप्रदः शिवः साक्षात् मृत्युञ्जयरसः स्मृतः ॥४॥
विषस्यैकं तथाभागं मरिचं पिप्पलीकणा।
गन्धकस्य तथा भागं भागं स्यात् टङ्कनस्य च ॥५॥
सर्वत्र समभागं स्यात् हिङ्गुलन्तु द्विभागिकम् ।
चूर्णयेत् खल्वमध्ये तु मुद्गमानां वटीं चरेत् ॥६॥
जम्बीरस्य रसेनात्र कार्य्यं हिङ्गुलशोधनम् ।
रसश्चेत् समभागः स्यात् हिङ्गुलं नेष्यते तदा ॥ ७ ॥
गोमूत्रशोधितश्चात्र विषं सौरविशोधितम् ।
मृत्युरूपं ज्वरं हन्ति मृत्युञ्जयरसः स्मृतः ॥८॥

---

सर्वरोगप्राधान्यात् प्रथमं ज्वरचिकित्सामाह क्रमेणेत्यादि। नैकुम्भवीजानि दन्तीवीजानि । दन्तिवारिणेति भाव्यद्रव्यसमं क्वाथ्यं क्वाथ्यादष्टगुणं जलमित्यादि परिभाषया दन्तीक्वाथं ग्राह्यं तेन क्वाथेन पिष्ट्वा सप्तधा भावना कार्य्या ॥ १ ॥

हिङ्गुलेश्वरे वातज्वरेति वातप्रधानज्वरे इत्यर्थः ॥ २ ॥

धूमकेतुरसे सूतादिद्रव्यचतुष्टयं समं समभागम्। परिमर्द्य त्रिघस्रमिति आर्द्रकरसेन त्रिदिनं परिमर्द्य धूमकेतुः भवेदित्यर्थः ॥ ३ ॥

मृत्युर्विनिर्जितो यस्मात् तेन मृत्युञ्जयो रसः ।
मधुना लेहनं प्रोक्तं सर्वज्वरनिवृत्तये ॥९॥
दध्योदकानुपानेन वातज्वरनिवर्हणः ।
आर्द्रकस्य रसैः पानं दारुणे सान्निपातिके ॥१०॥
जम्बीरद्रवयोगेन अजीर्णज्वरनाशनः ।
अजाजीगुड़संयुक्ता विषमज्वरनाशनः ॥११॥
तीव्रज्वरे महाघोरे पुरुषे यौवनान्विते ।
पूर्णमात्रा प्रदातव्या पूर्णं वटीचतुष्टयम् ॥१२॥
स्त्रीबालवृद्धक्षीणेषु चार्द्धमात्रा प्रकीर्त्तिता ।
अतिवृद्धे च क्षीणे च शिशौ चाल्पवयस्यपि ॥१३॥
तुर्य्यमात्रा प्रदातव्या व्यवस्था सारनिश्चिता ।
नवज्वरे महाघोरे यामैकात् नाशयेत् ध्रुवम् ॥१४॥
मध्यज्वरे तथा जीर्णे त्रिरात्रात् नाशयेत् ध्रुवम् ।
सप्ताहात् सन्निपातोत्थं ज्वराजीर्णकसंज्ञकम् ॥१५॥ मृत्युञ्जयो रसः

विषं त्रिकटुकं मुस्तं हरिद्रा निम्बपत्रकम् ।
विड़ङ्गमष्टमं चूर्णं छागमूत्रैः समं समम् ।
चणकाभा वटी कार्य्या स्यात् जया योगवाहिका ॥१६॥ जयावटी

विषं पाठाश्वगन्धा च वचा तालीशपत्रकम् ।
मरिचं पिप्पलीनिम्बमजामूत्रेण तुल्यकम् ।
वटिका पूर्ववत् कार्य्या जयन्ती योगवाहिका ॥१७॥ जयन्ती वटिका

जयन्ती च जया वाथ क्षीरैः पित्तज्वरापहा ।
मुद्गामलकयूषेण पथ्यं देयं घृतं विना ॥१८॥

---

मृत्युञ्जयरसे पिप्पलीकणेति षष्ठीसमासः नतु कणाजीरकम् । यदाह सोमेश्वरः । विषस्यैकं तथा भागं पिप्पल्या मरिचस्य च । गन्धकस्य तथा भागं भागं स्यात् टङ्गणस्य च । सर्वत्र समभागं स्यात् हिङ्गुलन्तु द्विभागिकमित्यादि ॥४॥१५॥

जयन्ती वा जया वाथ सक्षौद्रमरिचान्विता।
सन्निपातज्वरं हन्ति रसश्चानन्दभैरवः ॥१९॥
जयन्ती विजया वाथ विषमज्वरनुत् घृतैः।
सर्वज्वरं मधुव्योषैः गवां मूत्रेण शीतकम् ॥२०॥
चन्दनस्य कषायेण रक्तपित्तज्वरापहा।
जयन्ती वा जया वाथ माक्षिकेण च कासजित् ॥२१॥
जयन्ती वा जया क्षीरैः पाण्डुशोथविनाशिनी।
जयन्ती वा जया वाथ तण्डुलोदकपानतः ॥२२॥
अश्मरीं हन्ति वा चिरं मूत्रकृच्छ्रन्तु दारुणम्।
जयन्तीं वा जयां वाथ गोमूत्रेण युतां पिबेत् ॥२३॥
हन्त्याशु क्राकणं कुष्ठं सुलेपेन च तद् द्रुतम्।
द्विनिष्कं केतकीमूलं पिष्ट्वा तोयेन पाययेत् ॥२४॥
जयन्ती वा जया वाथ मेहं हन्ति सुराह्वयम्।
जयन्ती वा जया वाथ मधुना मेहजित् भवेत् ॥२५॥
लोध्रमुस्ताभयातुल्यं कट्फलञ्च जलैः सह।
क्राथयित्वा पिबेच्चानु मधुना सर्वमेहजित् ॥२६॥
जयन्ती वा जया वाथ गुड़ैः कोष्णजलैः पिबेत्।
त्रिदोषोत्थं हरेद् गुल्मं रसो वानन्दभैरवः ॥२७॥
जयन्ती वा जया हन्ति शुण्ठ्या सर्वं भगन्दरम्।
जयन्ती वा जया वाथ तक्रेण ग्रहणीप्रणुत् ॥२८॥
जयन्ती वा जया वाथ रसश्चानन्दभैरवः।
रक्तपित्ते त्रिदोषोत्थे शीततोयेन पाययेत् ॥२९॥
जयन्ती वा जया वाथ घृष्ट्वा स्तन्येन चाञ्जयेत्।
स्रावणं सर्वदोषोत्थं मांसवृद्धिञ्च नाशयेत् ॥३०॥ जया जयन्ती वटी

जयावटिकायां जयन्तीमूलचूर्णं तुल्यांशं देयं योगवाहित्वात् एव जयन्ती-वटिकायामपि ॥ १९ ॥ ३० ॥

भस्म षोड़शनिष्कं स्यादारख्योपलकोद्भवम् ।
निष्कत्रयञ्च मरिचं विषनिष्कञ्च चूर्णयेत् ॥३१॥
अयं भस्मेश्वरो नाम सन्निपातनिकृन्तनः ।
पञ्च गुञ्जामितं खादेदार्द्रकस्य रसेन तु ॥३२॥
ताम्रभस्मविषं हेम्नः शतधा भावितं रसैः ।
गुञ्जार्द्धं सन्निपातादि नवज्वरहरं परम् ॥३३॥
आर्द्राम्बुशर्करासिन्धुयुतः स्वच्छन्दभैरवः ।
इक्षु द्राक्षासिताञ्चापि दधि पथ्यं रुचौ ददेत् ॥३४॥

स्वच्छन्दभैरवो रसः ।

हिङ्गुलञ्च विषं व्योषं टङ्कनं नागराभया ।
जयपालसमायुक्तं सद्यो ज्वरविनाशनम् ॥ ३५ ॥

ज्वरमुरारिरसः ।

सगन्धटङ्कं रसतालकञ्च विमर्दयेद्भावय मीनपित्तैः ।
दिनद्वयं वल्लमितं प्रदद्यात् वृन्ताकतक्रौदनमेव पथ्यम् ।
नवज्वरेभाङ्कुशनामधेयः चणेन घर्मोद्गमसातनोति ॥३६॥

नवज्वरेभाङ्कुशः ।

सूतार्कगन्धचपलाजयपालतिक्ता,
पथ्या त्रिवृच्च विषतिन्दुकजं समांशम् ।
संमर्द्य वज्रिपयसा मधुना द्विगुञ्जः,
त्रैलोक्यडुम्बररसोऽभिनवज्वरघ्नः ॥३७॥ त्रैलोक्यडुम्बररसः ।

---

स्वच्छन्दभैरवरसे हेम्न इति धूस्तूरस्य ॥ ३१ ॥ ३४ ॥

ज्वरमुरारिरसे सर्वचूर्णसमं जयपालचूर्णं सर्वं पिष्ट्वा कलायप्रमाणा वटी कार्य्या ॥ ३५ ॥

त्रैलोक्यडुम्बररसे अर्कस्ताम्रं, चपला, पिप्पली, तिक्ता, कटुकी, विषतिन्दुकजं, मधुरतिन्दुकफलम् ॥ ३६ ॥ ३७ ॥

विषहिङ्गुलजैपालटङ्गनं क्रमवर्द्धितम्।
रसः प्रतापमार्त्तण्डः सद्यो ज्वरविनाशनः ॥३८॥

प्रतापमार्त्तण्डो रसः।

जैपालगन्धं विषपारदञ्च, तुल्यं कुमारीखरसेन पिष्टम्।
अस्य द्विगुञ्जा हि शीतोदकेन ख्यातो रसोऽयं तरुणज्वरारिः ३९
दातव्य एषोऽहनि पञ्चमे वा षष्ठेऽथवा सप्तम एव वापि।
जाते विरेके विजितज्वरः स्यात् पटोलमुद्गाम्बुनिषेवणेन ॥४०॥

तरुणज्वरारिरसः।

रसबलिशिललौहव्योषताम्राणि तुल्या-
न्यथ सदरदनागं भागमेतत् प्रदिष्टम्।
भवति गदमुरारिश्चास्य गुञ्जाद्वयं वा
क्षपयति दिवसेन प्रौढ़मामज्वराख्यम् ॥४१॥ गदमुरारिः

रसो गन्धस्ताम्रं त्रिकटुकटुकीटङ्गनवरा
त्रिवृद्दन्ती हेमद्युमणि विषमेतत् सममिदम्।
समस्तैस्तुल्यं स्याद्विमलजयपालोद्भवरजः
ततः स्नुक्क्षीरेण प्रचुरमृदितं दन्तिसलिलैः ॥४२॥
द्विगुञ्जास्य प्रौढ़ं जयति वटिका साममतुलं
ज्वरं पाण्डुं गुल्मं ग्रहणीगुदकीलोद्भवरुजः।
मरुच्छूलाजीर्णं प्रबलमथ सामं क्रिमिगदं
विबद्धं प्लीहानं प्रबलमपि विद्याधररसः ॥४३॥ विद्याधररसः

हिङ्गुलं मरिचं टङ्गं पिप्पली विषमेव च।

---

तरुणज्वरारिरसे तुल्यमिति सर्वं समभागं न तु स्वरसेन तुल्यम् ॥ ३८—४० ॥
गदमुरारिरसे शिला मनःशिला, छान्दसत्वात् ह्रस्वः। नागं सीसकम् ॥ ४१ ॥
विद्याधररसे वरा, त्रिफला, हेम, धूस्तूरबीजं, द्युमणिः अर्कमूलं, विमलजय-
पालोद्भवरज इति शोधितजयपालबीजचूर्णम् ॥ ४२—४३ ॥

जातीकोषं समं सर्वं जम्बीराद्भिर्विमर्दितम् ॥४४॥
गुञ्जाद्वयं त्रयं वापि देयञ्च सान्निपातिके।
कासश्वासौ जयत्याशु सर्वज्वरविनाशनः ॥४५॥ अमृतमञ्ज

सूतं गन्धं विषं तुल्यं धूर्त्तबीजं त्रिभिः समम्।
चतुर्णां द्विगुणं व्योषचूर्णं गुञ्जाद्वयं हितम् ॥४६॥
जम्बीरस्य च मज्जाभिरार्द्रकस्य रसैर्युतम्।
महाज्वराङ्कुशो नाम ज्वराष्टकनिसूदनः ॥४७॥
ऐकाहिकं द्व्याहिकं वा त्र्याहिकञ्च चतुर्थकम्।
विषमञ्च त्रिदोषोत्थं हन्ति सर्वं न संशयः ॥४८॥ महाज्वराङ्कु

शुद्धसूतं विषं व्योषं गन्धं त्रिफलमेव च।
जयपालं समं कुर्य्यात् भृङ्गतोयेन मर्दयेत् ॥४९॥
वटिकां गुञ्जमात्रान्तु कृत्वा वैद्यः प्रयत्नतः।
प्रमाणं सर्षपाकारं बालानाञ्च प्रशस्यते ॥५०॥
नारिकेलाम्बुना वापि सर्वज्वरविनाशिनी।
नारिकेलजलं शस्तं कर्षत्रयं पिबेदनु ॥५१॥
सितया च समं पीत्वा पित्तज्वरविनाशिनी।
मरिचेन च पीता सा सन्निपातज्वरं जयेत् ॥५२॥
पिप्पलीजीरकाभ्यान्तु दाहज्वरविनाशिनी।
विषमज्वरभूतोत्थं ज्वरं प्लीहानमेव च ॥५३॥
अग्निमान्द्यमजीर्णञ्च क्षयथुञ्च सुदारुणम्।
शूलाजीर्णं तथा गुल्मं कुष्ठाष्टादश पित्तजान्।
ज्वरकेशरिका ख्याता तरुणज्वरनाशिनी ॥५४॥

ज्वरकेशरिका।

---

महाज्वराङ्कुशे व्योषचूर्णमिति मिलितत्रिकटुचूर्णं सर्वापेक्षया द्विगुणम् ॥४६॥
ज्वरकेशरिकायां त्रैफलमिति त्रिफलाचूर्णम् ॥ ४९—५४ ॥

शुद्धसूतं तथा गन्धं लौहं ताम्रञ्च सीसकम्।
मरिचं पिप्पली विश्वं समभागं विचूर्णयेत् ॥५५॥
अर्द्धभागं विषं दद्यात् मर्दयेत् वासरद्वयम्।
शृङ्गवेरानुपानेन दद्याद् गुञ्जाद्वयं भिषक् ॥५६॥
नवज्वरे महाघोरे वातसंग्रहणीगदे।
नवज्वरेभसिंहोऽयं सर्व्वरोगे प्रयोजयेत् ॥५७॥ नवज्वरेभसिंहः।

अथ निरामज्वरे।

सूतो गन्धष्टङ्गनः सोषणः स्यादेतैस्तुल्या शर्करा मत्स्यपित्तैः।
भूयो भूयो भावयेत्तु त्रिरात्रं वल्लो देयः शृङ्गवेरस्य वारा ॥५८॥
सम्यक् तापे वारिभक्तं सतक्रं वृन्ताकाढ्यं पथ्यमेव प्रदिष्टम्।
अङ्गे रोगं हन्ति सास्रं प्रभावात् पित्ताधिक्ये मूर्ध्नि वारिप्रयोगः ५८

उदकमञ्जरीरसः।

अत्र शर्कराम्थाने मनःशिलायां चन्द्रशेखरो भवति।
रसो गन्धष्टङ्गनः सोषणोऽयं फणी पिप्पल्येष धूस्तूरपिष्टः।
जयेत् सन्निपातं द्विगुञ्जानुपानं भवेदर्कमूलाम्बु सव्योषचूर्णम् ६०

पञ्चवक्त्ररसः।

शुद्धसूतं द्विधा गन्धं मर्द्यं भृङ्गरसेन च।
मृतं ताम्रं लौहभस्म पादांशेन तयोः क्षिपेत् ॥६१॥
लौहपात्रे च विपचेत् चालयेत् लौहचाटुना।
तत् क्षिपेत् कदलीपत्रे गोमयोपरि संस्थिते ॥६२॥
पश्चात् संचूर्णयेत् खल्ले निर्गुण्ड्या भावयेद्दिनम्।
जयन्तीत्रिफलाकन्यावासाभार्गीकटुत्रिकैः ॥६३॥

---

नवज्वरेभसिंहे विश्वं शुण्ठीचूर्णम् ॥ ५५—५७ ॥

उदकमञ्जरीरसे उषणं मरिचं शर्कराविषं तच्च सर्व्वद्रव्यसमम्। त्रिरात्रमिति चतुर्विंशतिप्रहरपर्य्यन्तं, वृन्ताको वार्त्ताकुफलम् ॥ ५८—५९ ॥

पञ्चवक्त्ररसे धूस्तूरपिष्ट इति धूस्तूररसैः पिष्टः ॥ ६० ॥

भृङ्गाग्निमूलमुण्डिभिः भावयेत् दिनसप्तकम् ।
अङ्गारैः स्वेदयेत् किञ्चित् पर्पटाख्यो महारसः ॥६४॥
चतुर्गुञ्जामितं भक्ष्यं सम्यक् श्लेष्मज्वरं हरेत् ।
पथ्याशुण्ठ्यमृतक्वाथमनुपानं प्रयोजयेत् ॥६५॥ पर्पटीरसः

मृतसूताभ्रसुस्वार्कतीक्ष्णमाक्षिकतालकम् ।
गन्धकं मर्दयेत् तुल्यं यष्टीद्राक्षामृतारसैः ॥६६॥
धात्रीशतावरीद्रावैः द्रवैः क्षीरविदारिजैः ।
दिनं दिनं विभाव्याथ सिताक्षौद्रयुता वटी ॥६७॥
माषमात्रं निहन्त्याशु वातपित्तज्वरं क्षयम् ।
दाहं तृषां भ्रमं शोषं वातपित्तान्तको रसः ।
सिताक्षीरं पिबेच्चानु यष्टीक्वाथं सितायुतम् ॥६८॥

वातपित्तान्तको रसः ।

मृतसूतार्कतीक्ष्णञ्च तालं गन्धञ्च कट्फलम् ।
मेषशृङ्गीवचाशुण्ठीभार्गी पथ्या च बालकम् ॥६९॥
धन्याकं मर्दयेत्तुल्यं पर्पटोत्थद्रवैर्दिनम् ।
मर्द्यं माषं लिहेत् क्षौद्रैः कफपित्तमदात्यये ॥७०॥
रसो विश्वेश्वरो नाम प्रोक्तो नागार्जुनेन च ।
काकमाचीरसं चानु सैन्धवेन युतं पिबेत् ॥७१॥ विश्वेश्वररसः

पारदं गन्धकं शुद्धं टङ्कणञ्च समं समम् ।
पारदात् द्विगुणं देयं जैपालं तुषवर्जितम् ॥ ७२ ॥
सैन्धवं मरिचं चिञ्चात्वगभस्मशर्करापि च ।
प्रत्येकं सूतकं तुल्यं जम्बीरैर्मर्दयेत् दिनम् ॥ ७३ ॥
द्विगुञ्जस्तप्ततोयेन वातश्लेष्मज्वरापहः ।
रसः शीतारिनामायं शीतज्वरहरः परः ॥७४॥ शीतारि

पर्पटीरसे तयोरिति रसगन्धकयोः ॥ ६१—६५ ॥
वातपित्तान्तकरसे तीक्ष्णं लौह, ताव हरितालम ॥ ६६—६८ ॥

रसविषगन्धकटङ्कनताम्रयवक्षारकम्।
व्योषं तालकफलत्रयञ्च क्षौद्रैः शतं वारान् ॥७५॥
संमर्द्य रक्तिमितवटिका कार्य्या भिषग्भिः प्राज्ञैः।
शुण्ठीपिष्टेन सममेकां द्वे वाथवा तिस्रःसंप्राश्य ॥७६॥
नारिकेलजलमनुपेयं सेवयेत् सैन्धवं जीरं तक्रं पथ्यं प्रयोक्तव्यम्।
प्रशमयति सन्निपातज्वरं तथा जीर्णज्वरं विविधञ्च ॥७७॥
प्लीहानं चाध्मानकं कासं श्वासं वह्निमान्द्यञ्च।
चिन्तामणिरसोऽयं किल स्वयं भैरवेण निर्दिष्टः ॥ ७८ ॥

चिन्तामणिरसः।

रसं गन्धं विषं लौहं धूर्त्तवीजन्तु तत्समम्।
द्वौ भागौ ताम्रवह्निञ्च व्योषचूर्णञ्च तत्समम् ॥ ७९ ॥
जम्बीरस्य च मज्जाभिरार्द्रकस्य रसैर्युताम्।
अस्यानुपानेन वटीं ज्वरे देयां प्रयत्नतः ॥ ८० ॥
गुञ्जाद्वयां वटीं खादेत् सद्यो ज्वरं व्यपोहति।
वातिकं पैत्तिकञ्चापि श्लैष्मिकं सान्निपातिकम् ॥८१॥
ऐकाहिकं द्व्याहिकञ्च चातुर्थकविपर्य्ययम्।
असाध्यञ्चापि साध्यञ्च ज्वरञ्चैवातिदुस्तरम् ॥८२॥
अग्निमान्द्येऽप्यजीर्णे च आध्मानेऽनिलसम्भवे।
अतिसारे छर्दिते च अरोचकनिपीड़िते ॥८३॥
ज्वरान् सर्वान् निहन्त्याशु भास्करस्तिमिरं यथा।
चिन्तामणिरसो नाम सर्वज्वरं व्यपोहति ॥८४॥ चिन्तामणिरसः

---

शीतारिरसे शर्करा विषम् ॥ ६९—७४ ॥
चिन्तामणिरसे व्योषं त्रिकटुकं, फलत्रयं त्रिफला ॥ ७५ ॥
चिन्तामणिरसे धूर्त्तवीजन्तु तत्सममिति मिलितसर्वचूर्णसम धूस्तूर-वीजम् ॥ ७६—८४ ॥

## अथ सन्निपातज्वरे ।

शुद्धसूतं मृतं ताम्रं मृतं नागं मनःशिला ।
तुल्यकं तस्य तुल्यांशं दिनमेकं विमर्दयेत् ॥८५॥
द्रवैश्चोत्तरवारुण्याश्चणमात्रा वटीकृता ।
सन्निपातं निहन्त्याशु नस्यमात्रेण दारुणम् ।
एषा कुलवधूर्नाम जले घृष्ट्वा प्रयोजयेत् ॥८६॥ कुलवधूः ।
भस्मसूताभ्रकं तारं मुण्डतीक्ष्णारमाक्षिकम् ।
वह्निटङ्कन सव्योषं समं संमर्दयेत् दिनम् ॥८७॥
पाठा निर्गुण्डिका यष्टीविल्वमूलकषायकैः ।
ततो मूषागतं रुद्ध्वा विपचेत् भूधरे पुटे ॥८८॥
माषैकं दशमूलस्य कषायेण प्रयोजयेत् ।
अञ्जनेनाथवा नस्ये सन्निपातं जयेत् ध्रुवम् ॥८९॥ जयमङ्गलः ।
मृतसूतार्कतीक्ष्णाग्निं टङ्गनं खर्परं समम् ।
सव्योषमर्कदुग्धेन दिनञ्च मर्दयेत् दृढम् ॥९०॥ नस्यभैरवः ।
सूततीक्ष्णकणागन्धमेकांशं जयपालकम् ।
सर्वैस्त्रिगुणितं जम्बुवारिणा च सुपेषितम् ।
नेत्राञ्जनेन हन्त्याशु सर्वोपद्रवसुद्धतम् ॥९१॥ अञ्जनभैरवः ।
गन्धेशं लशुनाम्भोभिर्मर्दयेद् याममात्रकम् ।
तस्योदकेन संयुक्तं नस्यं तत् प्रतिबोधकृत् ।
मरिचेन समायुक्तं हन्ति तन्द्रीप्रलापकान् ॥९२॥ अञ्जनोरसः ।
वाह्लीकं रसकं तुल्यं कर्पूरं मृतशुल्वकम् ।

---

कुलवधूरसे तस्य तुल्यांशमित्येकभागतुल्यम् । यद्यपि नस्यमित्युक्तं तथापि अत्र अञ्जनेन व्यवहरन्ति वृद्धाः ॥ ८५—८६ ॥

जयमङ्गले वह्निश्चित्रकः ॥ ८७—९० ॥

अञ्जनभैरवे एकांशमिति प्रत्येकमेकांशम् ॥ ९१ ॥

अञ्जनरसे ईशः पारदः ॥ ९२ ॥

कासमर्दरसैर्मर्द्यं दिनाद्धं वटकीकृतम्।
अञ्जनं ज्वरदाहघ्नं सर्वदोषसमुद्भवे ॥९३॥ अञ्जनो रसः।
रसगन्धकयोर्माषौ प्रत्येकं कज्जलीकृतौ।
शक्रञ्च मूषलीञ्चैव धूस्तूरं केशराजकम् ॥९४॥
देवदाली जयन्ती च तथा मण्डूकपर्णिका।
एषां पत्ररसैः शाणैः शिलायां खल्लयेत् पुनः ॥९५॥
शोषयित्वा वटी कार्य्या त्वनेका राजिकोपमा।
त्रिदोषजं ज्वरं हन्ति तथा प्रचलकोष्ठकम् ॥९६॥
तप्ते तु नारिकेलस्य जलं देयं प्रयत्नतः।
यदा वटी न कार्य्या तु तदा खाद्या तु रक्तिका।
त्रैलोक्यसुन्दरो नाम सन्निपातहरो रसः ॥९७॥ त्रैलोक्यसुन्दरः।
रसगन्धकयोः शाणं प्रत्येकं कज्जलीकृतम्।
सुवर्णमाक्षिकं शाणं शुद्धञ्चैकत्र कारयेत् ॥९८॥
रुद्रजटा निशुन्दा च नागो दमनकस्तथा।
विषकण्टालिका चैषां स्वरसं शाणमात्रकम् ॥९९॥
दत्त्वा संशोष्य संमर्द्य कार्य्या मुद्गसमा वटी।
आर्द्रकस्य रसैः पेया जीरकञ्चानु भक्षयेत् ॥१००॥
स्वच्छन्दभैरवाख्योऽयं सन्निपातोग्रहृत् मतः।
ग्रहणीसूतिकातङ्कं नाशयेदविचारतः ॥१०१॥ स्वच्छन्दभैरवः।

अथ शीताङ्गसन्निपातलक्षणम्।

शीतं शरीरं शीताङ्गे छर्द्यतिसारकम्पनम्।

---

अञ्जनरसे वाह्लीकं हिङ्गु, रसकं फट्किरी इति लोके ॥ ९२ ॥
कासमर्दः काल्कासुन्दा इति ख्यातः क्षुपविशेषः ॥ ९३ ॥
त्रैलोक्यसुन्दररसे शक्रः, कुटजः ; मूषली इत्यत्र मुषरीति केचित् पठन्ति
तु न सम्यक् व्यवहारसिद्धम्। देवदाली, हस्तिघोषकः ॥ ९४ ॥ ९७ ॥
स्वच्छन्दभैरवरसे विषकण्टालिका, विषकांठालीति ख्याता ॥ ९८ ॥ १०१ ॥

क्षुद्विघातोऽङ्गमर्दश्च हिक्काश्वासक्लमो वमिः ॥१०२॥
सर्वाङ्गशिथिलत्वञ्च सन्निपाते प्रजायते ॥१०३॥
हिङ्गुलञ्च विषं व्योषं मरिचं टङ्गनं कणा।
जातीकोषसमं चूर्णं जम्बीरद्रवमर्दितम्।
रक्तिमात्रां वटीं कुर्य्यात् खादेदार्द्रकसंयुताम् ॥१०४॥
वटीद्वयं त्रयं वापि सन्निपाते सुदारुणे।
ज्वरमष्टविधं हन्ति तथातिसारनाशनः ॥१०५॥
जीर्णज्वरहरश्चैव तथा सर्वाङ्गभेदकः।
आमवातादिरोगञ्च नाशयेदविकल्पतः ॥१०६॥ आनन्दभैरवः

विषं त्रिकटुकं गन्धं टङ्गनं मृतशुल्वकम्।
धूस्तूरस्य च वीजानि हिङ्गुलं नवमं स्मृतम् ॥१०७॥
एतानि समभागानि दिनैकं विजयाद्रवैः।
मर्दयेत् चणकाभान्तु वटीश्चानन्दभैरवीम् ॥१०८॥
भक्षयेच्च पिवेच्चानु रविमूलकषायकम्।
सव्योषं हन्ति नो चित्रं सन्निपातं सुदारुणम् ॥१०९॥
शीताङ्गे सन्निपाते वा सामान्ये वा त्रिदोषजे।
धन्याकं पिप्पली शुण्ठी कटुकी कण्टकारिका ॥११०॥
क्वाथं पिप्पलीसंयुक्तं चतुर्गुञ्जा च पर्पटी।
सन्निपातज्वरं हन्ति वटिकानन्दभैरवी ॥१११॥
मूलञ्च कट्‌रोहिण्याः समं विल्वं सजीरकम्।
दध्ना पिष्टं पिवेच्चानु वटीं चानन्दभैरवीम् ॥११२॥

---

आनन्दभैरवीवटिकायां शीताङ्गसन्निपात इत्युक्तं किन्तु रोगविनि[illegible] संग्रहे शीताङ्गसन्निपातलक्षणं नोक्तं तस्मादत्र तल्लक्षणमाह शीत[illegible]मित्यादि ॥ १०२ ॥

आनन्दभैरवरसे व्योषं त्रिकटुकम् अत्र पिप्पल्या भागद्वयं व्योषमध्ये पठि[illegible] पृथगुपादानाच्च एवं मरिचस्यापि ॥ १०३ ॥ १०६ ॥

सन्निपातातिसारघ्नीं पथ्यं शाकविवर्जितम्।
आनन्दभैरवीं पीत्वा क्वाथं वरुणसम्भवम्॥११३॥
पाययेद्‌ज्वरीं हन्ति सप्तरात्रात् न संशयः।
वागुजीसम्भवैस्तैलैर्वटीश्चानन्दभैरवीम्॥११४॥
लेहयेत् निष्कमात्रान्तु गलत्कुष्ठञ्च नाशयेत्।
दधिमस्तुसिताक्षौद्रैः वटीश्चानन्दभैरवीम्।
भक्षयेत् मूत्रकृच्छ्रार्त्तो यवक्षारं सितान्वितम्॥११५॥
गोदुग्धं क्वथितञ्चानु शीतलं मधुना पिबेत्।
गुञ्जामूलं पिबेत् क्षीरैरनुपानं प्रशस्यते॥११६॥
अनेन चानुपानेन वटिकानन्दभैरवी।
देया रुद्रजटाक्षौद्रैः सर्वमेहप्रशान्तये॥११७॥ आनन्दभैरवी
शुद्धसूतं तथा गन्धं सूतार्द्धं विषसंयुतम्।
समस्तं मर्दयेत्तालमूलीनीरैस्त्र्यहं बुधः॥११८॥
पूरयेत् कूपिकान्ते च सन्निरोध्य विशोषयेत्।
सप्तभिर्मृत्तिकावस्त्रैर्वेष्टयित्वा तु शोषयेत्॥११९॥
पुटेत् कुम्भीप्रमाणेन स्वाङ्गशीतं समुद्धरेत्।
गृहीत्वा कूपिकायाश्च मर्दयेच्च दिनं ततः॥१२०॥
अजाजीजीरकं हिङ्गुसर्जिकाटङ्गनैर्युतम्।
गुग्गुलुः पञ्च लवणं यवक्षारो यमानिका॥१२१॥
मरिचं पिप्पली चैव प्रत्येकञ्च समांशतः।
एषां कषायेण पुनर्भावयेत् सप्तधातपे॥१२२॥
नागवल्लीदलयुतं पञ्चगुञ्जं रसेश्वरम्।
दद्यात् नवज्वरे तीव्रे कोष्णं वारि पिबेदनु॥१२३॥

---

आनन्दभैरवीवटिकायां विजया जयन्ती, त्रैलोक्यविजयेति केचित्। रविमूल-कषायकम् अर्कमूलक्वाथः कटुरोहिण्या मूलं कटुकीमूलम्। वागुजी हाकुचीति ख्याता, सोमराजीति केचित्। रुद्रजटेति स्वनामख्याता॥ १०७—११७॥

प्राणेश्वररसो नाम्ना सन्निपातप्रकोपजित्।
शीतज्वरे दाहपूर्वे गुल्मे शूले त्रिदोषजे ॥१२४॥
वाञ्छितं भोजनं दद्यात् कुर्य्याच्चन्दनलेपनम्।
तावदेव प्रशमनो नानातिसारनाशनः।
भवेच्च नात्र सन्देहः स्वास्थ्यञ्च लभते नरः ॥१२५॥ प्राणेश्वर
ताम्रं गन्धं रसं श्वेतगुञ्जामरिचपूतना।
समीनपित्तजैपालान् तुल्यानेकत्र मर्दयेत् ॥१२६॥
गुञ्जाचतुष्टयञ्चास्य नवज्वरहरं परम्।
ज्वराङ्कुशः सन्निपातभैरवोऽयं प्रकाशितः ॥१२७॥ सन्निपातभै
रसो हिङ्गुलगन्धश्च जैपालं सम्मितं त्रिभिः।
दन्तीक्वाथेन संमर्द्य रसो ज्वरहरः परः ॥१२८॥
आर्द्रकस्य रसेनैव दापयेद्रत्तिकाद्वयम्।
नवज्वरं महाघोरं नाशयेत् याममात्रतः ॥१२९॥
शर्करादधिभक्तञ्च पथ्यं देयं प्रयत्नतः।
शीततोयं पिबेच्चानु इचुसुन्दरसो हितः।
शीतभञ्जीरसो नाम सर्वज्वरकुलान्तकः ॥१३०॥ शीतभञ्जीरस
रसं गन्धञ्च तुल्यांशं धूस्तूरफलजैर्द्रवैः।
मर्दयेत् दिनमेकन्तु तुल्यं त्रिकटुकं क्षिपेत् ॥१३१॥
उन्मत्ताख्यो रसो नाम नस्यः स्यात् सन्निपातजित्।
सन्निपातार्णवे मग्नं योऽभ्युपैति च रोगिणम्।

---

प्राणेश्वररसे कूपिकामिति काचकूपिकां ; प्रत्येकञ्च समांशत इति अजा-न्यादिद्रव्यं प्रत्येकं सूततुल्यम ॥ ११८—१२५ ॥

सन्निपातभैरवे पूतना हरीतकी ; मीनपित्तं मत्स्यपित्तम् ॥ १२६ ॥ १२७ ॥

शीतभञ्जीरसमाह रस इत्यादि। रसादिगन्धान्तैस्त्रिभिस्तुल्यं जैपालं रसादि-त्रयाणां त्रयोभागाः ॥ १२८ ॥ १३० ॥

कस्तेन न क्षतो धर्म कश्च पूजां न सोऽर्हति ॥१३२॥उन्मत्तरसः

म्लेच्छस्य भागाश्चत्वारो जैपालस्य त्रयो मता।
द्वौ भागौ टङ्कनस्यैव भागैकममृतस्य च ॥१३३॥
तत्सर्वं मर्दयेत् श्लक्ष्णं शुष्कं यामं भिषग्वरः।
शृङ्गवेराम्बुना देयं व्योषचित्रकसैन्धवैः ॥१३४॥
माषद्वयमितं तापं हरत्येव विनिश्चयः।
घनसारेण सारेण चन्दनेन विलेपनम् ॥१३५॥
विदध्यात् कांस्यपात्रे च सेचयेद्रोगिणं भिषक्।
शाल्यन्नं तक्रसहितं भोजयेदिक्षुसंयुतम् ॥१३६॥
सन्निपाते महाघोरे त्रिदोषे विषमज्वरे।
आमवाते वातशूले गुल्मे प्लीह्नि जलोदरे ॥१३७॥
शीतपूर्वे दाहपूर्वे विषमे सततज्वरे।
अग्निमान्द्ये च वाते च प्रयोज्योऽयं रसेश्वरः।
मृतसञ्जीवनो नाम विख्यातोऽयं रसायने ॥१३८॥

मृतसञ्जीवनो रसः।

शुद्धताम्रस्य भागैकं मरिचस्य तथैव च।
विषं तत्तुल्यकं दद्यात् तत्सर्वं श्लक्ष्णचूर्णितम् ॥१३९॥
लाङ्गलीरससंयुक्तं तत्सर्वं पुटके पचेत्।
रक्तिकाद्वितयं वापि त्रितयं वा प्रकल्पते ॥१४०॥
दोषे व्योषसमायुक्तं त्रिदोषशमनं भवेत्।
भक्षयेत् पवने चोग्रे वड़वानलसंज्ञितम् ॥१४१॥स्वल्पवड़वानलरसः

---

उन्मत्तरसे तुल्यं त्रिकटुकमिति त्रिकटुचूर्णं प्रत्येकं रसतुल्यं प्रदातव्यम् ॥ १३१ ॥ १३२ ॥

मृतसञ्जीवनरसमाह म्लेच्छस्येत्यादि। म्लेच्छस्य ताम्रस्य; अमृतस्य विषस्य, घनसारेण कर्पूरेण, सारेणेति चन्दनेन सह सम्बन्धः ॥ १३३—१३८ ॥

सूतकं गन्धकञ्चैव हरितालं मनःशिला ।
अभ्रकं वत्सनाभञ्च दारुजङ्गमजं विषम् ॥१४२॥
जैपालात् सार्द्धशतकं सर्वं संचूर्ण्य मर्दयेत् ।
मात्स्यमाहिषमायूरछागपित्तैर्विभावयेत् ॥१४३॥
वटिकां शीततोयेन कुर्य्यात् गुञ्जाप्रमाणतः ।
वड़वानलनामायं नारिकेलजलेन वै ।
भक्षयेत् सन्निपातार्त्तो मुक्तस्तस्मात् सुखी भवेत् ॥१४४॥

बृहद्वड़वानलो रसः ।

रसगन्धकनागञ्च विषं स्थावरजङ्गमम् ।
मात्स्यवाराहमायूरछागपित्तैर्विभावयेत् ॥१४५॥
सूचीकाभरणो नाम भैवरेण प्रकीर्त्तितः ।
सूचीकाग्रेण दातव्यः सन्निपातनिवर्हणः ॥१४६॥

सूचीकाभरणो रसः ।

शम्भोः कण्ठविभूषणं समरिचं दैत्येन्द्ररक्तं रविः
पक्षौ सागरलोचनं शशियुतं भागार्कसङ्ख्यान्वितम् ।
खल्ले तत् परिमर्दितं रविजलैर्गुञ्जैकमात्रं ददेत्
सिंहोऽयं ज्वरदन्तिदर्पदलनः पञ्चाननाख्यो रसः ॥१४७॥

पञ्चाननरसः ।

---

स्वल्पवड़वानलरसे विषं तत्तुल्यकमित्येकभागसमं विषम् । लाङ्गली विष लाङ्गलीति ख्याता ॥ १३९—१४१ ॥

बृहद्वड़वानलरसे वत्सनाभं स्वनामख्यातमूलविषं ; जङ्गमविषं कालसर्पवि दारु दारुमूलं. जैपालं सार्द्धशतकमिति श्याकृतिमानात् ॥ १४२ ॥ १४४ ॥

सूचीकाभरणरसे विषं स्थावरजङ्गममिति स्थावरविषं जङ्गमविषञ्च, पेयीऽयमार्द्रकरसेन ॥ १४५ ॥ १४६ ॥

पञ्चाननरसे, शम्भोः कण्ठविभूषणं विषं दैत्येन्द्रो गन्धकः, रक्तं हिङ्गुल

रसेन गन्धं द्विगुणं क्रमशानुरसैर्विमर्द्याष्टदिनानि घर्मे।
रसाष्टभागन्त्वमृतञ्च दद्यात् विमर्दयेत् वह्निरसेन किञ्चित् ॥१४८
पित्ते तु सम्भावित एष देयः त्रिदोषनीहारविनाशसूर्य्यः ॥१४९॥

त्रिदोषनीहाररसः।

पलं शुद्धस्य सूतस्य पलं ताम्रमयस्तथा।
अभ्रं नागं पलं वङ्गं पलं गन्धकतालके ॥ १५० ॥
पलं शुद्धविषं चूर्णं सर्वमेकत्र कारयेत्।
मर्दयेत् काकमाच्याश्च आर्द्रकस्य रसेन च ॥ १५१ ॥
मात्स्यवाराहमायूरछागमाहिषपित्तकैः।
मर्दयेत् भिन्नभिन्नञ्च त्रिकटोरम्बुभिस्तथा।
सिद्धोऽयं रसराजेन्द्रो धन्वन्तरिसुसंस्कृतः ॥ १५२ ॥
गुञ्जामात्रं रसं दद्यात् सुरसारससंयुतम्।
मेघवारिप्रवाहेण धारितं वारिमस्तके ॥ १५३ ॥
अनिवारो यदा दाहस्तदा देया च शर्करा।
भोजनं दधिसंयुक्तं वारमेकन्तु दापयेत् ॥ १५४ ॥
ईश्वरेण हतः कामः केशवेन च दानवः।
पावकेन यथा शीतमनेन च तथा ज्वरः ॥१५५॥ रसराजेन्द्रः
शुद्धसूतं द्विधा गन्धं खल्ले तत् कज्जलीकृतम्।
अभ्रलौहकयोर्भस्म ताम्रभस्मसमं समम् ॥ १५६ ॥
विषं तालं वराटञ्च शिलाहिङ्गुलचित्रकान्।
हस्तिशुण्डी चातिविषा त्र्यूषणं हेममाक्षिकम् ॥ १५७ ॥
चूर्णं विमर्दयेद्द्रावैरार्द्रकस्य दिनत्रयम्।

---

रविसोमं विषादीनां यथाक्रमं पक्षौ द्विभागौ बोध्यः। रविजलैः अर्कमूल-रसैः ॥ १४७ ॥

त्रिदोषनीहाररसे क्रमशानुश्चिनकः, अमृतं विषं तच्च रसस्याष्टमांशम् ॥१४८-१४९॥

निर्गुण्डीविजयाद्रावैस्त्रिदिनं मर्दयेत् पुनः ॥ १५८ ॥
काचकूप्यां निवेश्याथ वालुकायन्त्रगे पचेत् ।
द्वियामान्ते समुद्धृत्य मर्दयेदार्द्रकैर्द्रवैः ॥ १५९ ॥
मृतसञ्जीवनो नाम रसोऽयं शङ्करोदितः ।
मृतोऽपि सन्निपातार्त्तो जीवत्येव न संशयः ॥ १६० ॥

मृतसञ्जीवनो रसः ।

कण्टकारी सिन्धुवारस्तथा नाटकरञ्जकम् ।
अमीषां रसमादाय कृत्वा खर्परखण्डके ॥ १६१ ॥
प्रक्षिप्य गन्धकं तत्र ज्वालां मृद्वग्निना ददेत् ।
गन्धके स्नेहतापन्ने पारदं तत्समं क्षिपेत् ॥ १६२ ॥
मिश्रीकृत्य ततो दार्भ्यां द्रवं तमवतारयेत् ।
आमर्दयेत्तथा तन्तु यथा स्यात् कज्जलप्रभम् ।
ततस्तु रक्तिकामस्य जीरकस्य च माषकम् ॥ १६३ ॥
माषैकं लवणस्यापि पर्णे कृत्वा प्रदापयेत् ।
ज्वरे त्रिदोषजे घोरे जलमुष्णं पिबेदनु ॥ १६४ ॥
छर्द्यां शर्करया दद्यात् सामे दद्यात्तथा गुड़म् ।
क्षये च छागदुग्धं स्यादनुपानं प्रयोजितम् ॥ १६५ ॥
रक्तातिसारे कुटजमूलवल्कलजं रसम् ।
रक्तक्षये तथा दद्यादुडुम्बरभवं रसम् ॥ १६६ ॥

---

रसराजेन्द्ररसे अयो लौहम् । तच्च पलं ग्राह्यम् । एवं गन्धकं तालकमभ्र॰ प्रत्येकं पलं त्रिकटीरम्बुभिस्त्रिकटुकक्काथैः । नवेति नवज्वरे, सुरसा तुलसी ॥ १५० ॥ १५५ ॥

मृतसञ्जीवनीरसे समं सममिति अभ्रादीनां प्रत्येकं गन्धकसममित्यर्थः द्वियामान्ते समुद्धृत्येति तद्वालुकायन्त्रे प्रहरद्वयं पक्त्वा ततः कुपिकायाः समाकृष्य पुनः आर्द्रकद्रवैः संमर्द्य वटिका कार्य्येत्यर्थः ॥ १५६ ॥ १६० ॥

गन्धकज्जलीमाह कण्टकारीत्यादि कण्टकार्य्यादीनां स्वरसं खर्परे कृत

सर्वव्याधिहरश्चायं गन्धकः कज्जलीकृतः ।
आयुर्वृद्धिकरश्चायं मृतञ्चापि प्रबोधयेत् ॥ १६७ ॥

गन्धककज्जलीविधिः ।

ये रसाः पित्तसंयुक्ताः प्रोक्ताः सर्वत्र शम्भुना ।
जलसेकावगाहैश्च बलिनस्ते तु नान्यथा ॥ १६८ ॥
यथालाभेन पित्तेन रसाः सर्वे भवन्ति हि ।
रसं गन्धं विषञ्चैव हरितालं समांशिकम् ।
शिलायां मर्दयेत् तावद्यावज्जायेत कज्जलम् ॥ १६९ ॥
गुञ्जामात्रं प्रयोक्तव्यं हरेद्द्वादशसंज्ञकम् ।
साध्यासाध्यं निहन्त्याशु सन्निपातं सुदारुणम् ॥ १७० ॥
दन्तपङ्क्तिर्दृढा यस्य लोचने भ्रान्ततारके ।
चलिते चेन्द्रियग्रामे वेतालं विनियोजयेत् ॥ १७१ ॥
म्लानेषु लिप्तदेहेषु मोहग्रस्तेषु देहिषु ।
दातुमर्हति वेतालं यमदूतनिवारकम् ॥१७२॥ वेतालो रसः

शुद्धसूतं समं गन्धं मरिचं टङ्गनं तथा ।
चतुस्तुल्या शिला योज्या मत्स्यपित्तेन भावयेत् ॥ १७३ ॥
त्रिदिनं मर्दयेत्तेन रसोऽयं चन्द्रशेखरः ।
द्विगुञ्जमार्द्रकद्रावैर्देयं शीतोदकं पुनः ॥ १७४ ॥
तक्रभक्तञ्च वृन्ताकं भिषक् तत्र प्रयोजयेत् ।
त्रिदिनात् श्लेषपित्तोत्थमत्युग्रं नाशयेत् ज्वरम्॥१७५॥चन्द्रशेखरः

---

तत्र गन्धकं निक्षिप्य ज्वलद्बदराङ्गारोपरि स्थापयेत् द्रवीभूते गन्धके तत्तुल्यं पारदं निक्षिप्य द्वयं मिश्रितमालोक्य अवतार्य्य कज्जलीकृत्य च पर्णादिभिः सह भक्षयेत् ॥ १६१ – १६७ ॥

वेतालरसे आलं हरितालम् । चलिते चेन्द्रियग्रामे इति स्वस्वविषयग्रहणाशक्ते इन्द्रियसमूहे ॥ १६८ – १७२ ॥

हिङ्गुलञ्च विषं टङ्कं जातीकोषलफलं तथा ।
मरिचं पिप्पलीचैव कस्तूरी च समांशिका ।
रक्तिद्वयं ततः खादेत् सन्निपाते सुदारुणे ॥१७६॥ कस्तूरीभैरवः

सूतं वङ्गं खर्परञ्च स्वर्णं कस्तूरीतारकम् ।
एतेषां समभागेन कर्षमेकं पृथक् पृथक् ।
मृतं कान्तं पलं देयं हेमसारं द्विकार्षिकम् ॥ १७७ ॥
रसभस्म लवङ्गञ्च जातिकाफलमेव च ।
वक्ष्यमाणौषधैर्भाव्यं प्रत्येकं दिनसप्तकम् ॥ १७८ ॥
द्रोणपुष्परसे वापि नागवल्ल्या रसेन च ।
द्विचन्द्रो त्रिकटुर्देयो यत्नतो वटिकाञ्चरेत् ॥ १७९ ॥
वातात्मके सन्निपाते महाश्लेष्मगदेषु च ।
त्रिदोषजनिते घोरे सन्निपाते सुदारुणे ॥ १८० ॥
नष्टगर्भे नष्टशुक्रे प्रमेहे विषमज्वरे ।
कासे श्वासे क्षये गुल्मे महाशोथे महागदे ॥ १८१ ॥
स्त्रीणां शतं गच्छति च न च शुक्रक्षयो भवेत् ।
एतान् सर्वान् निहन्त्याशु भास्करस्तिमिरं यथा ॥ १८२ ॥

बृहत्कस्तूरीभैरवः ।

मृगमदशशिसूर्य्याधातकीशूकशिम्बी,
कनकरजतमुक्ता विद्रुमालोहपाठाः ।
क्रिमिरिपुघनविश्वातोयतालाभ्रधात्री,
रविदललरसपिष्टः कस्तुरीभैरवोऽयम् ॥ १८३ ॥

---

बृहत्कस्तूरीभैरवे तारकं रौप्यं हेमसारं स्वर्णमाक्षिकं द्विचन्द्रमिति कर्पूरं द्विकर्षमित्यर्थः । एवं त्रिकटुचूर्णान्यपि । तानि कर्पूरत्रिकटुचूर्णानि भावनान्ते देयानि । महाश्लेष्मगदेति श्लेष्मणा अत्युल्बणे ॥ १७३—१८२ ॥

अपरबृहत्कस्तूरीभैरवे मृगमदः कस्तूरी शशी कर्पूरं सूर्य्यस्ताम्रं क्रिमि[illegible]

कस्तूरीभैरवः ख्यातः सर्वज्वरविनाशनः।
आर्द्रकस्य रसैः पेयो विषमज्वरनाशनः॥ १८४॥
द्वन्द्वजान् भौतिकान् वापि ज्वरान् कामादिसम्भवान्।
अभिचारकृतांश्चैव तथा शुक्रकृतान् पुनः।
निहन्याद्भक्षणादेव डाकिन्यादियुतांस्तथा॥१८५॥

बृहत्कस्तूरीभैरवः।

सौभाग्यामृतजीरपञ्चलवणव्योषाभयाच्चामलाः
निश्चन्द्राभ्रकशुद्धगन्धकरसानेकीकृतान् भावयेत्।
निर्गुण्डीयुगभृङ्गराजकवृषापामार्गपत्रोल्लसत्
प्रत्येकस्वरसेन सिद्धगुड़िका हन्ति त्रिदोषोदयम्॥१८६॥
येषां शीतमतीव दाहमखिलं स्वेदद्रवार्द्रीकृतम्
निद्रा घोरतरा समस्तकरणव्यामोहमुग्धं मनः।
शूलश्वासबलासकासहितं मूर्च्छारुचिव्रट्ज्वरम्
तेषां वै परिहृत्य मृत्युवदनात् प्रत्यानयेत् जीवनम्॥१८७॥

सौभाग्यवटी।

पारदं गन्धकं टङ्कं सोषणं गजपिप्पली।
व्योषञ्च धूस्तूरजलैः पिष्टं गुञ्जाद्वयं द्रुतम्।
सन्निपातं निहन्त्यर्ककषायो व्योषचूर्णितः॥१८८॥ सन्निपातहरः
रसाष्टकोऽमृतं सप्त स्यात् षट् षट् गन्धतालयोः।
दन्तीवीजानि षट्भागाः पञ्चभागन्तु टङ्गनम्॥१८९॥

---

विड़ङ्गं घनं मुस्तकं तोयं बालकं तालं हरितालं रविदलरसः अर्कपत्र-रसः॥ १८३—१८५॥

सौभाग्यवटीकामाह सौभाग्येत्यादि सौभाग्यं टङ्गनम् अमृतं विषं, सौभाग्यादि सप्तद्रव्याणि समभागेन च एकीकृतानि लौहपात्रे पाषाणपात्रे वा कृत्वा भावयेत्। युगभृङ्गराजः केशराजश्च। सिद्धगुड़िकेति सिद्धफला गुड़िका॥१८६॥१८७

सन्निपातहररसे धूस्तूरजलैः धूस्तूररसैः॥ १८८॥

चत्वारि धूर्त्तवीजस्य व्योषस्य त्रितयो भवेत्।
एतानि वह्निमूलस्य क्वाथेन परिमर्दयेत् ॥१९०॥
आर्द्रकस्य रसेनाथ देयं गुञ्जाद्वयं हितम्।
वड़वानलसंज्ञोऽयं सन्निपातहरः परः ॥१९१॥

सन्निपातवड़वानलो रसः।

लौहपात्रगते गन्धे द्राविते तत्र निक्षिपेत्।
शुद्धसूतं समं चाभ्रं भार्गीद्रावं तयोः समम् ॥१९२॥
निर्गुण्ड्याख्यरसोत्थञ्च तुल्यं तुल्यं प्रदापयेत्।
पचेत् मृद्वग्निना तावत् यावत् शुष्कं द्रवद्वयम् ॥१९३॥
विषपादयुतः सोऽयं सिंहनादरसोत्तमः।
गुञ्जामात्रः प्रदातव्यः सन्निपातज्वरान्तकः।
अनुपानं पिबेत् व्याघ्रीक्वाथं पुष्करचूर्णितम् ॥१९४॥ सिंहनादरसः।

रसेन गन्धं द्विगुणं विमर्द्य तत्पादभागं रवितारहेम।
भस्मीकृतं योजय मर्दयित्वा दिनत्रयं वह्निरसेन घर्मे ॥१९५॥
विषञ्च दत्त्वार्द्धकलाप्रमाणं मत्स्यादिपित्तैः परिभावयेच्च।
वल्लद्वयञ्चास्य ददीत वह्निं कटुत्रयार्द्रद्रवसंप्रयुक्तम् ॥ १९६ ॥
तैलेन चाभ्यञ्जनमेव कुर्य्यात् स्नानं जलेनापि च शीतलेन।
यावद्भवेद्दुःसहशीतमस्य मूत्रं पुरीषञ्च शरीरकम्पः ॥१९७॥
पथ्ये यदीहा परिजायतेऽस्य मरीचखण्डं दधिभक्तकञ्च।
स्वल्पं ददीतार्द्रकमत्स्यशाकं दिनान्तरे स्नानविधिञ्च कुर्य्यात् १९[८]

सन्निपातसूर्य्यः।

---

सिंहनादरसे भार्गीद्रावं तयोः सममिति रसगन्धकयोः समं भार्गीद्रावं निर्गुण्ड्याः स्वरसञ्च। विषपादमिति गन्धकापेक्षया चतुर्थांशम् ॥ १८९—१९४ ॥

सन्निपातसूर्य्ये तत्पादभागमिति भस्मीकृतं रवितारहेम प्रत्येकं मिलितरस-गन्धकयोः पादभागम् ॥ १९५—१९८ ॥

अथाभिन्यासे।

सूतगन्धकलौहानि रौप्यं संमर्दयेत् त्र्यहम्।
सूर्यावर्त्तश्च निर्गुण्डी तुलसी गिरिकर्णिका ॥१९९॥
अग्निवल्लग्रार्द्रकं वह्नि विजयाथ जया सह।
काकमाचीरसैरेषां पञ्च पित्तैश्च भावयेत् ॥२००॥
अन्धमूषागतं पश्चात् वालुकायन्त्रगं दिनम्।
विपचेत् चूर्णितं खादेत् माषैकं चार्द्रकद्रवैः ॥२०१॥
निर्गुण्डीदलमूलानां कषायं सोषणं पिबेत्।
अभिन्यासं निहन्त्याशु रसः स्वच्छन्दनायकः।
छागीदुग्धेन सुन्नं वा पथ्यमत्र प्रयोजयेत्॥२०२॥ स्वच्छन्दनायकः
मायूरमात्स्यवाराहछागमाहिषमेव च।
पञ्च पित्तमिदं देयं भावनासु च सर्वदा ॥२०३॥
शुद्धसूतः समो गन्धः दरदं शुद्धखर्परम्।
रसस्य द्विगुणौ देयौ मृततास्राम्लवेतसौ ॥२०४॥
भृङ्गराजद्रवैर्भाव्यं प्रत्यहं भावना पृथक्।
दातव्यं तच्चतुर्गुञ्जमार्द्रकस्य रसैः सह।
सन्निपातं निहन्त्याशु सन्निपातान्तको रसः ॥२०५॥
सन्निपातान्तको रसः।

अथ जीर्णविषमज्वरे।

यः स्यादनियतात् कालाच्छीतोष्णाभ्यां तथैव च।
गतश्चापि विषमः स ज्वरो विषमः स्मृतः॥२०६॥विषमज्वरलक्षणम्
विसमाहव्यतीतस्तु ज्वरो यस्तनुतां गतः।
प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते ॥२०७॥

---

अथाभिन्यासज्वरचिकित्सामाह सूतेत्यादि ॥१९९—२०२॥
सन्निपातान्तकरसे मिलितौ ताम्राम्लवेतसौ रसस्य द्विगुणौ देयौ ॥ २०३—२०५॥

रसस्य द्विगुणं गन्धं गन्धतुल्यञ्च टङ्कनम् ।
रसतुल्यं विषं योज्यं मरिचं पञ्चधा विषात् ॥२०८॥
कट्फलं दन्तीवीजञ्च प्रत्येकं मरिचोन्मितम् ।
ज्वराङ्कुशो रसो नाम मर्दयेत् याममात्रकम् ।
माषैकेन निहन्त्याशु ज्वरं जीर्णं त्रिदोषजम् ॥२०९॥
ज्वराङ्कुशो रसः ।

अभ्रं ताम्रं रसं गन्धं विषञ्चैव समं समम् ।
द्विगुणं धूर्त्तवीजञ्च व्योषं पञ्च गुणं मतम् ॥२१०॥
आर्द्रकस्य रसेनैव वटी कार्य्या द्विगुञ्जिका ।
अनुपानं प्रयोक्तव्यं यथा दोषानुसारतः ।
अभ्रं ज्वरारि नामेदं सर्वज्वरविनाशनम् ॥२११॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ।
विषमाख्यान् ज्वरान् सर्वान् धातुस्थान् विषमज्वरान् ॥२१
प्लीहानं यकृतं गुल्ममग्रमांसं सशोथकम् ।
हिक्कां श्वासञ्च कासञ्च मन्दानलमरोचकम् ।
नाशयेन्नात्र सन्देहो वृत्तमिन्द्राशनिर्यथा ॥२१३॥ ज्वरारि अभ्र

रसं गन्धं सैन्धवञ्च विषं ताम्रं समांशिकम् ।
सर्वचूर्णसमं लौहं तत्समं शुद्धमभ्रकम् ॥२१४॥
लौहे च लौहदण्डे च निर्गुण्डीस्वरसेन च ।
मर्दयेद् यत्नतः पश्चात् मरिचं सूततुल्यकम् ॥२१५॥
नागवल्ल्या दलेनैव दातव्यो रक्तिसम्मितः ।
सर्वज्वरहरः श्रेष्ठो ज्वरान् हन्ति सुदारुणान् ॥२१६॥
कासं श्वासं महाघोरं विषमाख्यं ज्वरं वमिम् ।

---

ज्वरारिनामके अभ्रे द्विगुणं धूर्त्तवीजमिति एकभागापेक्षया द्विगुणम् एवं व्यो-
मप्येकभागापेक्षया पञ्चगुणम् ॥ २०६—२१३ ॥

धातुस्थं परमं दाहं ज्वरं दोषत्रयोद्भवम् ॥२१७॥ ज्वराशनिरसः

रसगन्धौ समौ शुद्धौ विषं ग्राह्यञ्च तत्समम् ।
जैपालं तत्समं ग्राह्यं मरिचञ्च चतुर्गुणम् ॥२१८॥
त्रिफलाया रसैर्मर्द्यं भावना पञ्चधा तथा ।
जम्बीराणां द्रवैर्नस्य मेकस्मिन् नासिकापुटे ॥२१९॥
शरीरार्द्धगतं घोरं ज्वरं हन्ति न संशयः ।
अर्द्धनारीश्वरो नाम रसः शम्भुप्रकीर्त्तितः ॥२२०॥

अर्द्धनारीश्वरो रसः ।

रक्तचन्दनह्रीवेरपाठोशीरकणा शिवा ।
नागरोत्पलधात्रीभिस्त्रिमदेन समन्वितम् ।
लौहं निहन्ति विविधान् समस्तान् विषमज्वरान् ॥२२१॥

चन्दनादिलौहम् ।

शुद्धसूतं द्विधा गन्धं विषञ्चैव कटुत्रयम् ।
नागभस्म शिला चैव प्रत्येकं कर्षमानकम् ॥२२२॥
शुद्धतालार्द्धकर्षञ्च शुल्वमेकत्र कारयेत् ।
धूस्तूरस्य च वीजानि कार्षिकाणि प्रकल्पयेत् ॥२२३॥
रोहितमत्स्यपित्तेन अर्कक्षीरार्द्रकाम्बुना ।
मर्दयेदुदयास्तञ्च चणकाभा वटीकृता ॥२२४॥
आर्द्रकस्य रसैः कर्षैर्मधुमाषसमायुतम् ।
भक्षयेत् प्रातरुत्थाय ज्वरारिरससंज्ञितम् ॥२२५॥
वातिकं पैत्तिकञ्चैव कफजं नाशयेत् ध्रुवम् ।

---

अर्द्धनारीश्वररसे विषं ग्राह्यञ्च तत्सममिति । मिलितरसगन्धकयोः समम् । जैपालं तत्सममिति विषतुल्यं जैपालं देयम् । मरिचञ्च चतुर्गुणमित्येक-भागापेक्षया मरिचस्य चातुर्गुण्यमिति श्रीकण्ठः । सोमेश्वरस्तु मिलितरसगन्धका-पेक्षया चतुर्गुणमित्याह व्यवहारोऽप्यनेनैव ॥ २१४—२२० ॥

चन्दनादिलौहे लौहं सर्वचूर्णसमं लौहप्रधानयोगत्वात् जीर्णज्वरहरत्वाच्च ॥२२१

वातपित्तसमुद्भूतं वातश्लैष्मिकमेव च ॥२२६॥
भयादुत्पातिकं वापि शोकोत्पन्नमथापि वा ।
अभिचाराभिशापोत्थं भूतोत्थञ्च ज्वरं जयेत् ॥२२७॥
सन्ततं मेदः प्राप्तञ्च रसस्थे तु ज्वरे तथा ।
सन्निपातज्वरे देयो मधुव्योषसमायुतः ।
घर्मं पित्तं तथा कम्पं दाहं हन्ति न संशयः ॥२२८॥
इन्द्रवज्रो यथा वृक्षं तथा ज्वरविनाशनः ।
वर्जयेत् चीरमांसञ्च दधितक्रसुराष्टतम् ॥२२९॥
ज्वरे मांसास्थिगे चैव रक्तस्थे तु ज्वरे नृणाम् ।
शैत्ये दाहे तथा घर्मे प्रलापे चातुराह्निके ।
महावेगे ज्वरे चैव जीर्णज्वरे प्रदापयेत् ॥२३०॥
चित्रकं त्रिफला व्योषं विड़ङ्गं मुस्तकं तथा ।
श्रेयसी पिप्पलीमूलमुशीरं देवदारु च ॥२३१॥
किरातततिक्तकं पाठा कटुकी कण्टकारिका ।
शोभाञ्जनस्य वीजानि मधुकं वत्सकं समम् ॥२३२॥
लौहतुल्यं गृहीत्वा तु वटिकां कारयेद्भिषक् ।
सर्वज्वरहरं लौहं सर्वरोगहरं तथा ॥२३३॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ।
द्वन्द्वजान् विषमाख्यञ्च धातुस्थञ्च ज्वरं जयेत् ॥२३४॥
शीतं कम्पं तृषां दाहं घर्मस्रुतिवमिभ्रमान् ।
रक्तपित्तमतीसारं मन्दाग्निं कासमेव च ॥२३५॥
प्लीहानं यकृतं गुल्ममामवातं सुदारुणम् ।
अर्शांसि घोरमुदरं मूर्च्छां पाण्डुं हलीमकम् ॥२३६॥
अजीर्णं ग्रहणीञ्चैव यक्ष्माणं शोथमेव च ।

---

ज्वरारिरसे शुल्वमपि कर्षार्द्धमानम् ॥ २२२—२३० ॥
सर्वज्वरहरलौहे व्योषं त्रिकटु, श्रेयसी गजपिप्पली, उशीरं वीरण-

बल्यं वृष्यं पुष्टिकरं सर्वरोगनिसूदनम् ।
सर्वज्वरहरं लौहं चन्द्रनाथेन भाषितम् ॥२३७॥सर्वज्वरहरलौहम्

पारदं गन्धकञ्चैव ताम्रमभ्रञ्च माक्षिकम् ।
हिरण्यं तारतालञ्च कर्षमेकं पृथक् पृथक् ॥२३८॥
कान्तलौहं पलं देयं सर्वमेकीकृतं शुभम् ।
वच्यमाणौषधैर्भाव्यं प्रत्येकं दिनसप्तकम् ॥२३९॥
कारवेल्लरसैर्वापि दशमूलरसेन च ।
पर्पट्याश्च कषायेण त्रिफलाक्काथकेन वा ।
गुडूच्याः स्वरसेनैव नागवल्लीरसेन च ॥२४०॥
काकमाचीरसेनैव निर्गुण्ड्याः स्वरसैस्तथा ।
पुनर्नवार्द्रकाम्भोभिर्भावना परिकीर्त्तिता ॥२४१॥
रक्तिकादिक्रमेणैव वटिकां कारयेद्भिषक् ।
गुड़पिप्पलीसंयुक्ता वटिका ज्वरनाशिनी ॥२४२॥
ज्वरमष्टविधं हन्ति जीर्णज्वरहरं तथा ।
वारिदोषोद्भवञ्चैव नानादोषोद्भवं तथा ॥२४३॥
सततादि ज्वरं हन्ति साध्यासाध्यमथापि वा ।
क्षयोद्भवञ्च धातुस्थं कामशोकभवं तथा ॥२४४॥
भूतावेशभवञ्चैव त्रिदोषजनितं तथा ।
अभिघातज्वरञ्चैव तथाभिचारसम्भवम् ॥२४५॥
अभिन्यासं महाघोरं विषमं त्र्याहिकं तथा ।
शीतपूर्वं दाहपूर्वं त्रिदोषं विषमज्वरम् ॥२४६॥
प्रलेपकज्वरं घोरमर्द्धनारीश्वरं तथा ।
प्लीहज्वरं तथा कासं चातुर्थकविपर्य्ययम् ॥२४७॥
पाण्ड़रोगं कामलाञ्च अग्निमान्द्यं महागदम् ।

---

किराततिक्तकं भूनिम्बं, वत्सकं कुटजं समभागेन मिलितं चूर्णं लौहतुल्यं गृहीत्वा सा षष्ठीन्मिता वटिका कार्य्या ॥ २३१—२३७ ॥

एतान् सर्वान् निहन्त्याशु पथ्याङ्गेन न संशयः ॥२४८॥
शाल्यन्नं तक्रसहितं भोजयेद्विड़संयुतम् ।
ककारपूर्वकं सर्वं वर्जनीयं न संशयः ॥२४९॥
मैथुनं वर्जयेत्तावत् यावत् न बलवान् भवेत् ।
सर्वज्वरहरं लौहं दुर्लभं परिकीर्त्तितम् ॥२५०॥

बृहत्सर्वज्वरहरलौहम् ।

रसगन्धकमभ्रञ्च प्रत्येकं कर्षसम्मितम् ।
वृद्धदारकवङ्गञ्च लौहं कर्षार्द्धकं क्षिपेत् ॥२५१॥
स्वर्णं ताम्रं कर्पूरञ्च प्रत्येकं कर्षपादिकम् ।
शक्राशनं वरी चैव श्वेतसर्जलवङ्गकम् ॥२५२॥
कोकिलाक्षं विदारी च मूषली शूकशिम्बिकम् ।
जातीफलं तथा कोषं बला नागबला तथा ॥२५३॥
माषद्वयमितं भागं तालमूल्या रसेन च ।
पिष्ट्वा च वटिका कार्य्या चतुर्गुञ्जाप्रमाणतः ॥२५४॥
मधुना भक्षयेत् प्रातर्विषमज्वरशान्तये ।
धातुस्थांश्च ज्वरान् सर्वान् हन्यादेव न संशयः ॥२५५॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ।
ज्वरं नानाविधं हन्ति कासं श्वासं क्षयं तथा ॥२५६॥
बलपुष्टिकरं नित्यं कामिनीं रमयेत् सदा ।
न च शुक्रक्षयं याति न बलं ह्रासतां व्रजेत् ॥२५७॥
ऊर्द्ध्वगं श्लेष्मजं हन्ति सन्निपातं सुदारुणम् ।
कामलां पाण्डुरोगञ्च प्रमेहं रक्तपित्तकम् ।
महाराजवटी ख्याता राजयोग्या च सर्वदा ॥२५८॥ महाराज

---

बृहत् सर्वज्वरहरलौहे माक्षिकं स्वर्णमाक्षिकं तारं रौप्यं, तालं हरिताल नागवल्ली पर्णपत्रम् ॥ २३८—२५० ॥

महाराजवटिकायां वृद्धदारकं वृद्धदारकबीजं तच्च शोधितं ग्राह्यं शक्राश

हाटकं रजतं तालं मुक्ता गन्धकपारदौ।
त्रिकटु कुनटी चैव कस्तूरी च पृथक् समम् ॥२५८॥
जलेन वटिका कार्य्या द्विगुञ्जाफलमानतः।
चिन्तामणि रसो ह्येष ज्वराष्टानां निकृन्तनः ॥२६०॥

चिन्तामणिरसः।

भागत्रयं स्वर्णभस्म द्विभागं तारमभ्रकम्।
लौहात् पञ्च प्रवालञ्च मौक्तिकं त्रयसम्मितम् ॥२६१॥
भस्मसूतं सप्तकञ्च सर्वं मर्द्यन्तु कन्यया।
छायाशुष्का वटी कार्य्या छागीदुग्धानुपानतः ॥२६२॥
क्षयं हन्ति तथा कासं गुल्मञ्चापि प्रमेहनुत्।
जीर्णज्वरहरश्चायं उन्मादस्य निकृन्तनः।
सर्वरोगहरश्चापि वारिदोषनिवारणः ॥२६३॥

त्रैलोक्यचिन्तामणिरसः।

रसं गन्धं विषञ्चैव त्रिकटु त्रैफलं तथा।
शिलाह्वा रौप्यकं स्वर्णं मौक्तिकं तालकं समम् ॥२६४॥
मृगकस्तूरिकायाश्च ग्राह्यं षण्माषिकं भिषक्।
भृङ्गराजरसेनैव तुलस्याः स्वरसेन वा ॥२६५॥
आर्द्रकस्य रसेनैव वटीं कुर्य्यात् द्विगुञ्जिकाम्।
चिन्तामणिरसो ह्येष सर्वरोगकुलान्तकः ॥२६६॥
सन्निपातज्वरहरः कफरोगं विनाशयेत्।
एकजं द्वन्द्वजञ्चैव विविधं विषमज्वरम् ॥२६७॥

---

त्रैलोक्यविजयावीजं, वरी शतमूली, श्वेतसर्जों श्वेतधूनकः, मूषली तालमूली, कोषं जातीकोषम् ॥ २५१—२५८ ॥

त्रैलोक्यचिन्तामणिरसे द्विभागं तारमभ्रकमिति तारमभ्रकं प्रत्येकं द्विभागम्। वटिका तु द्विगुञ्जामाना ॥ २५९—२६२ ॥

अग्निमान्द्यं शिरःशूलं विद्रधिं सभगन्दरम्।
एतान्येव निहन्त्याशु भास्करस्तिमिरं यथा ॥२६८॥

बृहच्चिन्तामणिरसः।

हिङ्गुलसम्भवं सूतं गन्धकेन सुकज्जलम्।
रसपर्पटीवत् पाच्यं सूताङ्घ्रि हेमभस्मकम् ॥२६९॥
लौहं ताम्रमभ्रकञ्च रसस्य द्विगुणं क्षिपेत्।
वङ्गञ्चैव प्रवालञ्च रसार्द्धञ्च विनिक्षिपेत् ॥२७०॥
मुक्ताशङ्खं शुक्तिभस्म रसपादिकमेव च।
मुक्तागृहे च संस्थाप्य पुटपाकेन साधयेत् ॥२७१॥
भक्षयेत् प्रातरुत्थाय द्विगुञ्जाफलमानतः।
अनुपानं प्रयोक्तव्यं कणाहिङ्गु ससैन्धवम् ॥२७२॥
ज्वरमष्टविधं हन्ति वातपित्तकफोद्भवम्।
प्लीहानं यकृतं गुल्मं साध्यासाध्यमथापि वा ॥२७३॥
सन्ततं सतताख्यञ्च त्र्याहिकं चतुराहिकम्।
कामलां पाण्डुरोगञ्च शोथं मेहमरोचकम् ॥२७४॥
ग्रहणीमामदोषञ्च कासं श्वासञ्च दारुणम्।
मूत्रकृच्छ्रातिसारञ्च नाशयेदविकल्पतः ॥२७५॥

विषमज्वरान्तकलौहम्।

शुद्धसूतं तथा गन्धं कारयेत् कज्जलीं शुभाम्।
मृतसूतं हेमतारं लौहमभ्रञ्च ताम्रकम् ॥२७६॥

---

बृहच्चिन्तामणिरसे शिलाह्वा मनःशिला, तालकं हरितालम् ॥ २६४—२६८

विषमज्वरान्तकलौहे हिङ्गुलसम्भवं सूतं हिङ्गुलोत्थपारदं तुल्यांशं गन्धके सह कज्जलीं कृत्वा वक्ष्यमाणरसपर्पटीवत् पर्पटीकृतं ततः पारदाच्चतुर्थांशं स्वर्णभस्म; लौहं ताम्रमभ्रञ्च प्रत्येकं द्विगुणं वङ्गं प्रवालञ्चार्द्धभागं, मुक्ताशङ्ख शुक्तिभस्म च पादांशं निक्षिप्य कन्यानीरेण मर्दयेत्। ततः शुक्तिसम्पुटे [illegible] वन्यकरीषाग्निना पुटपाकविधिना पचेत्। वटिका च द्विगुञ्जामाना ॥२६९ २७[illegible]

तालसत्वं वङ्गभस्म मौक्तिकं सप्रवालकम् ।
सुवर्णमाक्षिकञ्चापि चूर्णयित्वा विभावयेत् ॥२७७॥
निर्गुण्डी नागवल्ली च काकमाची सपर्पटी ।
त्रिफला कारवेल्लञ्च दशमूली पुनर्नवा ॥२७८॥
गुडूची वृषकश्चापि सभृङ्गकेशराजकः ।
एतेषाञ्च रसेनैव भावयेत् त्रिदिनं पृथक् ॥२७९॥
गुञ्जामानां वटीं कुर्य्यात् शास्त्रवित् कुशलो भिषक् ।
पिप्पलीगुड़केनैव लिह्याच्च वटिकां शुभाम् ॥२८०॥
ज्वरमष्टविधं हन्ति निरामं साममेव वा ।
सप्तधातुगतञ्चापि नानादोषोद्भवं तथा ॥२८१॥
सततादि ज्वरं हन्ति साध्यासाध्यमथापि वा ।
अभिघाताभिचारोत्थं जीर्णज्वरं विशेषतः ॥२८२॥

बृहद्विषमज्वरान्तको रसः ।

तालकं दरदोद्भूतः पारदो गन्धकः शिला ।
क्रमवृद्ध्या ताम्रपत्रीं द्रवैरेतैर्विलेपयेत् ॥२८३॥
अधोमुखी दृढ़े भाण्डे तां निरुध्याथ पूरयेत् ।
चूल्ल्यां वालुकया यन्त्रमग्निं प्रज्वालयेत् दृढ़म् ॥२८४॥
शीते संचूर्ण्य माषोऽस्य नागवल्लीदले स्थितः ।
भक्षितो मरिचैः सार्द्धं समस्तान् विषमज्वरान् ।
शीतदाहादिकं हन्यात् पथ्यं शाल्योदनं पयः ॥२८५॥

शीतभञ्जीरसः ।

---

बृहद्विषमज्वरान्तके मृतमूतं रससिन्दूरं तालसत्वं हरितालभस्म, सुवर्णमाक्षिकं स्वर्णमाक्षिकम् ॥२७६—२८२॥

शीतभञ्जीरसे दरदोद्भूतः पारदः हिङ्गुलोत्थरसः । शिला मनःशिला ; क्रमवृद्ध्या इति यथाक्रमं भागवृद्ध्या । अधोमुखीति तां ताम्रपात्रीं भाण्डे अधोमुखीं निरुध्य वालुकया भाण्डं प्रपूर्य्य दृढाग्निसन्तापे द्वादशप्रहर यावत् पचेत् ॥२८२—२८५

तालकं शुल्वकं चूर्णं शिखिग्रीवं समांशिकम्।
संपिष्य कारयेत् सर्वं चक्रिकासन्निभं शुभम् ॥२८६॥
शरावपिहितं रात्रौ पचेद् गजपुटेन तु।
स्वाङ्गशीतं समुद्धृत्य भक्षयेत् माषमात्रकम्।
शर्करासहितं सेव्यं सर्वज्वरहरं परम् ॥२८७॥ चिन्तामणि

ताम्रतो द्विगुणं तालं मर्दयेत् सुषवीद्रवैः।
प्रपुटेत् भूधरे शीते वज्रीक्षीरैर्विमर्दयेत् ॥२८८॥
प्रपुटेत् भूधरे पश्चात् पञ्च गुञ्जामितं शुभम्।
आर्द्रकस्य रसेनैव सर्वज्वरनिकृन्तनः ॥२८९॥
ऐकाहिकं द्व्याहिकञ्च त्र्याहिकञ्चातुराहिकम्।
विषमञ्चापि शीताढ्यं ज्वरं हन्ति ज्वराङ्कुशः ॥२९०॥ ज्वराङ्कुशः

अभ्रं कांस्यं मृतं ताम्रं त्रिभिस्तुल्यञ्च गन्धकम्।
रसेन मेघनादस्य पिष्ट्वा बद्ध्वा पुटे पचेत् ॥२९१॥
भक्षयेत् पर्णखण्डेन विषमज्वरनाशनम्।
अस्य मात्रा द्विगुञ्जा स्यात् पथ्यं दुग्धौदनं हितम् ॥२९२॥
मेघनादो रसः।

सूतमाक्षिकगन्धानां भागश्चारुष्करस्य च।
तथाऽष्टौ तालकाच्चूर्णात् रविदुग्धस्य षोड़श ॥२९३॥
स्नुहीक्षीरस्य चैवाष्टौ सर्वं मृद्वग्निना पचेत्।
स्वाङ्गशीतं समुद्धृत्य ततः खल्ले विमर्दयेत्।
शीतज्वरहरो नाम्ना रसोऽयं परिकीर्त्तितः ॥२९४॥ शीतज्वरहरः

---

मेघनादरसे मेघनादो रक्ततण्डुलीयकः। मात्र ।चास्य द्विगुञ्जामाना ॥२८६—

शीतज्वरहरे सूतादीनामेको भागः, हरितालस्य अष्टौ भागाः; अर्कदुग्धस्य षोडशभागाः, तथा स्नुहीदुग्धस्य अष्टौ भागाः, एतत् सर्वमेकीकृत्य पुटपाकविधिना मृद्वग्नौ पचेदित्यर्थः ॥२९३—२९४॥

पारदं रसकं तालं तुत्थं टङ्कनगन्धकम्।
सर्वमेतत् समं शुद्धं कारवेल्लरसैर्दिनम्॥२९५॥
मर्दयेत्तेन कल्केन ताम्रपात्रोदरं लिपेत्।
अङ्गुलार्द्धार्द्धमानेन तं पचेत् सिकताह्वये॥२९६॥
यन्त्रे यावत् स्फुटन्त्येव व्रीहयस्तस्य पृष्ठतः।
ततस्तत् शीतलं ग्राह्यं ताम्रपात्रोदरात् भिषक्॥२९७॥
माषैकं पर्णखण्डेन भक्षयेत् मरिचैः समम्।
शीतभञ्जीरसो नाम त्रिदिनात् नाशयेत् ज्वरम्॥२९८॥
शीतभञ्जीरसः।

रसकं तालकं तुत्थं टङ्कनं रसगन्धकम्।
तुल्यांशं सुषवीतोयैर्मर्दयेत् यामयुग्मकम्॥२९९॥
कृत्वा गोलं ताम्रपात्रेणाधोवक्त्रेण रोधयेत्।
स्थालीं मृत्कर्पटे लिप्ता पचेत् चूल्ल्यां दिनं ततः॥३००॥
तच्छीतं ताम्रभस्मापि गृह्णीयात् सुरसाजलैः।
यामं मर्द्यं ततो वल्लं तुलसीमरिचैर्युतम्॥३०१॥
हन्ति सर्वं ज्वरं घोरं विषमञ्च त्रिदोषजम्।
धात्रीकल्केन वा युक्तं दाहाख्यं विषमं जयेत्॥३०२॥
पथ्यं दुग्धौदनं दद्यात् मुद्गयूषं सशर्करम्।
ज्वरे धातुगते दद्यात् पिप्पलीक्षौद्रसंयुतम्।
अयं पञ्चाननो नाम विषमज्वरनाशनः॥३०३॥ पञ्चाननो रसः।

---

शीतभञ्जीरसे रसकः खर्परमिति माधवः फट्किरीति चन्द्रिकाकारः। पारदादिषड्द्रव्येन उदरलिप्तं ताम्रपात्रम् अधोमुखं कृत्वा स्थाल्यां संस्थाप्य पात्रान्तरेण आच्छाद्य बदरीपत्रकल्केन सन्धिं निरुध्य च वालुकाभिः स्थालीं प्रपूर्य्य च तदुपरि व्रीहीन् प्रक्षिपेत् ततः पात्राधो ज्वाला देया यावत् व्रीहयो न स्फुटन्ति ततस्तत् पात्रमुद्धृत्य तुल्यांशमरिचैः सह चूर्णयेत्। मात्रा चास्य द्विगुञ्जा-माना॥२९५॥२९८॥

कुमारीमूलकर्षैकं पिबेत् कोष्णजलेन तु।
विषमन्तु ज्वरं हन्ति वमनेन चिरन्तनम् ॥२०४॥
दरदं गन्धकं सूतं तुल्यांशं मर्दयेत् द्रवैः।
अश्वत्थजैस्त्र्यहं पश्चात् रसैः कनकमूलजैः ॥२०५॥
निदिग्धिकारसैः काकमाचीकाया रसैः पुनः।
द्विगुञ्जां वा त्रिगुञ्जां वा गोक्षीरेण प्रदापयेत्।
रात्रिज्वरं निहन्त्याशु नाम्ना विश्वेश्वरो रसः ॥२०६॥

विश्वेश्वरो रसः।

रसेन गन्धं शङ्खञ्च शिखिग्रीवञ्च पादिकम्।
गोजिह्वया जयन्त्या च तण्डुलीयैश्च भावयेत् ॥२०७॥
प्रत्येकं सप्तसप्ताथ शुष्कं गुञ्जाचतुष्टयम्।
जरणेन घृतेनाद्यात् त्र्याहिकज्वरशान्तये ॥२०८॥ त्र्याहिकारि

हरितालं शिला तुत्थं शङ्खचूर्णञ्च गन्धकम्।
समांशं मर्दयेत् प्राज्ञः कुमारीरसभावितम् ॥२०९॥
शरावसंपुटे कृत्वा पश्चाद् गजपुटे पचेत्।
कुमारिकारसेनैव वल्लमात्रा वटीकृता ॥२१०॥
दत्त्वा शीतज्वरं हन्ति चातुर्थकं विशेषतः।
मरिचघृतयोगेन तक्रं पीत्वा चरेद्वटीम्।
एतया वमनं भूत्वा ज्वरस्तस्मात् विनश्यति ॥२११॥ चातुर्थकारि

रसं गन्धं विषं शुल्वं मृतमभ्रं फलत्रिकम्।

---

पञ्चाननरसमपि शीतभञ्जीवत् द्वादशप्रहरं पचेत् ॥ २९९—३०३॥

वमनयोगमाह कुमारिकेति कोष्णजलेन सह पिष्टं कुमारिकामूलं का[र्षिकं]
जलेनैव पिबेत् ॥ २०४ ॥

विश्वेश्वररसे दरदं हिङ्गुलं अश्वत्थजैरिति अश्वत्थवल्कलरसैः ॥२०५—२०६॥

त्र्याहिकारिरसे शिखिग्रीवं तुत्थकं पादिकमिति रसशङ्खयोः पादिकम् ॥२०[७]

त्र्यूषणं दन्तिवीजञ्च समं खल्ले विमर्दयेत् ॥२१२॥
द्रोणपुष्पीरसैर्भाव्यं शुष्कं तत् वस्त्रगालितम् ।
चिन्तामणिरसो ह्येष अजीर्णे शस्यते सदा ॥२१३॥
ज्वरमष्टविधं हन्ति सर्वशूलहरः परः ।
गुञ्जैकं वा त्रिगुञ्जं वा देयमार्द्रकवारिणा ॥२१४॥चिन्तामणिरसः
रसगन्धकलौहानि ताम्रं तारं हिरण्यकम् ।
हरितालं खर्परञ्च कांस्यं वङ्गञ्च विद्रुमम् ॥२१५॥
मुक्तामाक्षिककाशीशं शिला टङ्गनकं समम् ।
कर्पूरञ्च समं दत्त्वा भावना सप्तसप्तकम् ॥२१६॥
भार्गीवासा च निर्गुण्डी नागवल्ली जयन्तिका ।
कारवेल्लं पटोलञ्च शक्राशनं पुनर्नवा ॥२१७॥
आर्द्रकञ्च ततो दद्यात् प्रत्येकं वारसप्तकम् ।
चिन्तामणिरसो नाम सर्वज्वरविनाशनः ॥२१८॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ।
द्वन्द्वजं विषमाख्यञ्च धातुस्थञ्च ज्वरं जयेत् ॥२१९॥
कासं श्वासं तथा शोथं पाण्डुरोगं हलीमकम् ।
प्लीहानमग्रमांसञ्च यकृतञ्च विनाशयेत् ॥२२०॥

बृहत् ज्वरचिन्तामणिः ।

पारदं गन्धकं ताम्रं हिङ्गुलं तालमेव च ।
वङ्गं लौहं माक्षिकञ्च खर्परञ्च मनःशिला ॥२२१॥
मृताभ्रकं गैरिकञ्च टङ्गनं दन्तिवीजकम् ।
सर्वाण्येतानि द्रव्याणि चूर्णयित्वा विभावयेत् ॥२२२॥

---

चिन्तामणिरसे शुल्वं ताम्रम् । त्र्यूषणं त्रिकटुकम् ॥२०८—२१४॥

बृहच्चिन्तामणिरसे तारं रौप्यं विद्रुमं प्रवालं माक्षिकं स्वर्णमाक्षिकं शिलाः मनःशिला, काशीशं धातुकाशीशम् । भार्ग्यादिभिः प्रत्येकशः सप्तसप्तकं भावना देया ॥२१५–२२०॥

जम्बीरविजयाचित्रतुलसीतिन्तिड़ीरसैः ।
एभिर्दिनत्रयं भाव्यं निर्जने रौद्रसङ्कुले ॥२२३॥
चणमात्रां वटीं कृत्वा छायाशुष्काञ्च कारयेत् ।
मन्दाग्निदीपनी चैव सर्वज्वरविनाशिनी ॥२२४॥
द्वन्द्वजं सर्वजञ्चैव चिरकालसमुद्भवम् ।
ऐकाहिकं द्व्याहिकञ्च ज्वरञ्च सान्निपातिकम् ॥२२५॥
चातुर्थकं तथात्युग्रं जलदोषसमुद्भवम् ।
सर्वान् ज्वरान् निहन्त्याशु भास्करस्तिमिरं यथा ।
महाज्वराङ्कुशो नाम रसोऽयं मुनिभाषितः ॥२२६॥ महाज्वराङ्कुशः ।

पारदं हिङ्गुलं ताम्रं माक्षिकं तुल्यमेव च ।
वङ्गं मृतञ्च गन्धञ्च खर्परञ्च मनःशिला ॥२२७॥
तालकं घनपाषाणं गैरिकं टङ्कनं तथा ।
दन्तिवीजानि सर्वाणि चूर्णयित्वा विभावयेत् ।
भावना पूर्ववत् देया वटीं कुर्य्याच्च पूर्ववत् ॥२२८॥

तन्त्रान्तरोक्तमहाज्वराङ्कुशः ।

विशुद्धं गगनं ग्राह्यं द्विकर्षं शुद्धगन्धकम् ।
तोलकं तोलकार्द्धञ्च हिङ्गुलोत्थरसं तथा ॥२२९॥
कर्पूरं केशरं मांसी तेजपत्रं लवङ्गकम् ।
जातीकोषफलञ्चैव सूक्ष्मैला करिपिप्पली ॥२३०॥
कुष्ठं तालीशपत्रञ्च धातकीचोचमुस्तकम् ।
हरीतकी मरिचञ्च शृङ्गवेरविभीतकम् ॥२३१॥
पिप्पल्यामलकञ्चैव शाणभागं विचूर्णितम् ।
सर्वमेकीकृतं पिष्ट्वा वटीं कुर्य्यात् द्विगुञ्जिकाम् ॥२३२॥
भक्षयेत् पर्णखण्डेन मधुना सितयापि वा ।

---

महाज्वराङ्कुशरसे घनपाषाणं कान्तपाषाणम् ॥२२१—२२८॥

रोगं ज्ञात्वानुपानञ्च प्रायः कुर्य्यात् विचक्षणः ॥२३३॥
हन्ति मन्दानलान् सर्वान् आमदोषं विसूचिकाम्।
पित्तश्लेष्मभवं रोगं वातश्लेष्मभवं तथा ॥२३४॥
आनाहं मूत्रकृच्छ्रञ्च संग्रहग्रहणीं वमिम्।
अम्लपित्तं शीतपित्तं रक्तपित्तं विशेषतः ॥२३५॥
चिरज्वरं पित्तभवं धातुस्थं विषमज्वरम्।
कासं पञ्चविधं हन्ति कामलां पाण्डुमेव च ॥२३६॥
सर्वलोकहितार्थाय शिवेन भाषितः पुरा।
सर्वतोभद्रनामायं रसः साक्षात् महेश्वरः ॥२३७॥ सर्वतो भद्ररसः
रसं गन्धं तोलकञ्च जातीकोषफले तथा।
हेमभस्म तु पादैकं तोलार्द्धं रूप्यलौहकम् ॥२३८॥
अभ्रं शिलाजतु चैव भृङ्गराजञ्च मुस्तकम्।
केशराजमपामार्गं लवङ्गञ्च फलत्रिकम् ॥२३९॥
वराङ्गवल्कलञ्चैव पिप्पलीमूलमेव च।
सैन्धवञ्च विड़ञ्चैव गुडूचीचूर्णमेव च ॥२४०॥
कण्टकारीरसोनञ्च धान्यकं जीरकद्वयम्।
चन्दनं देवकाष्ठञ्च दार्वीन्द्रयवमेव च ॥२४१॥
किराततिक्तकं बालं तोलकञ्च समाहरेत्।
द्वितोलं मरिचं देयं भावयेद्रार्द्रकैः रसैः ॥२४२॥
माषार्द्धं भक्षयेत् प्रातर्मधुना मधुरीकृतम्।
ज्वरं नानाविधं हन्ति शुक्रस्थं चिरकालजम् ॥२४३॥
साध्यासाध्यविचारोऽत्र नैव कार्य्यो भिषग्वरैः।

---

सर्वतोभद्ररसे गगनम् अभ्रं पलार्द्धमानं, गन्धकं तोलकमानम्। अन्यत् सर्वं तोलार्द्धं, केशरं नागकेशरं फलं जातीफलम्। करिपिप्पली गजपिप्पली। मरीचं गुड़त्वक् ॥२२९—२३७॥

अन्तर्धातुगतञ्चैव नाशयेन्नात्र संशयः ॥३४४॥
भूतोत्थं श्रमजञ्चापि सन्निपातज्वरं तथा।
असाध्यञ्च ज्वरं हन्ति यथा सूर्य्योदयस्तमः ॥३४५॥
गरुड़ञ्च समालोक्य यथा सर्पः पलायते।
तथैवास्य प्रसादेन ज्वरः शीघ्रं पलायते ॥३४६॥
बलदं पुष्टिदञ्चैव मन्दाग्निनाशनं परम्।
वीर्य्यस्तम्भकरञ्चैव कामलापाण्डुरोगनुत् ॥३४७॥
सदा तु रमते नारीं न वीर्य्यं क्षयतां व्रजेत्।
प्रमेहं विविधञ्चैव विविधां ग्रहणीं तथा।
अनुपानविशेषेण सर्वव्याधिं विनाशयेत् ॥३४८॥

बृहत् ज्वरान्तकलौहम्।

मृतं सूतं प्रबालञ्च स्वर्णं तारञ्च वङ्गकम्।
शुल्वं मुक्ता तीक्ष्णमभ्रं सर्वमेकत्र योजयेत् ॥३४९॥
जलेन पिष्ट्वा वटिका कार्य्या वल्लप्रमाणतः।
धातुस्थं सन्निपातोत्थं ज्वरं विषमसम्भवम् ॥३५०॥
कामशोकसमुद्भूतं त्रिदोषजनितं तथा।
कासं श्वासञ्च विविधं शूलं सर्वाङ्गसम्भवम् ॥३५१॥
शिरोरोगं कर्णशूलं दन्तशूलं गलग्रहम्।
वातपित्तसमुद्भूतं ग्रहणीं सर्वसम्भवाम् ॥३५२॥
आमवातं कटीशूलमग्निमान्द्यं विसूचिकाम्।
अर्शांसि कामलां मेहं मूत्रकृच्छ्रादिकञ्च यत् ॥३५३॥

---

बृहज्ज्वरान्तकलौहे तोलकमिति रसादिफलान्तं प्रत्येकं तोलकभागं, हेम तु पादैकमिति एकभागापेक्षया पादैकम्। वराङ्गवल्कलं गुड़त्वक्। गु चूर्णमित्यत्र गुडूचीसत्वमिति व्यवहरन्ति वृद्धाः। रसोनं रसोनकन्दं तच्च परिशोधितं ग्राह्यम्। भावयेदार्द्रकद्रवैरिति आर्द्रकरसैः सप्तवारं भावयेत् ॥३ ३४८॥

तत्सर्वं नाशयत्याशु विष्णुचक्रमिवासुरान्।
चूड़ामणिरसो ह्येष शिवेन परिकीर्त्तितः ॥२५४॥ चूड़ामणिरसः
सुवर्णं रससिन्दूरं प्रवालं वङ्गमेव च।
लौहं ताम्रं तेजपत्रं यमानी विश्वभेषजम् ॥२५५॥
सैन्धवं मरिचं कुष्ठं खदिरं द्विहरिद्रकम्।
रसाञ्जनं माक्षिकञ्च समभागञ्च कारयेत् ॥२५६॥
वारिणा वटिका कार्य्या रक्तिद्वयप्रमाणतः।
भक्षयेत् प्रातरुत्थाय सर्वज्वरकुलान्तकृत्॥२५७॥ भानुचूड़ामणिः
कस्तूरिका विद्रुमरौप्यलौहं तालं हिरण्यं रससिन्दूरञ्च।
सुवर्णसिन्दूरलवङ्गमौक्तिकं चोचं घनं माक्षिकराजपट्टम् ॥२५८॥
गोक्षुरजातीफलजातीकोषं मरिचकर्पूरशिखिग्रीवञ्च।
प्रगृह्य सर्वं हि समं प्रयत्नात् अथाश्वगन्धाद्विगुणं हि वैद्यः२५९
वक्ष्यमाणौषधैर्भाव्यं प्रत्येकं मुनिसंख्यया।
निर्गुण्डीफञ्जिकावासा रविमूलत्रिकण्टकैः ॥२६०॥
तद्वीर्य्यं कथयिष्यामि वातिकं पैत्तिकं ज्वरम्।
कफोद्भवं द्विदोषोत्थं त्रिदोषजनितं तथा ॥२६१॥
सन्ततं सततं हन्ति तृतीयकचतुर्थकौ।
ऐकाहिकं द्व्याहिकञ्च विषमं भूतसम्भवम् ॥२६२॥
नाशयेदचिरादेव वृक्षमिन्द्राशनिर्यथा।
चूड़ामणिरसो ह्येष शिवेन परिभाषितः॥२६३॥ वृहच्चूड़ामणिरसः

---

चूड़ामणिरसे मृतमूतं रससिन्दरं शुल्वं ताम्रं तीक्ष्णं लौहम् अत्र सर्वं समभागम् ॥३४९ – ३५४॥

भानुचूड़ामणिरसे द्विहरिद्रकमिति हरिद्रा दारुहरिद्रा च ॥३५५—३५७॥

वृहच्चूड़ामणिरसे विद्रुमं प्रवालं लौहं कान्तलौहं घनं मुस्तकम्, माक्षिकं स्वर्णमाक्षिकं राजपट्टं कान्तपाषाणं शिखिग्रीवं तुत्थकं सममित्येकभागसमम्

सुवर्णसिन्दूरं लौहं स्वर्णं तारं मृगाङ्कजम्।
जातीफलं जातीकोषं लवङ्गञ्च त्रिकण्टकम् ॥३६४॥
कर्पूरं गगनञ्चैव चोचं मूषलतालकम्।
प्रत्येकं कर्षमानन्तु तुरङ्गञ्च द्विकार्षिकम् ॥३६५॥
विद्रुमं भस्मसूतञ्च मौक्तिकं माक्षिकं तथा।
राजपट्टं शिखिग्रीवं सर्वं संचूर्ण्य यत्नतः ॥३६६॥
खल्ले तु चूर्णमादाय भावयेत् परिकीर्त्तितैः।
निर्गुण्डीफञ्जिकावासा रविमूलत्रिकण्टकैः।
ज्वरमष्टविधं हन्ति साध्यासाध्यमथापि वा ॥३६७॥
बृहत् ज्वरचूड़ामणिः रसः।

इति रसेन्द्रसारसंग्रहे ज्वराधिकारः।

---

## अथ ज्वरातिसारचिकित्सा।

मागधी वत्सनाभञ्च तयोस्तुल्यञ्च हिङ्गुलम्।
मृतसञ्जीवनी ख्याता जम्बीररसमर्दिता ॥१॥
मूलकस्य च वीजानां वटिकातुल्यरूपिणी।

---

अश्वगन्धाद्या एकभागापेक्षया द्वैगुण्यम्। मुनिसङ्ख्ययेति सप्तवारं फञ्जिका ब्राह्म
यष्टिका। रविमूलम् अर्कमूलम् ॥३५८—३६३॥

बृहत् ज्वरचूड़ामणिरसे मृगाङ्कजं कस्तूरी, गगनञ्च अभ्रं मूषली तालम्
तुरङ्गं गन्धकं भस्मसूतं रससिन्दूरं राजपट्टं कान्तपाषाणम्। स्वर्णसिन्दूरा
तालान्तं प्रत्येकं कर्षमानं तथा तुरङ्गादिशिखिग्रीवपर्य्यन्तं प्रत्येकं द्विकर्षम्
सर्वमेकीकृत्य निर्गुण्ड्यादिरसैः सप्तवारं भावयेत् ॥३६४—३६७॥

इति ज्वराधिकारः।

ज्वरे सति उपद्रवत्वेन अतीसारस्य सम्भवात् ज्वरानन्तरं ज्वरातिसार उच्य
माधवेन तु तल्लक्षणं पृथङ्नोक्तं ज्वरातिसारयोः मेलकत्वात्। उक्तं हि सिद्ध
ज्वरातिसारयोरुक्तं निदानं यत् पृथक् पृथक्। तत् स्यात् ज्वरातीसारस्य

पानीया शीततोयेन ज्वरातिसारनाशिनी।
विसूच्यां सन्निपाते च ज्वरे चैवातिदुस्तरे ॥२॥

मृतसञ्जीवनी वटी।

हिङ्गुलञ्च विषं व्योषं टङ्गनं गन्धकं समम्।
जम्बीररससंयुक्तं मर्दयेत् यामकद्वयम् ॥३॥
कासश्वासातिसारेषु ग्रहण्यां सान्निपातिके।
अपस्मारेऽनिले मेहेऽप्यजीर्णे वह्निमान्द्यके।
गुञ्जामात्रः प्रदातव्यो रस आनन्दभैरवः ॥४॥

आनन्दभैरवो रसः।

हिङ्गुलोत्थो रसो लौहं टङ्गनं गन्धकं शटी।
धान्यकं बालकं मुस्तं पाठा जीरं घुणप्रिया ॥५॥
प्रत्येकं तोलकं चूर्णं छागीदुग्धेन पेषयेत्।
माषैका वटिका कार्य्या रसोऽयममृतार्णवः ॥६॥
वटिकां भक्षयेत् प्रातर्गहनानन्दभाषिताम्।
धान्यजीरकयूषेण विजयाशणबीजतः ॥७॥
मधुना छागदुग्धेन मण्डेन शीतवारिणा।
कदलीमोचकरसैः कञ्चटद्रवकेण च ॥ ८ ॥
अतिसारं जयेदुग्रमेकजं द्वन्द्वजान् तथा।
दोषत्रयसमुद्भूतमुपसर्गसमन्वितम् ॥९॥
शूलघ्नो वह्निजननो ग्रहण्यर्शोविकारनुत्।
अम्लपित्तप्रशमनः कासघ्नो गुल्मनाशनः ॥१०॥ अमृतार्णवः।

---

नाचोदितं पुनः इति। ननु एवं चिकित्सापि भविष्यतीति चेत् नैवं मिलितयोः वर्द्धनात्। उक्तं हि ज्वरातिसारयोरुक्तं भेषजं यत् पृथक् पृथक्। न तन्मिलितयोः कार्य्यमनोऽन्यं वर्द्धयेद्द यतः॥ इति प्रायेण हि ज्वरहरमौषधमनुलोमनम् अतिसारहरञ्च स्तम्भनमिति परस्परविरुद्धत्वात् मिलितयोः न कार्य्यमित्यर्थः। मृतसञ्जीवनीवटिकायां मागधी पिप्पली ॥१॥२॥

गन्धेशाभ्रं पृथग्वेदभागमन्यच्च भागिकम् ।
स्वर्जिटङ्गयवक्षाराः पञ्चैव लवणानि च ॥११॥
वराव्योषेन्द्रवीजानि द्विजीराग्नियमानिका ।
सहिङ्गुवीजसारञ्च शतपुष्पा सुचूर्णिता ॥१२॥
सिद्धप्राणेश्वरः सूतः प्राणिनां प्राणदायकः ।
माषैकं भक्षयेदस्य नागवल्लीदलैर्युतम् ॥१३॥
उष्णोदकानुपानञ्च दद्यात् तत्र पलत्रयम् ।
ज्वरातीसारेऽतिसृतौ केवले वा ज्वरेऽपि वा ॥१४॥
ज्वरे त्रिदोषजे घोरे ग्रहण्यादिगदेऽपि च ।
वातरोगे तथा शूले शूले च परिणामजे ॥१५॥ सिद्धप्राणेश्वरो रसः

अथ शुद्धस्य सूतस्य गन्धकस्याभ्रकस्य च ।
प्रत्येकं कर्षमानन्तु ग्राह्यं रसगुणैषिणा ॥१६॥
ततः कज्जलिकां कृत्वा व्योषचूर्णं प्रदापयेत् ।
केशराजस्य भृङ्गस्य निर्गुण्ड्याश्चित्रकस्य च ॥१७॥
ग्रीष्मसुन्दरकस्याथ जयन्त्याः स्वरसं तथा ।
मण्डूकपर्ण्याः स्वरसं तथा शक्राशनस्य च ॥१८॥
श्वेतापराजितायाश्च स्वरसं पर्णसम्भवम् ।
दापयेद्रसतुल्यञ्च विधिज्ञः कुशलो भिषक् ॥१९॥
रसतुल्यं प्रदातव्यं चूर्णं मरिचसम्भवम् ।
देयं रसार्द्धभागेन चूर्णं टङ्गनसम्भवम् ॥२०॥
शुभे शिलामये पात्रे घर्षणीयं प्रयत्नतः ।
शुष्कमातपसंयोगाद् वटिकां कारयेद् भिषक् ॥२१॥

---

अमृतार्णवरसे अजाजी जीरकम्; घुणप्रिया अतिविषा; धान्यजीरक यूषेणेति यूषयोनित्वात् प्रचुरतरं सुद्गं प्रदातव्यम् ॥३—१०॥

सिद्धप्राणेश्वररसे ईशः पारदः; स्वर्जि स्वर्जिक्षारम्, टङ्गं टङ्गनक्षारम् वरा त्रिफला इन्द्रवीजम् इन्द्रयवं वीजसारं विड़ङ्गम् ॥११—१५॥

कलाय परिमाणान्तु खादेत्तान्तु प्रयत्नतः।
दृष्ट्वा वयश्चाग्निबलं यथा व्याध्यनुपानतः॥२२॥
हन्ति कासं क्षयं श्वासं वातश्लेष्मभवां रुजम्।
परं वाजीकरः श्रेष्ठो बलवर्णाग्निवर्द्धकः॥२३॥
ज्वरे चैवातिसारे च सिद्ध एष प्रयोगराट्।
नातः परतरः श्रेष्ठो विद्यतेऽभ्ररसायनात्॥२४॥
भोजने शयने पाने नास्त्यत्र नियमः क्वचित्।
दधि चावश्यकं भक्ष्यं प्राह नागार्जुनो मुनिः॥२५॥ अभ्रवटिका।

हिङ्गुलं मरिचं गन्धं टङ्गनं पिप्पलीविषम्।
कनकस्य च वीजानि समांशं विजयाद्रवैः॥२६॥
मर्दयेद् याममात्रन्तु चणमात्रा वटीकृता।
भक्षणाद् ग्रहणीं हन्ति रसः कनकसुन्दरः।
अग्निमान्द्यं ज्वरं तीव्रमतिसारञ्च नाशयेत्॥२७॥

कनकसुन्दरो रसः।

सुवर्णवीजं मरिचं मरालपादं कणा टङ्गनकं विषञ्च।
गन्धं जयाद्भिर्दिवसं विमर्द्य गुञ्जाप्रमाणां वटिकां विदध्यात्॥२८
एषातिसारग्रहणीं ज्वराग्निमान्द्यं निहन्यात् कनकप्रभेयम्।
दध्योदनं भोज्य मनुष्णवारि मांसं भजेत्तित्तिरिलावकानाम्॥२९

कनकप्रभा।

---

अभ्रवटिकायां व्योषचूर्णमपि कर्षमानम्। केशराजादीनां स्वरसः सूतोन्मिती देयः॥१९—२५॥

कनकसुन्दररसे टङ्गनमित्यत्र अभ्रकमिति केचित् पठन्ति। विजयाद्रवैरिति विजया शक्राशनम्। तस्य द्रवः क्वाथः॥२६॥२७॥

कनकप्रभायां सुवर्णवीजं कृष्णधूस्तूरवीजम्। मरालपादम् धानकुनीति ख्याता। जयाद्भिरिति विजयारसैः॥२८॥२९॥

भस्मसूताद्द्विधा गन्धं तथा द्वित्वं मृताभ्रकम्।
दिनं सर्षपतैलेन पिष्ट्वा यामं विपाचयेत्॥३०॥
रसैर्मार्कवमूलोत्थैः पिष्ट्वा यामं विपाचयेत्।
त्रिक्षारपञ्चलवणविषव्योषाग्निजीरकैः॥३१॥
सविड़ङ्गैस्तुल्यभागैरयं कारुण्यसागरः।
माषमात्रं ददीतास्य भिषक् सर्वातिसारके॥३२॥
सज्वरे विज्वरे वापि सशूले शोणितोद्भवे।
निरामे शोथयुक्ते वा ग्रहण्यां सान्निपातिके।
अनुपानं विनाप्येष कार्य्यसिद्धिं करिष्यति॥३३॥ कारुण्यसागरः।
शुद्धसूतं समं गन्धं मरिचं टङ्गनं तथा।
स्वर्णवीजं समं मर्द्यं भार्गीद्रावैर्दिनार्द्धकम्॥३४॥
सूततुल्यं मृतञ्चाभ्रं रसः कनकसुन्दरः।
अस्य गुञ्जाद्वयं हन्ति पित्तातिसारमुग्रकम्॥३५॥
बृहत्कनकसुन्दरः।
रसगन्धौ समौ ग्राह्यौ सूतपादं विषं क्षिपेत्।
सर्वतुल्यं मृतञ्चाभ्रं मर्द्यं धूस्तूरजैर्द्रवैः॥३६॥
सर्पाक्ष्याश्च द्रवैर्यामं कषायेणाथ भावयेत्।
धातक्यतिविषामुस्तं शुण्ठी जीरकबालकम्॥३७।
यमानी धान्यकं विल्वं पाठा पथ्या कणान्वितम्।
कुटजस्य त्वचं वीजं कपित्थं बालदाड़िमम्॥३८॥

---

कारुण्यसागररसे गन्धको द्विगुणः रसभस्मनोऽभावे शुद्धसूतस्य भागैकं विपाचयेदिति वालुकायन्त्रके मृत्कर्पटे वा विपाचयेत्। मार्कवमूलं भृङ्गराजमूलम् समभागानि त्रिक्षारादिविड़ङ्गान्तानि पञ्चदश द्रव्याणि प्रत्येकमिलितरसादीन् समानि मिश्रयेदित्यर्थः॥३०—३३॥

बृहत्कनकसुन्दररसे स्वर्णवीजं कृष्णधूस्तूरवीजम्॥३४॥३५॥

प्रत्येकं कर्षमात्रं स्यात् कुट्टितं क्वाथयेत् जलैः ।
चतुर्गुणं जलं दत्त्वा यावत् पादावशेषितम् ॥३९॥
अनेन त्रिदिनं भाव्यं पूर्वोक्तं मर्दितं रसम् ।
रुद्धा तद्वालुकायन्त्रे चणं मृदग्निना पचेत् ॥४०॥
मृतसञ्जीवनो नाम चास्य गुञ्जाचतुष्टयम् ।
दातव्यमनुपानेन चासाध्यमपि साधयेत् ॥४१॥
षट्प्रकारमतीसारं साध्यासाध्यं जयेत् ध्रुवम् ।
नागरातिविषा मुस्तं देवदारु कणा वचा ॥४२॥
यमानी बालकं धान्यं कुटजत्वक् हरीतकी ।
धातकीन्द्रयवौ विल्वं पाठा मोचरसं समम् ।
[चू]र्णितं मधुना लेह्यमनुपानं सुखावहम् ॥४३॥ मृतसञ्जीवनो रसः
रसगन्धकमभ्रञ्च टङ्गनं शतपुष्पकम् ।
यमानी जीरकाख्यञ्च प्रत्येकं कर्षयुग्मकम् ॥४४॥
कर्षमेकं यवक्षारं हिङ्गुपटुकपञ्चकम् ।
विड़ङ्गेन्द्रयवं सर्जरसकञ्चाग्निसंज्ञितम् ।
[ब]द्धा च वटिका कार्य्या नाम्ना प्राणेश्वरो रसः॥४५॥प्राणेश्वरो रसः
[पि]त्तज्वरे पित्तभवोऽतिसारस्तयातिसारे यदि वा ज्वरः स्यात् ।
[द]ोषस्य दूष्यस्य समानभावात् ज्वरातिसारः कथितो भिषग्भिः ४६

इति रसेन्द्रसारसंग्रहे ज्वरातिसारचिकित्सा ।

---

मृतसञ्जीवनरसे रसगन्धौ समौ समभागौ तेन द्वयोर्मिलितयोः कर्षः, विषमर्ड-
[ु]लकं सर्पाक्षी शालिञ्ची, रास्नेति केचित्। कषायेणेति वक्ष्यमाणधातक्यादि-
[ना त]ेन धातक्यादिबलान्तानि सप्तदश द्रव्याणि प्रत्येकं कर्षमात्रं गृहीत्वा क्वाथयेत्
[तेन क्व]ाथेन त्रिदिनं विमर्द्य तत् हण्डिकामध्ये स्थापयेत् ततः स्वल्पशरावेण आच्छाद्य
[मुखं] रुद्धा च वालुकाभिः हण्डिकामापूर्य्य चणमिति दण्डचतुष्टयं पचेदित्यर्थः ॥
४३॥
प्राणेश्वररसे पटुपञ्चकं पञ्चलवणं सर्जरसः धूनकः अग्निसंज्ञि तश्चित्रकः ॥
४६॥

## अथ अतिसारचिकित्सा ।

दरदं कृतकर्पूरं मुस्तेन्द्रयवसंयुतम् ।
सर्वातिसारशमनं खाखसीचोरभावितम् ॥१॥

अतिसारवारणो रसः ।

शुद्धञ्च तालकं लौहं गगनञ्च पलं पलम् ।
कर्पूरं पारदं गन्धं प्रत्येकं वटकोन्मितम् ॥२॥
जातीकोषमुरापत्रं शटी तालीशकेशरम् ।
व्योषं चोचं कणामूलं लवङ्गं पिचुसम्मितम् ॥३॥
भक्षयेत् प्रातरुत्थाय गुरुदेवद्विजार्चकः ।
नानारूपमतीसारं ग्रहणीं सर्वरूपिणीम् ॥४॥
अम्लपित्तं तथा शूलं शूलञ्च परिणामजम् ।
रसायनवरश्चायं वाजीकरण उत्तमः ॥५॥ पूर्णचन्द्रोदयरसः ।
कणानागरपाठाभि स्त्रिवर्गत्रितयेन च ।
विल्वचन्दनह्रीवेरैः सर्वातिसारजिद्भवेत् ॥६॥
सर्वोपद्रवसंयुक्तामपि हन्ति प्रवाहिकाम् ।
नानेन सदृशं लौहं विद्यते ग्रहणीहरम् ॥७॥ कणाद्यं लौहम् ।
पारदं गन्धकञ्चाभ्रं लौहञ्चापि वराटकम् ।
रूप्यं चातिविषं कर्षं समभागं प्रकल्पयेत् ॥८॥
धान्यशुण्ठीकृतक्काथैर्भावयेच्च पृथक् पृथक् ।
गुञ्जाप्रमाणां वटिकां कारयेत् कुशलो भिषक् ॥९॥

---

ज्वरोपद्रवस्य अतीसारस्य चिकित्सामभिधाय सम्प्रति स्वतन्त्रस्य अती[illegible] चिकित्सामाह दरदमित्यादि । कृतकर्पूरं पक्वकर्पूरम् । खाखसीचोरम[illegible] नम् ॥१॥

पूर्णचन्द्रोदयरसे वटकोन्मितमिति । माषकाष्टकपरिमितम् । पत्रं [illegible] पिचुसम्मितम् कर्षमानम् ॥२–५॥

कणादिलौहे त्रिवर्गं त्रितयेन चेति त्रिकटु त्रिफला त्रिमदैः ॥६॥७॥

भक्षयेत् प्रातरुत्थाय गुरुदेवद्विजार्चकः।
दग्धबिल्वं गुड़ेनैव कुर्य्यात्तदनुपानकम् ॥१०॥
अजादुग्धेन वा पेयं जम्बूत्वक्क्वाथितं रसम्।
अतीसारे ज्वरे घोरे ग्रहण्यामरुचौ तथा ॥११॥
सामे सशूले रक्ते च पिच्छास्रावे भ्रमे तथा।
शोथे रक्तातीसारे च संग्रहग्रहणीषु च ॥१२॥ वृहद्गगनसुन्दरः

भस्मसूतस्य भागैकं चत्वारः शुद्धगन्धकात्।
क्षिप्त्वा वराटिकागर्भे टङ्कनेन निरुध्य च ॥ १३ ॥
भाण्डे रुद्ध्वा पुटे पाच्यं स्वाङ्गशीतं समुद्धरेत्।
लोकनाथरसो नाम क्षौद्रैर्गुञ्जाचतुष्टयम् ॥१४॥
नागरातिविषा मुस्तं देवदारु वचान्वितम्।
कषायमनुपानन्तु सर्वातिसारनाशनः ॥१५॥ लोकनाथो रसः।

शुद्धसूतं मृतं ताम्रं गन्धकं प्रतिकार्षिकम्।
चूर्णयेद्विषकर्षार्द्धं विषार्द्धं तिन्तिड़ीफलम् ॥ १६ ॥
मर्दयेत् खल्लमध्ये तु चाम्लेन गोलकीकृतम्।
गर्भे षड़ङ्गुलं कुर्य्यात् सर्वतो वर्त्तुलं शुभम् ॥ १७ ॥
नागवल्लयाः क्षिपेत् पत्रमादौ पात्रे च गोलकम्।
आच्छाद्य तच्च पात्रेण रुद्ध्वा गजपुटे पचेत् ॥ १८ ॥
स्वाङ्गशीतं समुद्धृत्य सपत्रञ्च विशेषतः।
कर्षार्द्धं मरिचं दत्त्वा कर्षार्द्धं तिन्तिड़ीफलम् ॥१९॥
गुञ्जामितां वटीं कुर्य्यात् चिन्तामणिरसो महान्।
अतिसारे त्रिदोषोत्थे संग्रहग्रहणीगदे।
अनुपानं विधातव्यं यथा दोषानुसारतः ॥२०॥ चिन्तामणिरसः।

---

चिन्तामणिरसे प्रतिकार्षिकमिति प्रत्येकं कर्षपरिमितम्। तिन्तिड़ीफलं तिन्तिड़ीफलम्। अम्लेन काञ्जिकेन ॥ ८—२० ॥

अहिफेनं सखर्जूरं घृष्ट्वा गुञ्जैकमात्रकाम्।
रक्तस्रावमतीसारमतिहद्धं विनाशयेत् ॥२१॥ अहिफेनवटिका

रसगन्धकयोः कर्षं ग्राह्यमेकं सुशोधितम्।
ततः कज्जलिकां कृत्वा मृदुपाकेन साधयेत् ॥ २२ ॥
जातीफलं तथा कोषं लवङ्गारिष्टपत्रके।
सिन्धुवारदलञ्चैव एलावीजं तथैव च ॥ २३ ॥
एषाञ्च कर्षमात्रेण तोयेनाथ विमर्दयेत्।
मुक्तागृहे पुनःस्थाप्यं पुटपाकेन साधयेत् ॥ २४ ॥
घनपङ्कं वहिर्लिप्वा पुटमध्ये निधापयेत्।
गुञ्जाषट्कप्रमाणेन प्रत्यहं भक्षयेत् नरः ॥ २५ ॥
एतत् प्रोक्तं कुमाराणां रक्षणाय महौषधम्।
ज्वरघ्नं दीपनञ्चैव बलवर्णप्रसाधनम् ॥ २६ ॥
दुर्वारं ग्रहणीरोगं जयत्येव प्रवाहिकाम्।
सूतिकाञ्च जयेदेतद्रक्तार्शोरक्तसम्भवाम् ॥ २७ ॥
पिशाचा दानवा दैत्या बालानां विघ्नकारकाः।
यत्रौषधवरस्तिष्ठेत् तत्र सीमां न यान्ति ते ॥ २८ ॥
बालानां गदयुक्तानां स्त्रीणाञ्चैव विशेषतः।
महागन्धकमेतद्धि सर्वव्याधिनिसूदनम्।
विना पाकेन सर्वाङ्गसुन्दरोऽयं प्रकीर्त्तितः ॥२९॥ महागन्धक

ग्रहण्यां ये रसाः प्रोक्तास्तेऽतीसारे प्रकीर्त्तिताः ॥ ३० ॥

इति रसेन्द्रसारसंग्रहे अतिसाररोगचिकित्सा।

---

अहिफेनवटिकायां खर्जूरं पिण्डखर्जूरं ॥१२॥

महागन्धके रसगन्धकयोः प्रत्येकं कर्षः जातीफलादीनामपि प्रत्येकं आदौ कज्जलीं वक्ष्यमाणरसपर्पटीवत् पचेत् ततः सर्वमेकीकृत्य जलेन एकस्मिन् मुक्तागृहे औषधं संस्थाप्य अपरेण आच्छाद्य घनपङ्केनालिप्य करी मध्ये प्रक्षिपेत् यदा वह्निरारक्तता भवति तदैवाकृष्य ग्राह्यः ॥२२—२९॥

इति अतीसाराधिकारः।

## अथ ग्रहणीरोगचिकित्सा।

जातीफलं टङ्कनमभ्रकञ्च धूस्तूरवीजं समभागचूर्णम्।
भागद्वयं स्यादहिफेनकस्य गन्धालिकापत्ररसेन मर्द्दम्॥१॥
चणप्रमाणा वटिका विधेया यत्नाद्विदध्याद् ग्रहणीगदेषु।
सामेषु रक्तेषु सशूलकेषु पक्वेष्वपक्वेषु गुदामयेषु॥२॥
रोगेषु दद्यादनुपानभेदैर्मधुप्रयुक्ता ग्रहणीगदेषु।
पथ्यं सदध्योदनमत्र देयं रसोत्तमोऽयं ग्रहणीकपाटः॥३॥

जातीफलादि ग्रहणीकपाटः।

टङ्कनं चारगन्धाश्मरसं जातीफलं तथा।
विल्वं खदिरसारञ्च जीरकञ्च मधूलिका॥ ४॥
कपिहस्तकवीजञ्च तथा चोरकपुष्पकम्।
एषां शाणं समादाय श्लक्ष्णचूर्णञ्च कारयेत्॥ ५॥
विल्वपत्रककार्पासफलं शालिञ्च दुग्धिकाम्।
शालिञ्च मूलं कूटजं तथा कञ्चटपत्रकम्॥ ६॥
सर्वेषां स्वरसेनैव वटिकां कारयेद्भिषक्।
रक्तिकैकप्रमाणेन खादयेत् दिवसत्रयम्॥ ७॥
दधिमस्तु ततः पेयं पलमात्रप्रमाणतः।
अपियोगशताक्रान्तां ग्रहणीमुद्धतां जयेत्॥ ८॥
आमशूलं ज्वरं कासं श्वासञ्चैव प्रवाहिकाम्।
रक्तस्रावकरं द्रव्यं कार्य्यं नैवात्र युक्तितः॥ ९॥
कृष्णवार्त्ताकु मत्स्यञ्च दधि तक्रञ्च शस्यते।

---

ग्रहण्यतीसारयोः परस्परं कार्य्यकारणभावसम्बन्धादनन्तरं ग्रहणीचिकित्सितमुच्यते। तत्र ग्रहणीकपाटरसे समभागचूर्णमिति प्रत्येकं समभागम्। गन्धालिकाप्रसारणी; गुदामय इत्यर्शरोगे॥ १—३॥

अपरग्रहणीकपाटरसे विल्वं विल्वशलाटु। मधूलिका मूर्वा, कपिहस्तक-

ज्ञात्वा वायोःक्षतिं तत्र तैलं वारि प्रदापयेत् ॥ १० ॥

ग्रहणीकपाटो रसः।

अभ्रस्य सूतस्य च गन्धकस्य प्रत्येकशो माषचतुष्टयञ्च।
विधाय शुद्धोपलपात्रमध्ये सुकज्जलीं वैद्यवरः प्रयत्नात् ॥११॥
जातीफलं शाल्मलीवेष्टमुस्तं सटङ्कनं सातिविषं सजीरम्।
प्रत्येकमेषां मरिचस्य शाणप्रमाणमेकं विषमाषकञ्च ॥ १२ ॥
विचूर्ण्य सर्वाण्यपलोड्य पश्चात् विभावयेत् पत्ररसैरमीषाम्।
इन्द्राणिकेन्द्राशनकञ्च जम्बू जयन्तिका दाड़िमकेशराजौ।
अविद्धकर्णापि च भृङ्गराजौ विभाव्य सम्यक् वटिका विधया ॥१३॥
कोलास्थिमानाथ बहुप्रकारं सामं निहन्यादनिलान् गदांश्च।
कुर्य्याद्विशेषादनलप्रवृद्धिं कासञ्च पञ्चात्मकमम्लपित्तम् ॥१४॥
इयं निहन्याद् ग्रहणीमसाध्यां मर्त्त्यस्य जीर्णग्रहणीं प्रवृद्धाम्।
असारकत्वं त्वतिसारमुग्रं श्वासं तथा पाण्डुमरोचकञ्च ॥१५॥
चिरोद्भवां संग्रहकोष्ठदुष्टिं जयेद्भृशं योगशतैरसाध्याम्।
अनेकसम्भावितमर्त्त्यलोका नानाविधव्याधि-पयोधि-नौका ॥१६॥

जातीफलाद्या वटिका।

रसं गन्धं घनं लौहं धातकीपुष्पविल्वकम्।
विषं कुटजवीजञ्च पाठा जीरकधान्यकम् ॥ १७ ॥
रसाञ्जनं टङ्कनञ्च शिलाजतु पलं तथा।
अभ्रांशञ्च पलं ग्राह्यं प्रत्येकं तोलकत्रयम् ॥ १८ ॥

---

वीजं शूकशिम्बवीजम्। दुग्धिका चौरिका। एषां विल्वपत्रादीनां स्वरसे सप्ताहं भावयेत् ॥४ – १०॥

जातीफलादिवटिकायां उपलमध्ये पाषाणखल्ले, शाल्मलीवेष्टकं मोचरसं इन्द्राणिका निर्गुण्डी; इन्द्राशनं विजया; अविद्धकर्णा अम्बष्ठकी; भृङ्गराजौ भृङ्गराजकेशराजौ; असारकत्वं अल्पसारकत्वं तच्च वातातीसारे भवति ॥११ – १६॥

शृकपर्णी पञ्चमूली बलाकञ्चटदाड़िमम्।
शृङ्गाटं केशरं जम्बू दधिमस्तु जयन्तिका ॥ १९ ॥
केशराजं भृङ्गराजं प्रत्येकं तोलकद्वयम्।
द्विमाषा वटिका कार्य्या तक्रेण परिसेविता ॥ २० ॥
इयं पूर्णकला नाम ग्रहणीगदनाशिनी।
शूलघ्नी दाहशमनी वह्निदा ज्वरनाशिनी।
श्रमच्छर्दिच्छेदकरी संग्रहग्रहणीं जयेत् ॥२१॥ पूर्णकला वटी।

पारदं गन्धकञ्चैव अहिफेनं समोचकम्।
त्रिकटु त्रैफलञ्चैव सममेकत्र कारयेत् ॥ २२ ॥
भङ्गभृङ्गद्रवैश्चैतद् भावयेच्च पुनः पुनः।
रक्तित्रयं ततश्चास्य मधुना सह भक्षयेत्।
असाध्यां ग्रहणीं हन्ति रसो वज्रकपाटकः॥२३॥वज्रकपाटो रसः

पारदाभ्रकसिन्दूरं गन्धं जातीफलं समम्।
कुटजस्य फलञ्चैव धूर्त्तवीजानि टङ्कनम् ॥ २४ ॥
व्योषं मुस्ताभयाचैव चूतवीजं तथैव च।
विल्वकं सर्जवीजञ्च दाड़िमीफलवल्कलम् ॥ २५ ॥
एतानि समभागानि निक्षिपेत् खल्लमध्यतः।
विजयास्वरसेनैव मर्दयेत् श्लक्ष्णचूर्णितम् ॥ २६ ॥
गुञ्जाफलप्रमाणान्तु वटिकां कारयेद्भिषक्।
एकां कूटजमूलत्वक् कषायेण प्रयोजयेत् ॥ २७ ॥
आमातिसारं हरते कुरुते वह्निदीपनम्।
मधुना विल्वशुण्ठेन रक्तग्रहणिकां जयेत् ॥ २८ ॥

---

पूर्णकलावटिकायां घनं मुस्तकं एषामभ्रान्तानां प्रत्येकं कर्षमानम्। फलं त्रिफला तत्र प्रत्येकं तोलकत्रयमिति। पञ्चमूली स्वल्पा पञ्चमूली ॥१७–२१॥

वज्रकपाटरसे मोचकं शाल्मलीवेष्टकं ; सममिति समभागं ; भङ्गं विजया ; भावयेच्च पुनः पुनरिति सप्तवारम् ॥२२–२३॥

शुण्ठीधान्यकयोगेन चातिसारं निहन्त्यसौ ।
जातीफलरसो ह्येष ग्रहणीगदनाशनः॥२८॥जातीफलरसः।

रसगन्धकलौहानि शङ्खटङ्गनरामठम् ।
शठीतालीशमुस्तानि धान्यजीरकसैन्धवम् ॥ ३० ॥
धातक्यतिविषा शुण्ठी गृहधूमो हरीतकी ।
भल्लातकं तेजपत्रं जातीफल लवङ्गकम् ॥ ३१ ॥
त्वगेला बालकं विल्वं मेथी शक्राशनं समम् ।
छागीदुग्धेन वटिका रसवैद्येन कारिता ॥ ३२ ॥
गहनानन्दनाथेन भाषितेयं रसायने ।
वटी गजेन्द्रसंज्ञेयं श्रीमता लोकरक्षणे ॥ ३३ ॥
ग्रहणीं विविधां हन्ति ज्वरातिसारनाशिनी ।
शूलगुल्माम्लपित्तानि कामलाञ्च हलीमकम् ॥ ३४ ॥
बलवर्णाग्निजननी सेविता च चिरायुषी ।
कण्डूं कुष्ठं वीसर्पञ्च गुदभ्रंशं क्रिमिं जयेत् ॥ ३५ ॥
माषद्वयां वटीं खादेच्छागीदुग्धानुपानतः ।
वयोऽग्निबलमावीक्ष्य युक्त्या वा त्रुटिबर्द्धनम् ॥ ३६ ॥
ग्रहणीगजेन्द्रवटिका ।

सूतमभ्रं गन्धकञ्च तारं लौहं सटङ्गनम् ।
रसाञ्जनं माक्षिकञ्च शाणमिकं पृथक् पृथक् ॥ ३७ ॥
लवङ्गं चन्दनं मुस्तं पाठा जीरकधान्यकम् ।
समङ्गातिविषा लोध्रं कुटजेन्द्रयवं त्वचम् ॥ ३८ ॥
जातीफलं विश्वविल्वं कनकं दाड़िमीच्छदम् ।
समङ्गा धातकी कुष्ठं प्रत्येकं रससम्मितम् ॥ ३९ ॥

जातीफलरसे सिन्दूरं रससिन्दूरं ; चूतफलवीजमामास्थिमज्जा ॥२४–२८॥
ग्रहणीगजेन्द्ररसे शक्राशनं विजया तस्या वीजं ग्राह्यम् ॥३०–३६॥

भावयेत् सर्वमेकत्र केशराजरसैः पुनः ।
चणकाभा वटी कार्य्या छागीदुग्धेन पेषिता ॥ ४० ॥
अनुपानं प्रदातव्यं दग्धविल्वं समं गुड़ैः ।
हन्ति सर्वानतिसारान् ग्रहणीं चिरजामपि ॥ ४१ ॥
आमसम्पाचनी सम्यग् वह्निवृद्धिकरी तथा ।
पीयूषवल्लीनामेयं ग्रहणीरोगनाशनी ॥४२॥ पीयूषवल्लीरसः

रसगन्धकयोश्चापि कर्षमेकं सुशोधितम् ।
द्वयोः कज्जलिकां कृत्वा हाटकं षोडशांशतः ॥४३॥
लवङ्गं निम्बपत्रञ्च जातीकोषफले तथा ।
एतेषां कर्षचूर्णेन सूक्ष्मैलां सह मेलयेत् ॥४४॥
मुक्ताशङ्खेण संस्थाप्य पुटपाकेन साधयेत् ।
गुञ्जापञ्चप्रमाणेन प्रत्यहं भक्षयेत् नरः ॥४५॥
सूतिकां ग्रहणीरोगं हरत्येष सुनिश्चितम् ।
अर्शघ्नो दीपनश्चैव बलपुष्टिप्रसादनः ॥४६॥
कासश्वासातिसारघ्नो बलवीर्य्यकरः परः ।
दुर्वारं ग्रहणीरोगं चामशूलञ्च नाशयेत् ।
संसारलोकरक्षार्थं पुरा रुद्रेण भाषितः ॥४७॥ ग्रहणीशार्दूलरसः ।

रसस्य शाणं संगृह्य काञ्जिकेन तु शोधयेत् ।
चित्रकस्य रसेनापि त्रिफलायाश्च बुद्धिमान् ॥४८॥
रसार्द्धं गन्धकं शुद्धं भृङ्गराजरसेन वा ।

---

पीयूषवल्लीरसे तारं रौप्यं, माक्षिकं स्वर्णमाक्षिकं, समङ्गा वराहक्रान्ता, विल्वं विल्वशलाटु । आदौ केशराजरसे सप्तधा विभाव्य पश्चात् छागीदुग्धे निष्पिष्य वटिका कार्य्या ॥३७–४२॥

ग्रहणीशार्दूलरसे मिलितयोः रसगन्धकयोः कर्षमेकं ग्राह्यं हाटकं षोड़शांशत इति कर्षमानापेक्षया स्वर्णभस्म षोड़शांशम् । लवङ्गादीनां प्रत्येकं कर्षमानं एतत् सर्वमेकीकृत्य शुक्तिसम्पुटे कृत्वा पुटपाकवत् पचेदित्यर्थः ॥४३–४७॥

द्वाभ्यां संमूर्च्छनं कृत्वा स्वरसैः शाणसम्मितैः ॥४९॥
खल्लयेत् तु शिलाखण्डे क्रमशो वक्ष्यमाणकैः ।
निर्गुण्डीमधुकश्वेताकुठेरग्रीष्मसुन्दरैः ॥५०॥
भृङ्गाब्दकेशराजैश्च तथा चेन्द्राशनोत्कटैः ।
सर्षपाभ्यां वटीं कृत्वा दद्यात् तां ग्रहणीगदे ॥५१॥
सामवातेऽग्निमान्द्ये च ज्वरे प्लीहोदरेषु च ।
अम्लतक्रादिसेवाञ्च कुर्वीत स्वेच्छया बहु ॥५२॥
श्रीमता वैद्यनाथेन लोकानुग्रहकारिणा ।
स्वप्नान्ते ब्राह्मणस्येयं भाषिता लिखितेन तु ॥५३॥ वैद्यनाथवटी ।

याम्लपित्ते विधातव्या गुड़िका च क्षुधावती ।
तत्र प्रोक्तविधा शुद्धौ समानौ रसगन्धकौ ॥५४॥
संमर्द्य कज्जलाभन्तु कुर्य्यात् पात्रे दृढ़ाश्रये ।
ततो वादरवह्निस्थलौहपात्रे द्रवीकृतम् ॥५५॥
गोमयोपरिविन्यस्तकदलीपत्रपातनात् ।
कुर्य्यात् पर्प्पटिकाकारमस्य रक्तिद्वयं क्रमात् ॥५६॥
द्वादशरक्तिकां यावत् प्रयोगः प्रहरार्द्धतः ।
तदूर्द्ध्वं बहु पूगस्य भक्षणं दिवसे पुनः ॥५७॥
तृतीय एव मांसाज्यदुग्धाद्यत्र विधीयते ।
वर्ज्यं विदाहि स्त्री रम्भामूलं तैलञ्च सार्षपम् ॥५८॥
कृष्णमत्स्याम्बुजखगां स्यक्तनिद्रः पयः पिबेत् ।
ग्रहणीक्षयकुष्ठार्शःशोथाजीर्णविनाशिनी ॥५९॥
रसपर्प्पटिका ख्याता निबद्धा चक्रपाणिना ॥६०॥ रसपर्प्पटिका ।

---

रसपर्पटीमाह याम्लेत्यादि तत्रेति तत्र क्षुधावत्यां या विधा यौ रसगन्धकौ शुद्धिप्रकारौ वक्तव्य स्तेन शुद्धा इत्यर्थः । शुद्धपारद कर्ष १ गन्धक कर्ष १ द्वयं खल्ले तावद् घर्षणीयं यावत् कज्जलाभं भवति । ततो लौहदर्विकायां दत्त्वा वदराङ्गारोपरि विन्यस्य लौहदण्डेन सञ्चाल्य यदा द्रवीभूतं भवति

हाटकं रजतं ताम्रं यद्यत्र परिदीयते।
विजयाख्या तु सा ज्ञेया सर्वरोगनिसूदनी ॥६१॥ विजयपर्प्पटी

रसोत्तमं पलं शुद्धं हेमतोलकसंयुतम्।
शिलायां मर्दयेत् तावत् यावदेकत्वमागतम् ॥६२॥
गन्धकस्य पलञ्चैकमयः पात्रे ततो दृढ़े।
मर्दयेत् दृढ़पाणिभ्यां यावत् कज्जलतां व्रजेत् ॥६३॥
ततः पाकविधानज्ञः पर्प्पटीं कारयेत् सुधीः।
रक्तिकादिक्रमेणैव योजयेदनुपानतः।
ग्रहणीं विविधां हन्ति तृष्णा सर्वज्वरापहा ॥६४॥ स्वर्णपर्प्पटी।

अष्टौ गन्धकमाषका रसदलं लौहं तदर्द्धं शुभम्
लौहार्द्धञ्च वराभ्रकं सुविमलं ताम्रस्य भागद्वयम्।
पात्रे लौहमये च मर्दनविधौ चूर्णीकृतञ्चैकतो
दर्व्या वादरवह्निनाऽतिमृदुना पाकं विदित्वा दले ॥६५॥
रम्भाया लघु ढालयेत् पटुरियं पञ्चामृता पर्पटी।
ख्याता क्षौद्रघृतान्विता प्रतिदिनं गुञ्जाद्वयं वर्द्धिता ॥ ६६ ॥
लौहे मर्दनयोगतः सुविमलं भक्ष्यक्रिया लौहवत्।
गुञ्जाष्टावथवा त्रिकं त्रिगुणितं सप्ताहमेवं भजेत् ॥६७॥

---

आर्द्रगोमयपिण्डोपरि स्थापितकोमलकदलीपत्रे चालनीयं अपरकदलीपत्रान्तरेण संपीड्य पर्प्पटिकाकृतिः कार्य्या। रक्तिद्वयं क्रमादिति प्रथमं गुञ्जायुगलं प्रतिदिनमेकैकवर्द्धितो भक्ष्यमिति क्रमादित्यर्थः ॥४८–६०॥

विजयपर्प्पटीमाह हाटकमित्यादि। यदा रसपर्प्पटिकायां सूततुल्यं स्वर्णं रजतं ताम्रञ्च दीयते तदा सा विजयाख्या ज्ञेया ॥६१॥

स्वर्णपर्प्पटिकायां रसोत्तमः हिङ्गुलोत्थः पारदः। पर्प्पटीं कारयेदिति रसपर्प्पटीविधिवत् पचेदित्यर्थः ॥६२—६४॥

पञ्चामृतपर्प्पटिकायाम् अष्टौ गन्धकमाषका रसदलमिति भट्टादिसम्मतः पाठः। व्याख्यातारस्तु माषका इत्यत्र तोलका इति पठन्ति। अन्ये तु रसदलमित्यत्र रस

नानावर्णग्रहण्यामरुचिसमुदये दुष्टदुर्णामकादौ
छर्द्यां दीर्घातिसारे ज्वरभवकलिते रक्तपित्ते क्षयेऽपि ।
वृष्याणां वृष्यराज्ञी बलिपलितहरा नेत्ररोगैकहन्त्री
तत्स्थं दीप्तस्थिराग्निं पुनरपि नवकं रोगिदेहं करोति ॥

पाकोऽस्य त्रिविधः प्रोक्तो मृदुर्मध्यः खरस्तथा ।
आद्ययोर्दृश्यते सूतः खरे पाके न दृश्यते ॥६८॥
मृदौ रसस्य भङ्गः स्यात् मध्ये भङ्गश्च रूप्यवत् ।
खरे लघुर्भवेत् भङ्गो रूक्षसूक्ष्मोऽरुणच्छविः ।
मृदुमध्यौ तथा खाद्यौ खरस्त्याज्यो विषोपमः ॥७०॥

पञ्चामृतपर्पटी ।

शुद्धसूतं समं गन्धं त्रिकटु पटुपञ्चकम् ।
दशकं तुल्यतुल्यञ्च विजया सर्वसम्मिता ।
भावयेच्चित्रभृङ्गोत्थैस्त्रिधा च विजयाद्रवैः ॥ ७१ ॥
दीप्ताग्निना तु यामैकं वालुकायन्त्रगे पचेत् ।
संचूर्ण्य चार्द्रकद्रावैर्भावयित्वा च भक्षयेत् ॥ ७२ ॥
मधुना शाणमानन्तु रसो ह्यग्निकुमारकः ।
दीप्ताग्निकारकः सामग्रहणीदोषनाशनः ॥ ७३ ॥

अग्निकुमारो रसः ।

शुद्धसूतं समं गन्धं मृतताम्राभ्रटङ्कनम् ।
सामुद्रञ्च यवक्षारं स्वर्जि सैन्धवनागरम् ॥ ७४ ॥
अपामार्गस्य च क्षारं पलाशवरुणस्य च ।
प्रत्येकं सूततुल्यं स्यादम्लयोगेन मर्दयेत् ॥ ७५ ॥

---

दर्शातमि पठन्ति । ये तु रसपर्णमिच्छन्ती गन्धकस्य अष्टमाषकत्वमाङ्ग
पारदबाङ्गल्यात् पर्प्पटीव न स्यात् । तेन गन्धकस्य अष्टमाषका रसस्य द
भागत्वमित्यर्थः ॥६५—६८॥

अग्निकुमाररसे पटुपञ्चक एञ्चलवणम् ॥६९॥७३॥

हस्तिशुण्डीद्रवैश्चाग्नौ मर्दयित्वा पुटेल्लघु।
माषमात्रः प्रदातव्यो रसोऽयं वड़वामुखः।
ग्रहणीं विविधां हन्ति संग्रहग्रहणीं ज्वरम् ॥७६॥ वड़वामुखोरसः

रसगन्धकयोश्चापि जातीफललवङ्गयोः।
प्रत्येकं शाणमानञ्च श्लक्ष्णचूर्णीकृतं शुभम् ॥ ७७ ॥
सूर्य्यावर्त्तरसेनैव विल्वपत्ररसेन च
शृङ्गाटकसमुद्भूतस्वरसेन च मर्दयेत्।
चण्डातपेन संशोष्य वटिकां कारयेद्भिषक्
विल्वपत्ररसेनैव दापयेद्रक्तिकाद्वयम् ॥ ७८ ॥
दध्ना च भोजनीयञ्च ग्रहणीरोगनाशनः।
पाण्डुरोगमतीसारं शोथं हन्ति तथा ज्वरम्।
अयञ्च ग्रहणीरोगे कपाटो रस उत्तमः॥७९॥ग्रहणीकपाटो रसः

मुक्ता सुवर्णं रसगन्धटङ्गमभ्रं कपर्दोऽमृततुल्यभागः
सर्वैः समं शङ्खकचूर्णमत्र भाव्यञ्च खल्वेऽतिविषाद्रवेण।
गोलञ्च कृत्वा मृदुकर्पटस्थं सम्पाच्य भाण्डे दिवसार्द्धकञ्च
सर्वाङ्गशीतो रस एष भाव्यो धूस्तूरवज्रीमूषलीद्रवैश्च।
लौहस्य पात्रे परिभावितश्च सिद्धो भवेत् संग्रहणीकपाटः॥८०
वातोत्तरायां मरिचाज्ययुक्तैः पित्तोत्तरायां मधुपिप्पलीभिः
कफोत्तरायां विजयारसेन कटुत्रयेनाज्ययुतो ग्रहण्याम्।
क्षये ज्वरे चार्शसि षट्प्रकारे सामातिसारेऽरुचि पीनसे च
मेहे च कृच्छ्रे गतधातुवर्द्धने गुञ्जाद्वयञ्चापि महामयोघ्नः ॥८१॥
बृहद्ग्रहणीकपाटः।

---

वड़वामुखरसे सामुद्रं करकचलवणं स्वर्जि स्वर्जिकाक्षारम्। पलाश वरुणस-क्षैति पलाशस्य वरुणस्य च क्षारम्। अम्लेनेति काञ्जिकेन ॥७४—७६॥

बृहद्ग्रहणीकपाटरसे घनश्चाभ्रं अमृतं विषम् ॥७७—८१॥

गिरिजाभवबीजकज्जलीं परिमृद्यार्द्ररसेन शोधिता।
कुटजस्य तु भस्मना पुनर्द्विगुणेनाथ विमृद्य मिश्रिता ॥८२॥
मर्दयित्वा प्रदातव्यमस्य गुञ्जाचतुष्टयम्।
अजाक्षीरेण दातव्यं क्वाथेन कुटजस्य वा ॥८३॥
यूषं देयं मसूरस्य वारिभक्तञ्च शीतलम्।
दध्ना सह पुनर्देयं ग्रासादौ क्रमशस्तथा।
निहन्ति ग्रहणीं सर्वां विशेषात् कुक्षिमार्दवम् ॥८४॥

ग्रहणीकपाटो रसः।

हाटकं रजतं ताम्रं यद्यत्र परिदीयते।
विजयाख्या तु सा ज्ञेया सर्वरोगनिसूदनी ॥८५॥ विजया वटिका।
कपर्दतुल्यं रसकन्तु गन्धकं लौहं मृतं टङ्कनकञ्च तुल्यम्।
जयारसेनैकदिनं विमर्द्य चूर्णेन संवेष्ट्य पुटेच्च भाण्डे।
ददीत तत् पोट्टलिकाभिधानं वातप्रधानाग्रहणीनिवृत्त्यै ॥८६॥

ग्रहणीकपर्दपोट्टली।

दग्धान् कपर्दकान् पिष्ट्वा त्र्यूषणं टङ्कनं विषम्।
गन्धकं शुद्धसूतञ्च तुल्यं जम्बीरजैर्द्रवैः ॥८७॥
मर्दयेत् भक्षयेत् माषं मरिचार्द्रं लिहेदनु।
निहन्ति ग्रहणीरोगं पथ्यं तक्रौदनं हितम् ॥८८॥ हंसपोट्टली।
तुल्यं कान्तं रसं तालं माक्षिकं टङ्कनं तथा।
सपादनिष्कं प्रत्येकं पञ्च निष्कं वराटकम्।
द्विनिष्कं गन्धकं सर्वं पिष्ट्वा जम्बीरजैर्द्रवैः ॥८९॥

---

ग्रहणीकपाटरसे गिरिजाबीजं गन्धकं, हरबीजं पारदः। रक्तादाविति रक्तातिसारादौ ॥८२—८४॥

ग्रहणीकपर्दपोट्टलिकायां कपर्दतुल्यमिति वराटभागतुल्यम्। हंसपोट्टलिकामपि ग्रहणीकपर्दपोट्टलीवत् पचेत् ॥८५—८६॥

अर्द्धभागकरीषेण पुटितं भस्म शोभनम्।
प्रदद्यात् ग्रहणीगुल्मक्षयकुष्ठप्रमेहके ॥९०॥ ग्रहणीकपाटः।

रसाभ्रगन्धान् क्रमवृद्धियुक्तान् जङ्घारसेन त्रिदिनं विमर्द्य।
जयन्तिका भृङ्गकलम्बीनीरैः दिनं यवक्षारसटङ्कनञ्च ॥९१॥
क्षिप्त्वा तु गन्धस्य च तुल्यभागं वातारितैलेन युतं पुटित्वा।
गुडूचिका शाल्मलिकारसेन जयारसेनापि विमर्द्य शाणम्।
मरिचसार्द्धं मधुना समेतं ददीत पथ्यं दधिभक्तकञ्च ॥ ९२ ॥

ग्रहणीकपाटः।

सूतं गन्धं यवक्षारं जयन्त्युग्राभ्रटङ्कनम्।
जयन्तीभृङ्गजम्बीरद्रवैः पिष्ट्वा दिनत्रयम् ॥ ९३ ॥
यामार्द्धं गोलकं स्वेद्यं मन्देन पावकेन च।
शीते जया रससमं शाल्मलीविजयाद्रवैः ॥ ९४ ॥
भावयेत् सप्तधा वज्रकपाटः स्यात् रसोत्तमः।
माषद्वयं त्रयं वास्य मधुना ग्रहणीं जयेत् ॥ ९५ ॥

ग्रहणीवज्रकपाटः।

तारमौक्तिकहेमानि सारश्चैकैकभागिकः।
द्विभागो गन्धकः सूतस्त्रिभागो मर्दयेदिमान् ॥ ९६ ॥
कपित्थस्वरसैर्गाढ़ं मृगशृङ्गे ततः क्षिपेत्।
पुटेत् मध्यपुटेनैव तत उद्धृत्य मर्दयेत् ॥९७॥
बलारसैः सप्तधैवमपामार्गरसैस्त्रिधा।

---

ग्रहणीकपाटे कान्तं कान्तलौहं अर्द्धभागकरीषेणेति करीषेणार्द्धभागपूरिते गर्त्ते इत्यर्थः ॥८७—९०॥

ग्रहणीकपाटे जङ्घारसेन काकजङ्घारसेन। वातारितैलेन एरण्डतैलेन ॥९१—९२॥

ग्रहणीवज्रकपाटे सारो लौहं, तारादि सर्वं कपित्थकस्वरसैः संमर्द्य मृगशृङ्गान्तरे कृत्वा मध्यविधपुटेनैव पचेत्। ततः बलारसादिभिर्भावयेत् ॥९३—९५॥

लोध्रप्रतिविषा मुस्ता धातकीन्द्रयवास्तता: ॥ ९८ ॥
प्रत्येकमेतत् स्वरसैर्भावना स्यात् त्रिधा त्रिधा ।
माषमात्रो रसो देयो मधुना मरिचैस्तथा ॥ ९९ ॥
हन्यात् सर्वानतीसारान् ग्रहणीं सर्वजामपि ।
कपाटो ग्रहणीरोगे रसोऽयं वह्निदीपन: ॥१००॥ग्रहणीकपाट:

कृष्णाभ्रलौहमलशुद्धविड़ङ्गचूर्णं
प्रत्येकमेव|पलिकं विधिवद्विधाय ।
चव्यं कटुत्रयफलत्रयकेशराज-
दन्तीपयोदचपलानलघण्टकर्णा: ॥ १०१ ॥
मानोलकूच वृहती त्रिवृता: स सूर्य्या-
वर्त्ता: पुनर्नविकया सहितास्त्वमीषाम् ।
मूलं प्रति प्रतिविशोधितमच्चमेकम्
चूर्णं तदर्द्धरसगन्धकमेकसंस्थम् ॥ १०२ ॥
कृत्वार्द्रकीयरससंवलितञ्च भूय: ।
संपिष्य तस्य वटिका विधिवत् विधेया ।
हन्त्यम्लपित्तमरुचिं ग्रहणीमसाध्यां
दुर्णामकामलभगन्दरशोथगुल्मान् ॥ १०३ ॥
शूलञ्च पाकजनितं सतताग्निमान्द्यं
सद्य: करोत्यपचितिं चिरनष्टवह्ने: ।
कुष्ठं निहन्ति पलितञ्च वलिं प्रवृद्धां
श्वासञ्च कासमपि पाण्डुगदं निहन्ति ॥१०४॥
वार्य्यन्नमांसदधिकाञ्जिकतक्रमत्स्य-
वृत्ताम्लतैलपरिपक्वभुजो यथेष्टम् ।

---

पानीयभक्तवटिकामाह कृष्णाभ्रेत्यादि। शुद्धविड़ङ्गमिति तुषवर्जितविड़ङ्गं चपला पिप्पली, अनलश्चित्रक:, घण्टकर्णा खारकोन इति ख्यात:। तद

शृङ्गाटविल्वगुड़कच्चटनारिकेल-
दुग्धानि सर्वविदलानि विवर्जयेत्तु ॥१०५॥ पानीयभक्तवटी ।

दग्धशम्बूकसिन्धुत्थं तुल्यं चौद्रेण मर्दयेत् ।
निष्कैकेन जिहन्त्याशु वातसंग्रहणीगदम् ॥१०६॥ शम्बूकादिवटी

एकांशो रसराजस्य ग्राह्यौ द्वौ हाटकस्य च ।
मुक्ताफलस्य चत्वारो भागाः षड् दीर्घनिःस्वनात् ॥१०७॥
त्र्यंशं बलेर्वराट्याश्च टङ्कनो रसपादिकः ।
पक्वनिम्बुकतोयेन सर्वमेकत्र मर्दयेत् ॥१०८॥
मूषामध्ये न्यसेत् कल्कं तस्य वक्त्रं निरोधयेत् ।
गर्त्तेऽरत्निप्रमाणेन पुटेत् त्रिंशद्‌ वनोपलैः ॥१०९॥
स्वाङ्गशीतलतां कृत्वा रसं मूषोदरात् नयेत् ।
ततः खल्लोदरे मर्द्यं सुधारूपं समुद्धरेत् ॥११०॥
एतस्यामृतरूपस्य दद्याद् गुञ्जाचतुष्टयम् ।
घृतमाध्वीकसंयुक्तमेकोनत्रिंशदूषणैः ॥१११॥
मन्दाग्नौ रोगसङ्घे च ग्रहण्यां विषमज्वरे ।
गुदाङ्कुरे महाशूले पीनसे श्वासकासयोः ॥११२॥
अतीसारे ग्रहण्याञ्च श्वयथौ पाण्डुके गदे ।
सर्वेषु कुष्ठरोगेषु यकृत् प्लीहोदरेषु च ॥११३॥
वातपित्तकफोत्थेषु द्वन्द्वजेषु त्रिजेषु च ।
दद्यात् सर्वेषु रोगेषु श्रेष्ठमेतत् रसायनम् ॥११४॥

हिरण्यगर्भपोट्टलीरसः ।

शुद्धसूतस्य कर्षैकं कर्षैकं गन्धकस्य च ।
द्वयोः कज्जलिकातुल्यं व्योमचूर्णं प्रदापयेत् ॥११५॥

---

रसगन्धकमिति मिलितरसगन्धकं कर्षार्द्धम् अन्ये तु प्रत्येकं कर्षार्द्धमाहुः । हृचाम्लं महार्द्रकम् ॥९६—१०५॥

हिरण्यगर्भपोट्टलिकायां दीर्घनिःस्वनं कांस्यं, बलिर्गन्धकस्य ॥१०६—११४॥

केशराजस्य भृङ्गस्य निर्गुण्ड्यास्त्रिवृकस्य च ।
ग्रीष्मसुन्दरमण्डूकी जयन्तीन्द्राशनस्य च ॥ ११६ ॥
श्वेतापराजितायाश्च स्वरसं पर्णसम्भवम् ।
रसतुल्यं प्रदातव्यं चूर्णञ्च मरिचोद्भवम् ॥ ११७ ॥
देयं रसार्द्धभागेन चूर्णं टङ्कनसम्भवम् ।
संमर्द्य वटिकां कुर्य्यात् कलायसदृशीं बुधः ॥ ११८ ॥
हन्ति कामं क्षयं श्वासं वातश्लेष्मभवां रुजम् ।
ज्वरे चैवातिसारे च सिद्ध एष प्रयोगराट् ॥ ११९ ॥
चातुर्थके ज्वरे श्रेष्ठो ग्रहण्यातङ्कनाशनः ।
दधि चावश्यकं देयं प्राह नागार्जुनो मुनिः ॥१२०॥ रसाभ्रवटी।
रसं गन्धं विषं व्योषं टङ्कनं लौहभस्मकम् ।
अजमोदाहिफेनञ्च सर्वतुल्यं मृताभ्रकम् ॥ १२१ ॥
चित्रकक्वाथेण मर्दयेद् यामसप्तकम् ।
मरिचाभां वटीं खादेदजीर्णं ग्रहणीं तथा ।
नाशयेन्नात्र सन्देहो गुह्यमेतच्चिकित्सितम् ॥१२२॥ अग्निकुमारः
जातीफललवङ्गाब्दत्वगेलाटङ्करामठम् ।
जीरकं तेजपत्रञ्च यमानी विश्वसैन्धवाः ॥ १२३ ॥
लौहभस्म रसो गन्धस्ताम्रं प्रत्येकशः पलम् ।
मरिचं द्विपलं दत्त्वा छागीक्षीरेण पेषयेत् ॥ १२४ ॥
धात्रीरसेन वा पेष्यं वटिकाः कुरु यत्नतः ।
श्रीमद्गहननाथेन विचिन्त्य परिनिर्मितः ॥ १२५ ॥
सूर्य्यवत्तेजसा चायं रसो नृपतिवल्लभः ।
अष्टादश वटीं खादेत् पवित्रः सूर्य्यदर्शकः ॥ १२६ ॥
हन्ति मन्दानलं सर्वमामदोषं विसूचिकाम् ।

---

रसाभ्रवटिकायां व्योमचूर्णं कृष्णाभ्रचूर्णम् ॥११५—१२०॥

प्लीहगुल्मोदराष्ठीला यकृत् पाण्डुत्वकामलाम् ॥ १२७ ॥
सर्व्वानेव गदान् हन्ति चण्डांशुरिव पापहा।
बलवर्णकरो हृद्य आयुष्यो वीर्य्यवर्द्धनः ॥ १२८ ॥
परं वाजीकरः श्रेष्ठः पटुदो मन्त्रसिद्धिदः।
अरोगी दीर्घजीवी स्याद्रोगी रोगाद्विमुच्यते ॥ १२९ ॥
रसस्यास्य प्रसादेन बुद्धिमान् जायते नरः।
बदरास्थिप्रमाणेन वटिकां कारयेत् भिषक्॥१३०॥नृपतिवल्लभः।
जातीफललवङ्गाब्दत्वगेलाटङ्गरामठम्।
जीरकं तेजपत्रञ्च यमानी विश्वसैन्धवम् ॥ १३१ ॥
लौहमभ्रं सताम्रञ्च रसगन्धकमेव च।
मरिचं त्रिवृतं रूप्यं प्रत्येकं द्विपलोन्मितम् ॥ १३२ ॥
धात्रीरसे वटीं कुर्य्यात् द्विगुञ्जाफलमानतः।
हन्ति शूलं तथा गुल्ममामवातं सुदारुणम् ॥ १३३ ॥
हृच्छूलं पार्श्वशूलञ्च चक्षुःशूलं हलीमकम्।
शिरःशूलं कटीशूलमानाहमष्टशूलकम् ॥ १३४ ॥
क्रिमिकुष्ठानि दद्रूणि वातरक्तं भगन्दरम्।
उपदंशमतीसारं ग्रहण्यर्शःप्रवाहिकाम्।
नृपवल्लभराजोऽयं महेशेन प्रकाशितः ॥१३५॥ राजवल्लभो रसः।
रसगन्धकलौहाभ्रं नागं चित्रं त्रिवृत्समम्।
टङ्गं जातीफलं हिङ्गु त्वगेलाब्दलवङ्गकम् ॥ १३६ ॥
तेजपत्रमजाजी च यमानी विश्वसैन्धवम्।
प्रत्येकं तोलकं चूर्णं मरीचताम्रयोस्तथा ॥ १३७ ॥
निरुत्थकं सूतं हेम तथा द्वादशरत्तिकम्।
आर्द्रकस्य रसेनैव धात्रयाश्च स्वरसेन च ॥ १३८ ॥

---

नृपतिवल्लभे षष्ठी मुस्तकम् ॥१२१—१३०॥

भावयित्वा प्रदातव्यो माषद्वयप्रमाणतः ।
भक्षयेत् प्रातरुत्थाय पथ्यं भक्षेत् यथेप्सितम् ॥१३९॥
अग्निमान्द्यमजीर्णञ्च दुर्नामं ग्रहणीं जयेत् ।
आमाजीर्णप्रशमनः सर्वरोगनिसूदनः ।
नाशयेदुदरान् रोगान् विष्णुचक्रमिवासुरान् ॥ १४० ॥

बृहन्नृपवल्लभः ।

मुक्ता सुवर्णं रसगन्धटङ्कमभ्रं कपर्दी रसतुल्यभागः ।
सर्वैः समं शङ्खकचूर्णमिष्टं खल्ले च भाव्योऽतिविषाद्रवेण ॥१४१॥
गोलञ्च कृत्वा मृदुकर्पटस्थं सम्पाच्य भाण्डे दिवसार्द्धकञ्च ।
सर्वाङ्गशीते रस एष भाव्यो धूस्तूरवह्निमुषलीद्रवैश्च ॥ १४२ ॥
लौहस्य पात्रे परिभावितश्च सिद्धो भवेत् संग्रहणीकपाटः ।
वातोत्तरायां मरिचाज्ययुक्तः पित्तोत्तरायां मधुपिप्पलीभिः॥१४
कफोत्तरायां विजयारसेन कटुत्रयेणाज्ययुतो ग्रहण्याम् ।
क्षये ज्वरे चार्शसि षट्प्रकारे भगन्दरे चारुचि पीनसे च ॥
मेहे च कृच्छ्रे गतधातुवर्द्धने गुञ्जाद्वयञ्चास्य महामयोघ्नम्॥१४

संग्रहग्रहणीकपाटः ।

कर्षत्रयं मृतं कान्तं मृताभ्रं मृतताम्रकम् ।
मृतं तारं माक्षिकञ्च कर्षं कर्षं प्रदापयेत् ॥ १४५ ॥
मृतं स्वर्णं मृतं तारं टङ्कनं शृङ्गमेव च ।
वसिरं दन्तिमूलञ्च मरिचं तेजपत्रकम् ॥ १४६ ॥
यमानी वालकं मुस्तं शुण्ठकञ्च सधन्यकम् ।
सिन्धूद्भवं सकर्पूरं विड़ङ्गं चित्रकं विषम् ॥ १४७ ॥
पारदं गन्धकञ्चैव तोलमानं प्रदापयेत् ।
तोलद्वयं त्रिवृच्चूर्णं लवङ्गं तच्चतुर्गुणम् ॥ १४८ ॥
जातीकोषफलञ्चैव वराङ्गकन्तु तत्समम् ।
सर्वेषामर्द्धभागन्तु विड़कं तत्र मिश्रयेत् ॥ १४९ ॥

सर्वमेकीकृतं यद्यत् त्रुटिचूर्णञ्च तत्समम् ।
भावना च प्रदातव्या छागीदुग्धेन सप्तधा ॥ १५३ ॥
मातुलुङ्गरसैः पश्चात् भावयेत् सप्तवारकम् ।
छायाशुष्कां वटीं कृत्वा भक्षयेद्दग्नरक्तिकाम् ॥ १५१ ॥
मन्दानलं संग्रहणीं प्रवृद्धा मामानुबन्धीं क्रिमिपाण्डुरोगम् ।
छर्द्यम्लपित्तं हृदयामयञ्च गुल्मोदरानाहभगन्दरञ्च ॥ १५२ ॥
अर्शांसि वै पित्तकृतानशेषान् सोमं सशूलाष्टकमेव हन्ति ।
साजीर्णविष्टम्भविसर्पदाहं विलम्बिकाञ्चाप्यलसं प्रमेहम् ॥१५३॥
कुष्ठान्यशेषाणि च कासशोषं हन्यात् सशोथं ज्वरमूत्रकृच्छ्रम् ।
मतान्तरे सर्वत भद्रनाम महेश्वरेणैव विभाषितोऽयम् ॥१५४॥

महाराजनृपतिवल्लभो रसः ।

माक्षिकं लौहमभ्रञ्च वङ्गं रजतहाटकम् ।
ग्रन्थि यमानिका चोचं ताम्रं नागरटङ्कनम् ॥ १५५ ॥
सैन्धवं वालकं मुस्तं धन्याकं गन्धकं रसम् ।
शृङ्गी कर्पूरकञ्चैव प्रत्येकं माषकोन्मितम् ॥ १५६ ॥
माषद्वयं रामठं स्यात् मरिचानां चतुष्टयम् ।
जातीकोषं लवङ्गञ्च पत्रञ्च तोलकोन्मितम् ॥ १५७ ॥
नाभिशङ्खं विड़ङ्गञ्च शाणं माषद्वयं विषम् ।
कर्षषट्कं सत्रिमाषं सूक्ष्मैलानां ततः क्षिपेत् ॥ १५८ ॥
विड़ं कर्षद्वयं सर्वं छागीक्षीरेण पेषयेत् ।
चतुर्गुञ्जमितं खादेत् सानाहग्रहणीं जयेत् ॥ १५९ ॥
शम्भुना निर्म्मितो ह्येष पूर्ववत् गुणकारकः ।
नाम्ना महाराजपूर्वो नृपवल्लभ उच्यते ॥ १६० ॥

महाराजनृपतिवल्लभः ।

इति ग्रहणीरोगचिकित्सा ।

---

## अर्शोऽधिकारः ।

चतुर्भागं शुद्धसूतं पञ्चटङ्कनमभ्रकम् ।
त्रिदिनं भावयेद् घर्मे द्रवैः श्वेतपुनर्नवैः ॥ १ ॥
द्विगुञ्जं भक्षयेन्नित्यं वातदुर्नामशान्तये ।
सिद्धश्चक्रेश्वरो नाम रसश्चार्शःकुलान्तकः ॥२॥ चक्रेश्वरो रसः ।

मृतसूतार्कहेमाभ्रं तीक्ष्णं मुण्डञ्च गन्धकम् ।
मण्डूरञ्च समं ताप्यं मर्द्यं कन्याद्रवैर्दिनम् ॥ ३ ॥
अन्धमूषागतं सर्वं ततः पाच्यं दृढ़ाग्निना ।
चूर्णितं सितया मासं खादेत्तच्चार्शसां हितम् ।
रसस्तीक्ष्णमुखो नाम चासाध्यमपि साधयेत् ॥ ४ ॥
तीक्ष्णमुखोरसः ।

शुद्धसूतं द्विधागन्धं मृतलौहञ्च ताम्रकम् ।
प्रत्येकं द्विपलं दन्ती त्र्यूषणं शूरणं तथा ॥ ५ ॥
शुभाटङ्कयवक्षार सैन्धवं पलपञ्चकम् ।
पलाष्टकं स्नुहीक्षीरं द्वात्रिंशच्च गवां जलैः ॥ ६ ॥
आपिण्डितं पचेदग्नौ खादेत् माषद्वयं ततः ।
रसश्चार्शःकुठारोऽयं सर्वरोगकुलान्तकः ॥७॥ अर्शःकुठारो रसः ।

---

महाराजनृपवल्लभे कान्तं कान्तलौहं शृङ्गी कर्कटशृङ्गी, वसिरं गजपिप्पली तोलमानमिति प्रत्येकं तोलकमानं त्रुटीचूर्णन्तु तत् सममिति मिलितसर्वचूर्णतुल्यैलाचूर्णमित्यर्थः ॥१३१—१६०॥

पूर्वोक्तसङ्गत्यैव ग्रहण्यनन्तरमर्शश्चिकित्सितमुच्यते तत्र प्रथमं चक्रेश्वररसमाह शुद्धसूतेति । सूतश्चात्र सूतभस्म अथवा समानो गन्धको देयः ॥१॥२॥

तीक्ष्णमुखरसे तीक्ष्णं मुण्डञ्चेति तीक्ष्णलौहं मुण्डलौहञ्च ताप्यं स्वर्णमाक्षिकं ॥ ३ ॥ ४ ॥

अर्शःकुठाररसे शुभा वंशलोचना। चक्राख्यरसे वैक्रान्तं दग्धहीरकं भल्लातकस्यापि भागैकं ग्राह्यम् ॥५—७॥

मृतसूताभ्रवैक्रान्तं ताम्रं कांस्यं समं समम्।
सर्वतुल्येन गन्धेन दिनं भल्लातकैर्द्रवैः ॥ ८ ॥
मर्दयेद्यत्नतः पश्चात् वटीं कुर्य्यात् द्विगुञ्जिकाम्।
भक्षणाद्गुदजान् हन्ति द्वन्द्वजान् सर्वजानपि ॥९॥ चक्राख्योरसः।
मृतसूताभ्रलौहार्कविषं गन्धं समं समम्।
सर्वतुल्यन्तु भल्लातफलमेकत्र चूर्णयेत् ॥ १० ॥
द्रवैः शूरणकन्दोत्थैः खल्ले मर्द्यं दिनत्रयम्।
माषमात्रं लिहेदाज्ये रसश्चार्शांसि नाशयेत्।
नित्योदितो रसोनाम गुदोद्भवकुलान्तकः ॥ ११ ॥
नित्योदितो रसः।
क्रिमिरिपुदहनव्योष त्रिफला सुरदारुचव्य भूनिम्बम्।
मागधीमूलमुस्तं सशटीवचाधातुमाक्षिकञ्चैव।
लवणक्षारनिशायुगकुस्तुम्बुरुगजकणातिविषा ॥ १३ ॥
कर्षांशकान्येव समानि कुर्य्यात् पलाष्टकं चाश्मजतोर्विदद्यात्।
निष्पत्रशुद्धस्य पुरस्य धीमान् पलद्वयं लौहरजस्तथैव ॥ १४ ॥
सिताचतुष्कं पलमत्र वांश्या निकुम्भकुम्भं त्रिसुगन्धियुक्तं
चन्द्रप्रभेयं गुड़िका विधेया अर्शांसि निर्नाशयते षड़ेव ॥ १५ ॥
भगन्दरं कामलपाण्डुरोगं विनष्टवह्नेः कुरुते च दीप्तिम्।
हन्त्यामयान् पित्तकफानिलोत्थान् नाड़ीगते मर्मगते व्रणे च १६॥
ग्रन्थ्यर्बुदे विद्रधिराजयक्ष्ममेहे भगाख्ये प्रदरे च योज्या।
शुक्रक्षये चाश्मरीमूत्रकृच्छ्रे मूत्रप्रवाहेऽप्युदरामये च ॥ १७ ॥

---

नित्योदितरसमाह मृतसूतेत्यादि। मृतसूतस्थाने शुद्धसूतमिति केचित् पठन्ति। सूतादिगन्धान्तानि षट् द्रव्याणि समभागानि। भल्लातं भल्लातफलं तच्च सर्वं तुल्यं ज्ञेयम्। अभावे रक्तचन्दनम्। तन्त्रान्तरेऽस्या गुदजान्तकसंज्ञा ज्ञातव्या ॥८—११॥

चन्द्रप्रभ.गुड़िकायां क्रिमिरिपु विड़ङ्गं, दहनश्चित्रकः, सुरदारु देवदारु, भूनिम्बं चिरेता इति ख्याता, मागधीमूलं पिप्पलीमूलं, निशायुगं हरिद्राद्वयम्, अश्मजतु

तक्रानुपानं त्वथ मस्तुपानं अजोरसो जाङ्गलजो रसो वा।
पयोऽथवा शीतजलानुपानं बलेन नागस्तुरगो जवेन ॥ १८ ॥
दृष्ट्या सुपर्णः श्रवणे वराहः कान्त्या रतीशो धिषणश्च बुद्ध्या।
न पानभोज्ये परिहार्य्यमस्ति न शीतवातातपमैथुनेषु।
शम्भुं समभ्यर्च्य कृतप्रणामं प्राप्ता गुड़ी चन्द्रमसः प्रसादात् ॥१९॥

शुक्रदोषान् निहन्त्याशु प्रमेहानपि दारुणान्।

बलीपलितनिर्मुक्तो वृद्धोऽपि तरुणायते॥२०॥चन्द्रप्रभा गुड़िका॥

माणशूरणभल्लातवित्रद्दन्तीसमन्वितम्।

त्रिकत्रयसमायुक्तं लौहं दुर्नामनाशनम् ॥२१॥ माणाद्यं लौहम्

रसगन्धकलौहानां प्रत्येकं भागयुग्मकम्।
त्रिकटु दन्तिकुष्ठैकं षड्भागं लाङ्गलस्य च ॥२२॥
क्षारसैन्धवटङ्गानां प्रत्येकं भागपञ्चकम्।
गोमूत्रस्य च द्वात्रिंशत् स्नुहीक्षीरं तथैव च ॥२३॥
यावच्च पिण्डितं सर्वं तावन्मृदग्निना पचेत्।
माषद्वयं ततः खादेत् दिवास्वप्नादि वर्जयेत्।

रसश्चञ्चत्कुठारोऽयमर्शसां कुलनाशनः ॥२४॥ चञ्चत्कुठारो रसः॥

शिलागन्धकयोश्चूर्णं पृथग्भृङ्गरसाप्लुतम्।
सप्ताहं भावयेत् सर्पिर्मधुभ्याञ्च विमर्दयेत् ॥२५॥

---

शिलाजतु। निष्पन्नगुडस्य पुरस्येति विशुद्धगुग्गुलोः। वांशा वंशलोच निकुम्भो दन्ती कुम्भी त्रिवृत्। वृद्धवैद्योपदेशेन पलार्द्धं रसगन्धकम्। केव मूर्च्छितं वापि पलं वा दापयेद्रसम्। अभ्रकञ्च क्षिपेत् कश्चित् पलमानं भिषग्वर समयं मधुसर्पिभ्यामादौ रक्तिचतुष्टयम्। सत्यं बुद्ध्या यद्वा युक्ति यावन्म. षचतुष्टय चित्रदन्तीत्रिजातानां कर्षमानं पृथक् पृथक्। केचित्तु इदं श्लोकत्रयं पठ ॥१२—२०॥

माणादिलौहे लौहं सर्वचूर्णसमम् ॥२१॥

अर्शःसवानुलोम्यार्थं हताग्निबलवर्द्धनम् ।
रक्तिकाद्वितयं खादेत् कुष्ठादिरहितो नरः ॥२६॥

शिलागन्धकवटकः ।

जातीफलं लवङ्गञ्च पिप्पलीं सैन्धवं तथा ।
शुण्ठीधूस्तूरवीजञ्च दरदं टङ्गनं तथा ॥२७॥
समं सर्वं विचूर्ण्याथ जम्बाम्भसा विमर्दयेत् ।
जातीफलवटिकेयमर्शोऽग्निमान्द्यनाशिनी ॥२८॥

जातीफलादिवटी

मृतसूताभ्रलौहानि मृतार्कगन्धकैः सह ।
सर्वाणि समभागानि भल्लातं सर्वतुल्यकम् ॥२९॥
वन्यशूरणकन्दोत्थैर्द्रवैः पलप्रमाणतः ।
मर्दयेत् दिनमेकञ्च माषमात्रं पिबेद् घृतैः ॥३०॥
भक्षणात् हन्ति सर्वाणि चार्शांसि च न संशयः ।
असाध्येष्वपि कर्त्तव्या चिकित्सा शङ्करोदिता ।
कुष्ठरोगं निहन्त्याशु मृत्युरोगविनाशिनी ॥३१॥ पञ्चाननवटी ।

गन्धं रसेन्द्रं मृतलौहकिट्टं फलत्रयं त्र्यूषणवह्निभृङ्गम् ।
कृत्वा समं शाल्मलिका गुडूचीरसेन यामत्रितयं विमर्द्य ।
निष्कप्रमाणं गदितानुपानैः सर्वाणि चार्शांसि हरेद्रसस्य ॥३२॥

अष्टाङ्गो रसः ।

इति अर्शोऽधिकारः ।

---

शिलागन्धकवटके शिला मनःशिला ॥ २२—२६॥
अष्टाङ्गरसे लौहकिट्टं मण्डूरं फलत्रयं त्रिफला ॥२७—३२॥

इति अर्शश्चिकित्सा ।

## अथ अजीर्णाधिकारः।

एकैकं विषसूतञ्च जातीटङ्गं द्विकं द्विकम्।
कृष्णात्रिकं विश्वषट्कं गन्धं कपर्दकं द्विकम् ॥१॥
देवपुष्पं बाणमितं सर्वं संमर्द्य यत्नतः।
महोदधिवटी नाम्ना नष्टमग्निं प्रदीपयेत् ॥२॥ महोदधिवटी
शुद्धसूतं विषं गन्धमजमोदाफलत्रिकम्।
स्वर्जिक्षारं यवक्षारं वह्निसैन्धवजीरकम् ॥३॥
सौवर्चलं विड़ङ्गानि सामुद्रं त्र्यूषणं तथा।
विषमुष्टिसमं सर्वं जम्बीराम्लेन मर्दयेत्।
मरिचाभां वटीं खादेत् वह्निमान्द्यप्रशान्तये ॥४॥ अग्नितुण्डीरसः
शुद्धसूतस्य कर्षैकं गन्धकं तत्समं मतम्।
पिप्पली पञ्चलवणं मरिचञ्च फलत्रयम् ॥ ५ ॥
क्षारत्रयं समं सर्वं चूर्णं कृत्वा प्रयत्नतः।
निर्गुण्ड्याश्च द्रवेणैव भावयेद्दिनमेकतः।
वड़वानलनामायं मन्दाग्निञ्च विनाशयेत्॥६॥ वड़वानलो रसः
गन्धेशटङ्गनैकैकं विषमत्र त्रिभागिकम्।
अष्टभागन्तु मरिचं जम्भाम्भोमर्दितं दिनम् ॥ ७ ॥
तद्वटीं मुद्गमानेन कृत्वार्द्रेण प्रयोजयेत्।
शूलारोचकगुल्मेषु विसूच्यां वह्निमान्द्यके।
अजीर्णे सन्निपातादौ शैत्ये जाड्ये शिरोगदे ॥८॥ हुताशनो रसः

---

अर्शः कार्य्यत्वात्तदनन्तरम् अग्निमान्द्यादिचिकित्सामाह एकैकमित्यादि। 
जातीफलम्। देवपुष्पं लवङ्गं बाणमितमिति पञ्चभागमित्यर्थः ॥१—२॥
अग्नितुण्डीरसे वह्निश्चित्रकः, अजमोदा यमानी ॥३—४॥
वड़वानलरसे क्षारत्रयं यवक्षारसर्जिक्षारटङ्गनक्षारम् ॥५—६॥
हुताशनरसे ईशः पारदः ॥७॥८॥

एकद्विकद्वादशभागयुक्तं योज्यं विषं टङ्कनमूषणञ्च ।
हुताशनो नाम हुताशनस्य करोति वृद्धिं कफजित् नराणाम् ॥९॥

बृहत् हुताशनो रसः ।

शुद्धौ पारदगन्धौ च समानौ कज्जलीकृतौ ।
तयोरर्द्धं विषं शुद्धं तत्समं टङ्कनं भवेत् ॥ १० ॥
भृङ्गराजद्रवैर्भाव्यं त्रिदिनं यत्नतः पुनः ।
मुद्गप्रमाणा वटिका कर्त्तव्या भिषजां वरैः ॥ ११ ॥
वटीद्वयं हरेत् शूलमग्निमान्द्यं सुदारुणम् ।
अजीर्णं जरयत्याशु धतुपुष्टिं करोति च ॥ १२ ॥
नानाव्याधिहरा चेयं वटी गुरुवचो यथा ।
अनुपानविशेषेण सम्यक् गुणकरी भवेत् ॥१३॥ अमृतकल्पवटी ।
रसेन्द्रगन्धौ सह टङ्कनेन समं विषं योज्यमिह त्रिभागम् ।
कपर्दशङ्खाविह नेत्रभागौ मरिचमत्राष्टगुणं प्रदेयम् ॥ १४ ॥
सुपक्वजम्बीररसेन घृष्टः सिद्धो भवेदग्निकुमार एषः ।
विसूचिकाजीर्णसमीरणार्त्ते दद्याद्द्विवल्लं ग्रहणीगदे च ॥ १५ ॥

अग्निकुमारो रसः ।

शुद्धसूतं द्विधागन्धं गन्धतुल्यञ्च टङ्कनम् ।
फलत्रयं यवक्षारं व्योषं पञ्चपटूनि च ॥ १६ ॥
द्वादशैतानि सर्वाणि रसतुल्यानि दापयेत् ।
संमर्द्य सप्तधा सर्वं भावयेदार्द्रकद्रवैः ॥ १७ ॥
संशोष्य चूर्णयित्वा तु भक्षयेदार्द्रकाम्बुना ।
शाणमात्रं वयोवीक्ष्य नानाजीर्णप्रशान्तये ॥ १८ ॥

---

अमृतकल्परसे तत्समिति विषसमम् ॥९—१३॥
अग्निकुमाररसे भागत्रयमित्येकभागापेक्षया एवं सर्वत्र। कपर्दशङ्खं दग्ध्वा जम्बीररसे प्रक्षिप्य शोधयन्ति वृद्धाः ॥१४॥१५॥

रसश्चाग्निकुमारोऽयं महेशेन प्रकाशितः।
महाग्निकारकश्चैव कालभास्करतेजसाम्॥ १९॥
अग्निमान्द्यभवान् रोगान् शोथं पाण्डामयं जयेत्।
दुर्नामग्रहणीसामरोगान् हन्ति न संशयः।
यथेष्टाहारचेष्टस्य नास्यत्र नियमः क्वचित्॥ २०॥

बृहदग्निकुमारो रसः।

व्योषं जातीफले द्वे च लवङ्गञ्च वराङ्गकम्।
पत्रं शृङ्गीकणाटङ्कं यमानी जीरकद्वयम्॥ २१॥
सैन्धवञ्च विड़ं हिङ्गुरसं गन्धञ्च रौप्यकम्।
लौहमभ्रं समं सर्वं जम्बीररसमर्दितम्॥ २२॥
चतुर्गुञ्जां वटीं कृत्वा खादेदजीर्णशान्तये।
अत्यग्निकारकश्चायं रसश्चाग्निकुमारकः॥ २३॥
संग्रहग्रहणीञ्चैव वातपित्तकफोद्भवाम्।
नाशयेदामदोषञ्च त्रिदोषजनितञ्च यत्।
शूलदोषं विसूचीञ्च भास्करस्तिमिरं यथा॥ २४॥

अपरबृहदग्निकुमारो रसः।

लवङ्गं चित्रकं शुण्ठी जयपालं समं समम्।
टङ्गनञ्च प्रदातव्यं वृद्धदारस्य कार्षिकम्॥ २५॥
चतुर्दशभावनाश्च दन्तीद्रावैः प्रदापयेत्।
निम्बार्केन त्रिधा देया वृद्धदारेण पञ्चधा॥ २६॥
रसं गन्धञ्च गरलं मेलयित्वा विभावयेत्।
आर्द्रकस्य रसेनैव चित्रकस्य रसेन वा॥ २७॥

---

अग्निकुमाररसे रसापेक्षया द्विगुणं गन्धं टङ्गनञ्च, पटूनि लवणानि, दादं तानीति फलत्रयादि पञ्चपटून्तानि द्रव्याणि रसतुल्यानि॥१९—२०॥

अपरबृहदग्निकुमाररसे जातीफले इति जातीफलजातीकोषे वराङ्गं गुड़त्वक् ॥२१—२४॥

मुद्गप्रमाणां वटिकां कृत्वा खादेत् दिने दिने।
क्षुत्पिपासाकरी चेयं जीर्णज्वरविनाशिनी ॥ २८ ॥

बृहन्महोदधि वटी।

पारदामृतलवङ्गगन्धकं भागयुग्ममरिचेन मिश्रितम्।
जातिकाफलमथार्द्धभागिकं तिन्तिड़ीफलरसेन मर्दितम् ॥२९॥
माषमात्रमनुपानयोगतः सद्य एव जठराग्निदीपनः।
संग्रहग्रहणीकुम्भकर्णकं सामवातखड़दूषणं जयेत्।
वह्निमान्द्य दशवक्त्रनाशनो रामवाण इति विश्रुतो रसः ॥३०॥

रामवाणरसः।

शुद्धसूतं विषं गन्धं समं सर्वं विचूर्णयेत्।
मरिचं सर्वतुल्यञ्च कण्टकार्य्याः फलद्रवैः ॥ ३१ ॥
मर्दयेद् भावयेत् सर्वमेकविंशतिवारकम्।
त्रिगुञ्जां वटिकां खादेत् सर्वाजीर्णप्रशान्तये।
अजीर्णकण्टकः सोऽयं रसो हन्ति विसूचिकाम् ॥ ३२ ॥

अजीर्णकण्टको रसः।

शुद्धसूतं द्विधागन्धं त्रिभागं तीक्ष्णभस्मकम्।
त्रिभिः समं विषं देयं चित्रकक्काथभावितम् ॥ ३३ ॥
धूर्त्तबीजस्य भस्मापि द्वात्रिंशद्भागसंयुतम्।
कटुत्रयं त्रिभागं स्यात् लवङ्गैलाच तत्समम् ॥ ३४ ॥
जातीफलं तथा कोषमर्द्धभागं नियोजयेत्।

---

बृहन्महोदधिरसे लवङ्गादि सर्वं कर्षपरिमितं गृहीत्वा दन्त्यादिद्रवैर्भावयेत्। ततः रसगन्धविषमेकीकृत्य आर्द्रकादिरसैर्भावयेत् ॥२५—२८॥

रामवाणरसे रसादिगन्धान्तानां चतुर्णां समभागमरिचं च एकभागापेक्षया द्विगुणं मिलितापेक्षयेति केचित्। जातिकाफलमर्द्धभागिकमिति एकभागापेक्षया। तिन्तिड़ीफलमपक्वतिन्तिड़ीफलम् ॥२९—३०॥

पाशुपतरसे तीक्ष्णभस्मकमिति मृतलौहम्। सूतादिविषपर्य्यन्तं द्रव्यं चित्रक-

तथार्द्धं लवणं पञ्चस्नुह्यर्कैरण्डतिन्तिड़ी ॥ ३५ ॥
अपामार्गाश्वत्थजञ्च क्षारं दद्यात् विचक्षणः ।
हरीतकी यवक्षारं स्वर्जिका हिङ्गुजीरकम् ॥ ३६ ॥
टङ्गनञ्च सूततुल्यं चाम्लयोगेन मर्दयेत् ।
भोजनान्ते प्रयोक्तव्यो गुञ्जाफलप्रमाणतः ॥ ३७ ॥
रसः पाशुपतो नाम सद्यः प्रत्ययकारकः ।
दीपनः पाचनो हृद्यः सद्यो हन्ति विसूचिकाम् ॥ ३८ ॥
तालमूलोरसेनेव उदरामयनाशनः ।
मोचरसेनातीसारं ग्रहणीं तक्रसैन्धवैः ॥ ३९ ॥
सौवर्चलकणाशुण्ठीयुतः शूलं विनाशयेत् ।
अर्शो हन्ति च तक्रेण पिप्पल्या राजयक्ष्मकम् ॥ ४० ॥
वातरोगं निहन्त्याशु शुण्ठीसौवर्चलान्वितः ।
शर्कराधान्ययोगेन पित्तरोगं निहन्त्ययम् ॥ ४१ ॥
पिप्पली क्षौद्रयोगेन श्लेष्मरोगञ्च तत्क्षणात् ।
अतःपरतरो नास्ति धन्वन्तरिमतो रसः ॥४२॥ पाशुपतो रसः
दग्धशङ्खस्य चूर्णं स्यात् तथा लवणपञ्चकम् ।
तिन्तिड़ीक्षारकञ्चैव कटुकत्रयमेव च ॥ ४३ ॥
तथैव हिङ्गुकं ग्राह्यं विषपारदगन्धकम् ।
अपामार्गस्य वह्नेश्च क्वाथैर्निम्बाकजैर्द्रवैः ॥ ४४ ॥
भावयेत् सर्वचूर्णं तदम्लवर्गैर्विशेषतः ।
यावत्तदम्लतां याति गुड़िकामृतरूपिणी ॥ ४५ ॥
सद्यो वह्निकरी चैव भस्मकञ्च नियच्छति ।
भुक्त्वाकण्ठन्तु तस्यान्ते खादेच्च गुड़िकामिमाम् ॥ ४६ ॥

---

क्वाथेन भावयेत् । स्नुह्याद्यश्वगन्धान्तानां क्षारं पुनः पञ्चलवणञ्च टङ्गनादि प्रत्येकं रससममित्यर्थः ॥३१—४२॥

तत्क्षणाज्जारयत्याशु पुनर्भोजनमिच्छति।
हन्ति वातं तथा पित्तं कुष्ठानि विषमज्वरम्॥ ४७॥
गुल्माख्यं पाण्डुरोगञ्च निद्रालस्यमरोचकम्।
शूलञ्च परिणामोत्थं प्रमेहञ्च प्रवाहिकाम्।
वक्त्रस्रावञ्च शोथञ्च दुर्नामानि विशेषतः॥४८॥ वृहच्छङ्खवटी।
माक्षिकं रसगन्धौ च हरितालं मनःशिला।
त्रिवृद्दन्तौ वारिवाहं चित्रकञ्च महौषधम्॥ ४९॥
पिप्पली मरिचं पथ्या यमानी कृष्णजीरकम्।
रामठं कटुकापाणि सैन्धवं साजमोदकम्॥ ५०॥
जातीफलं यवक्षारं समभागं विचूर्णयेत्।
आर्द्रकस्य रसेनैव निर्गुण्ड्याः स्वरसेन च॥ ५१॥
सूर्य्यावर्त्तरसेनैव तुलस्याः स्वरसेन च।
आतपे भावयेद्वैद्यः खल्लपात्रे च निर्मले।
पेषयित्वा वटीं खादेत् गुञ्जाफलसमप्रभाम्॥ ५२॥
भुक्तोत्तरोये बहुभोजनान्ते मुहुर्मुहुर्वाञ्छति भोजनानि।
आमानुबन्धे च चिराग्निमान्द्ये विड्विग्रहे पित्तकफानुबन्धे॥५३॥
शोथोदरे चार्शसि वाप्यजीर्णे शूलप्रदोषप्रभवे ज्वरे च।
शस्तावटी भक्तविपाकसंज्ञा सुखं विपाच्याशु निरस्य कोष्ठम्॥५४॥
भक्तविपाकवटी।
अभ्रकं पारदं ताम्रं गन्धकं मरिचानि च।
समभागमिदं चूर्णं चाङ्गेरीरसमर्दितम्॥ ५५॥

---

वृहच्छङ्खवटिकायां चिञ्चाक्षारं तिन्तिड़ीफलत्वक् भस्म। अत्र अम्लवर्गैर्भावयेत् इत्युक्तं तमम्लवर्गमाह। अम्लवेतसजम्बीरलुङ्गाम्लचणकाम्लकाः। नागरङ्गं तिन्तिड़ीकं चिञ्चापत्रञ्च निम्बुकम्। चाङ्गेरी दाड़िमं लोलं करमर्दस्तथैव च। व्यक्ताम्लोऽयं गणः प्रोक्तो वेतसाम्लस्तदुत्तमः। जम्बीरचणकाम्लश्च सर्वत्रैव प्रशस्यते॥४३—४८॥
भक्तविपाटिकायां वारिवाहं मुस्तकं रामठं हिङ्गु॥४९—५४॥

मर्दिते हि रसे भूयो जयन्तीसिन्धुवारयोः ।
भावनापि च कर्त्तव्या गुञ्जापरिमिता वटी ॥ ५६ ॥
तप्तोदकानुपानेन चतस्रस्तिस्र एव वा ।
वह्निमान्द्ये प्रदातव्या वट्यः पञ्चामृताः शुभाः॥५७॥पञ्चामृतवटी
पलं रसस्य द्विपलं बलेःस्याच्छुल्वायसी चार्द्धपलप्रमाणे ।
संचूर्ण्य सर्वं द्रुतमग्नियोगादेरण्डपत्रेऽथ निवेशनीयम् ॥५८॥
कृत्वाथ तां पर्पटिकां विदध्याल्लौहस्य पात्रे त्ववपूतमस्मिन् ।
जम्बीरजं पक्वरसं पलानां शतं नियोज्याग्निमथाल्पमल्पम् ॥५९
जीर्णे रसे भावितमेतदेतैः सुपञ्चकोलोद्भववारिपूरैः ।
सवेतसाम्लैः शतमत्र योज्यं समं रजष्टङ्कनजं सुभृष्टम् ॥ ६० ॥
विड़ं तदर्द्धं मरिचं समञ्च तत् सप्तवारं चणकाम्लकेन ।
क्रव्यादनामा भवति प्रसिद्धो रसस्तु मन्थानकभैरवोक्तः ॥६१॥
माषद्वयं सैन्धवतक्रपीतमेतत् सुधन्यं खलु भोजनान्ते ।
गुरूणि मांसानि पयांसि पिष्टघृतानि सेव्यानि फलानि चापि६
मात्रातिरिक्तान्यपि सेवितानि यामद्वयाज्जारयति प्रसिद्धः ।
निहन्त्यजीर्णान्यपि षट् प्रवृद्धमग्निं करोति क्रमसेवनेन ॥ ६३ ॥
कार्श्यस्थौल्यनिवर्हणो गरहरः सामार्त्तिनिर्णाशनः
गुल्मप्लीहनिसूदनो ग्रहणिकाविध्वंसनः स्रंसनः ।
वातश्लेष्मनिवर्हणः श्रमहरः शूलार्त्तिशूलापहः
वातग्रन्थिमहोदरापहरणः क्रव्यादनामा रसः॥६४॥ क्रव्यादोरस

---

क्रव्यादरसे बलेर्गन्धकस्य । शुल्वायसी चार्द्धपलप्रमाणे इति ताम्रलौहयोः प्रत्येकमर्द्धपलत्वम् । रसादिलौहान्तानां चतुर्द्रव्याणां यथोक्तभागान् गृहीत्वा लौहपात्रे जम्बीररसं निम्बाकरसं वा शतपलं दत्त्वा तल्लौहपात्रतले अल्पमात्रमग्निं प्रज्वाल्य शनैः शनैः पचेत् । जीर्णे जम्बीररसे सति भावयेत् पञ्चकोलक्वाथैः शतं वेतसक्वाथैर्वा ततः रसादीनां चतुर्णां समभागं टङ्कनं विड़ं विड़लवणं तदर्द्धं टङ्कनार्द्धभागं मरिचसमञ्च तदिति मरिचचूर्णं टङ्कनतुल्यमित्येके अन्ये तु सर्वचूर्णसममिति । एतत् सर्वमेकीकृत्य चणकाम्लैर्भावयेत् ॥५५—६४॥

क्षारद्वयं सूतगन्धौ पञ्चकोलमिदं समम्।
सर्वतुल्या जया देया तदर्द्धं शिग्रुवल्कलम्॥ ६५॥
एतत् सर्वं जयाशिग्रुवह्निमार्कवजैः रसैः।
भावयेत् त्रिदिनं घर्मे ततो लघुपुटे पचेत्॥ ६६॥
भावयेत् सप्तधा चार्द्रद्रवैर्ज्वालानलो भवेत्।
पाचनो दीपनो ह्यग्निरोदरामयनाशनः॥ ६७॥
निष्कोऽस्य मधुना लीढ़ोऽनुपानं गुड़नागरैः।
ज्वराजीर्णमतिसारं ग्रहणीवह्निमार्दवम्।
विषूचिकाश्वासकासमालस्यमरुचिं जयेत्॥६८॥ ज्वालानलोरसः।
अमृतवराटमरिचैर्द्विपञ्चनवभागयोजितैः क्रमशः।
वटिका मुद्गसमाना कफत्रिदोषवह्निमान्द्यहारिणी॥६९॥
अमृतावटी।
अभ्रं पारदगन्धकौ सदरदौ ताम्रञ्च तालं शिला
वङ्गञ्च त्रिफला विषञ्च कुनटीभागास्त्रयो दन्तिनः।
शृङ्गीव्योष यमानी चित्रजलदं द्वे जीरके टङ्कनम्
एलापत्रलवङ्गहिङ्गुकटुकी जातीफलं सैन्धवम्॥ ७०॥
एतान्यार्द्रकचित्रदन्तीसुरसावासारसैर्बिल्वजैः
पत्रोत्थैरपि सप्तधा सुविमले खल्वे विभाव्यान्यतः।
खादेदल्पमितं तथा च सकलव्याधौ प्रयोज्या बुधैः
विड्बन्धे कफजे त्रिदोषजनिते ह्यामानुबन्धेऽपि च॥७१॥
मन्देऽग्नौ विषमज्वरे च सकले शूले त्रिदोषोद्भवे
हन्यात्तानपि भक्तपाकवटिका भूयश्च सामं जयेत्॥७२॥
बृहद्भक्तपाकवटी।

---

ज्वालानलरसे जया विजया साकंयो भृङ्गराजः। भावयेत् त्रिदिनमिति प्रत्येकैस्त्रिदिनं भावयेत्॥६५—६८॥

बृहद्भक्तपाकवटिकायां दरदं हिङ्गुलं तालं हरितालं शिला मनःशिला कुनटी नैपाली मनःशिला अभ्रादि कुनट्यन्तानां प्रत्येकं भागैकं दन्तिनस्त्रयो भागाः...

लवङ्गशुण्ठीमरिचानि भृष्टसौभाग्यचूर्णानि समानि कृत्वा
भाव्यान्यपामार्गहुताशवारा प्रभूतमांसादिकजारणाय॥७

लवङ्गादि।

लवङ्गजातीफलधान्यकुष्ठं जीरद्वयं त्र्यूषणत्रैफलञ्च
एलात्वचं टङ्गवराटमुस्तं वचाजमोदाविड़सैन्धवञ्च।
तदर्द्धकं पारदगन्धमभ्रं लौहञ्च तुल्यं सुविचूर्ण्य सर्वं
तन्नागवल्लीदलतोयपिष्टं वल्लप्रमाणां वटिकाञ्च कृत्वा॥७
प्रातर्विदध्यादपि चोष्णतोयैरियं निहन्याद् ग्रहणीविकारम्
आमानुबन्धं सरुजं प्रवाहं ज्वरं तथा श्लेष्मभवं समूलम्।
कुष्ठाम्लपित्तं प्रबलं समीरं मन्दानलं कोष्ठगतञ्च वातम्
वटी लवाङ्गा हि वसुप्रणीता तथा सवातं विनिहन्ति शोथम्॥

बृहल्लवङ्गादिवटी।

जातीफलं लवङ्गञ्च पिप्पली सिन्धुवारतम्।
शुण्ठी धूस्तूरवीजञ्च दरदं टङ्गनन्तथा॥ ७६॥
समं सर्वं समाहृत्य जम्भाम्भसा विमर्दयेत्।
वल्लमाना वटी कार्य्या चाग्निमान्द्यप्रशान्तये॥ ७७॥

जातीफलादिवटी।

सार्द्धकर्षं रसेन्द्रस्य गन्धकस्य तथैव च।
विषं कर्षत्रयं दद्यात् सर्वतुल्यं मरिचकम्॥ ७८॥
दग्धशङ्खञ्च तत्तुल्यं पञ्चकर्षाणि नागरात्।
स्वर्जिका रामठकणा सिन्धुसौवर्च्चलं विड़म्॥ ७९॥

---

तथा शङ्खादिसैन्धवान्तानां प्रत्येकं भागैकम्। एतत् सर्वमेकीकृत्य आर्द्रका
स्वरसैः सप्तवारं भावयेत्॥६९—७२॥

लवङ्गादिवटिकायां भृष्टसौभाग्यचूर्णानि भृष्टटङ्गनचूर्णानि। हुताशश्चित्रक
बृहल्लवङ्गादिवटिकायां तदर्द्धमिति एकभागपेक्षया अर्द्धभागत्वम्॥७४—
जातीफलादिवटिकायां सिन्धुः सिन्धुवारः भट्टस्तु सैन्धवमित्याह॥७६—

सामुद्रमौद्भिदञ्चैव भावयेत् निम्बुकद्रवैः।
वटी ग्रहण्यम्लपित्तशूलघ्नी वह्निदीपनी।
वह्निमान्द्यकृतान् रोगान् सामदोषं विनाशयेत् ॥ ८० ॥

शङ्खवटी।

रसं गन्धं मृतं ताम्रं मृतमभ्रं फलत्रयम्।
त्रूषणं दन्तीवीजञ्च सर्वं खल्ले विमर्दयेत् ॥ ८१ ॥
द्रोणपुष्पीरसैश्चापि भावयेच्च पुनः पुनः।
अस्य मात्रा प्रदातव्या गुञ्जैका वा त्रिगुञ्जिका ॥८२॥
चिन्तामणिरसो ह्येष चाजीर्णे शस्यते सदा।
आमवातं ज्वरं हन्ति सर्वशूलनिसूदनः ॥८३॥ चिन्तामणिरसः।

रसनिष्कं गन्धनिष्कं निष्कमात्रं प्रदीपनम्।
मानमर्द्धं प्रदातव्यं चुल्लिकालवणं भिषक् ॥ ८४ ॥
मर्दयित्वा प्रदातव्यमथास्य माषमात्रकम्।
अजीर्णे चाग्निमान्द्ये च दातव्यो रसवल्लभः ॥८५॥ प्रदीपनो रसः

रसस्यैकं पलं दत्त्वा नागञ्च गन्धकं पलम्।
क्षारत्रयं पलं देयं लवङ्गं पलपञ्चकम् ॥८६॥
दशमूलीजयाचूर्णं तद्द्रवेण तु भावयेत्।
चित्रकस्य रसेनाथ भृङ्गराजरसेन तु ॥८७॥
शिग्रुमूलद्रवैश्चापि ततो भाण्डे निरुध्य च।
याममात्रं पचेदग्नौ मर्दयेदार्द्रकद्रवैः।
ताम्बूलीपत्रसंयुक्तं खादेत् निष्कमितं सदा ॥८८॥ विजयरसः।

---

शङ्खवटिकायां तत्तुल्यमिति मरिचतुल्यं सिन्धुसैन्धवम् औद्भिदं पांशुलवणं प्रत्येकं पञ्चकर्षाणीत्यर्थः ॥७८—८०॥

प्रदीपनरसे प्रदीपनं विषं मानमर्द्धमित्यत्र पलमर्द्धमिति केचित् पठन्ति ८१—८५॥

माक्षिकं रसगन्धौ च हरितालं मनःशिला ।
गगनं कान्तलौहञ्च सर्व्वमेतच्च कार्षिकम् ॥८६॥
त्रिवृद्दन्ती वारिवाहं चित्रकञ्च महौषधम् ।
पिप्पलीमरिचं पथ्या यमानी कृष्णजीरकम् ॥६०॥
रामठं कटुकापानी सैन्धवं साजमोदकम् ।
जातीफलं यवक्षारं समभागं विचूर्णयेत् ॥६१॥
आर्द्रकस्य रसेनैव निर्गुण्ड्याः स्वरसेन च ।
सूर्य्यावर्त्तरसेनैव ज्योतिष्मत्या रसेन च ॥६२॥
आतपे भावयेत् वैद्यः कृत्वा गुञ्जामितां वटीम् ।
भक्षयेत्तां वटीं प्राज्ञो लवङ्गेन नियोजिताम् ॥६३॥
भक्तोत्तरीये बहुभोजनान्ते आमानुबन्धे चिरवह्निमान्द्ये
विड्विग्रहे वातकफानुबन्धे शोथोदरानाहगदेऽप्यजीर्णे ।
शूले त्रिदोषप्रभवे ज्वरे च शस्ता वटी भक्तविपाकसंज्ञा ।
सुखं विरेच्याशु नरस्य कोष्ठं मुहुर्मुहुर्वाञ्छति भोजनानि ॥६[४]॥

महाभक्तपाकवटी ।

ताम्रं पारदगन्धकं त्रिकटुकं तीक्ष्णञ्च सौवर्च्चलम्
खल्ले मर्द्य दिनं निधाय सिकताकुम्भेषु यामं ततः ।
स्विन्नं तेष्वपि रक्तशाकिनीभवं क्षारं समं भावयेत्
एकीकृत्य च मातुलुङ्गकजलैर्नाम्ना रसो राक्षसः ॥६५॥ रसरा[क्षसः]

त्रिफलामुस्तवेल्लैश्च सितया कणया समम् ।
खरमञ्जरीवीजैश्च लौहं भस्मकनाशनम् ॥६६॥ त्रिफलालौह[म्]

---

विजयदरसे रसादि विजयाचूर्णान्त सर्वमेकीकृत्य यथोक्तरसैः सप्तसप्त[वारान्]
विभावयेत् । ततः पुटपाकविधिना यामैकं पचेत् ॥८६—६४॥

रसराक्षसमाह ताम्रमित्यादि । ताम्रादिसर्वं खल्ले दिनं संमर्द्य वालुकायन्त्रे[...]
ततस्तुल्यं रक्तपुनर्नवाक्षारं विमिश्र्य मातुलुङ्गरसैः सप्ताहं भावयेत् ॥६५॥

त्रिफलालौहमाह त्रिफलेत्यादि । खरमञ्जरीवीजम् अपामार्गवीजं त्रिफ[ला...]
सर्वद्रव्यतुल्यं मृतलौहं देयम् ॥६६॥

अपामार्गस्य पत्रं च मरिचञ्च समं समम्।
अम्लवोलीयुतं पिष्टमञ्जनात् सूचिकां जयेत् ॥९७॥
टङ्गनं रसगन्धौ च समं भागत्रयं विषात्।
कपर्दशङ्खयोस्त्र्यंशं वसुभागं मरिचकम् ॥९८॥
दिनं जम्भाम्भसा पिष्टं वल्लमात्रं प्रदापयेत्।
विसूचीशूलविष्टम्भवह्निमान्द्ये ज्वरे तथा।
अजीर्णे संग्रहण्याञ्च सिद्धश्चाग्निकुमारकः ॥९९॥ अग्निकुमारः।
द्वे क्षारौ रसगन्धकौ सलवणौ क्षारेण तुल्यं विषम्
चिञ्चाशङ्खचतुर्गुणं रसवरैर्निम्बाकजातैः कृतम्।
वारंवारमिदं सुपाकरचितं लौहं क्षिपेत् हिङ्गुकम्
भूयष्टङ्कसमं सुमर्दितमिदं गुञ्जाप्रमाणं भजेत् ॥१००॥
ख्याता शङ्खवटी महाग्निजननी शूलान्तकृत् पाचनी
कासश्वासविनाशिनी क्षयहरी मन्दाग्निसन्दीपनी।
वातव्याधिमहोदरादिशमनी तृष्णामयोच्छेदिनी
सर्वव्याधिनिसूदनी क्रिमिहरी दुष्टामयध्वंसिनी ॥१०१॥ शङ्खवटी

इति अजीर्णाधिकारः।

---

## अथ क्रिमिरोगचिकित्सा।

विड़ङ्गं द्विपलञ्चैव विषचूर्णं तदर्द्धकम्।
लौहचूर्णं तदर्द्धञ्च तदर्द्धं शुद्धपारदम् ॥१॥

---

अग्निकुमारे समभागमिति प्रत्येकं भागैकम्। वसुभागमिति भागाष्टकम् ॥ ९७-९९॥

शङ्खवटिकायां द्वौ क्षाराविति यवक्षारं स्वर्जिकाक्षारञ्च। सलवणौ लवणसहितौ। चिञ्चा चिञ्चाफलत्वग्भस्म वारंवारमिति निम्बुकजैः रसैः सप्तवारं भावयेदित्यर्थः ॥ १००-१०१॥

रसतुल्यं शुद्धगन्धं छागीदुग्धेन पेषयेत्।
छायाशुष्कां वटीं कृत्वा खादेत् षोड़शरक्तिकाम् ॥२॥
धान्यजीरानुपानेन नाम्ना कालानलो रसः।
उदरस्थं क्रिमिं हन्याद् ग्रहण्यर्शः समन्वितम् ॥३॥
अग्निदः शोथशमनो गुल्मप्लीहोदरान् जयेत्।
गहनानन्दनाथेन भाषितो विश्वसम्पदे ॥४॥

क्रिमिकालानलो रसः।

शुद्धसूतं समं गन्धमभ्रं लौहं मनःशिला।
धातकीत्रिफलालोध्रं विड़ङ्गं रजनीद्वयम् ॥५॥
भावयेत् सप्तधा सर्वं शृङ्गवेरभवैः रसैः।
चणमात्रां वटीं कृत्वा त्रिफलारससंयुताम् ॥६॥
भक्षयेत् प्रातरुत्थाय क्रिमिरोगोपशान्तये।
वातिकं पैत्तिकं हन्ति श्लैष्मिकञ्च त्रिदोषजम्।
क्रिमिविनाशनामायं क्रिमिरोगकुलान्तकः ॥७॥

क्रिमिविनाशो रसः।

सूतं गन्धं मृतं लौहं मरिचं विषमेव च।
धातकी त्रिफला शुण्ठी मुस्तकं सरसाञ्जनम् ॥८॥
त्रिकटु मुस्तकं पाठा बालकं विल्वमेव च।
भावयेत् सर्वमेकत्र स्वरसैर्भृङ्गजैस्ततः ॥९॥
वराटिकाप्रमाणेन भक्षणीयो विशेषतः।
क्रिमिरोगविनाशाय रसोऽयं क्रिमिनाशनः ॥१०॥

क्रिमिरोगारिरसः।

---

अजीर्णात् क्रिमिसम्भव इति अजीर्णान्तरं क्रिमिचिकित्सामाह।
क्रिमिकालानलरसे लौहचूर्णं तदर्द्धकमिति विषार्द्धं लौहचूर्णमेव मन्यत्र ॥१
क्रिमिविनाशरसे रजनीद्वयमिति हरिद्राद्वयं शृङ्गवेररसैः आर्द्रकरसैः ॥५

शुद्धसूतं शुद्धगन्धमजमोदा विड़ङ्गकम् ।
विषमुष्टि ब्रह्मबीजं क्रमात् द्विगुणितं भवेत् ॥११॥
चूर्णयेत् मधुना मिश्रं निष्कैकं क्रिमिजित् भवेत् ।
कीटमर्दो रसो नाम मुस्ताक्वाथं पिबेदनु ॥१२॥ कीटमर्दो रसः

क्रिमिघ्नं किंशुकारिष्टबीजं सुरसभस्मकम् ।
वल्लद्वयं चाखुपर्णीरसैः क्रिमिविनाशनम् ॥१३॥ क्रिमिघ्नो रसः ।

क्रमेण वृद्धं रसगन्धकाजमोदा विड़ङ्गं विषमुष्टिका च ।
पलाशबीजञ्च विचूर्ण्यमस्य निष्कप्रमाणं मधुनावलीढ़म् ॥१४॥
पिबेत् कषायं घनजं तदूर्द्धं रसोऽयमुक्तः क्रिमिमुद्गराख्यः ।
क्रिमिं निहन्यात्क्रिमिजांश्च रोगान् सन्दीपयत्यग्निमयं त्रिरात्रात्॥१५॥
क्रिमिमुद्गरो रसः ।

पारदं गन्धकं शुद्धं वङ्गं शङ्खं समं समम् ।
चतुर्णां योजयेत्तुल्यं पथ्याचूर्णं भिषग्वरः ॥१६॥
दण्डयन्त्रेण निर्मथ्य पटोलस्वरसं क्षिपेत् ।
कार्पासबीजसदृशीं वटिकां कुरु यत्नतः ।
त्रिवटीं भक्षयेत् प्रातः शीततोयं पिबेदनु ॥१७॥
केवलं पैत्तिके योज्यः कदाचित् वातपैत्तिके ।
श्रीमद्गहननाथोक्तः क्रिमिधूलिजलप्लवः ॥१८॥
क्रिमिधूलिजलप्लवो रसः ।

विशुद्धं पारदं गन्धं वङ्गं तालं वराटकम् ।
मनःशिला कृष्णकाचं सोमराजी विड़ङ्गकम् ॥ १९ ॥

---

कीटमर्दरसे ब्रह्मबीजमिति भार्गीबीजम् ॥८–१२॥
क्रिमिघ्नरसे क्रिमिघ्नं विड़ङ्गं किंशुकः पलाशस्तस्य बीजं ग्राह्यम् अरिष्टबीजं निम्बबीजम् ॥१३॥
क्रिमिधूलिजलप्लवरसे पथ्याचूर्णं हरीतकीचूर्णम् ॥१४—१८॥
लाक्षावटिकायां श्रीवासः नवनीतखोटी, श्वेतापराजिताशिफा श्वेतापराजिता-

दन्तीवीजञ्च जैपालं शिला टङ्कनचित्रकम् ।
कर्षमात्रन्तु प्रत्येकं वज्रीक्षीरेण मर्दयेत् ॥ २० ॥
कलायसदृशीं कृत्वा वटिकां भक्षयेत् ततः ।
क्रिमिकाष्ठानलो नाम रसोऽयं परिनिर्मितः ।
श्लैष्मिके श्लेष्मपित्ते च श्लेष्मवाते च शस्यते॥२१॥क्रिमिकाष्ठानलोरसः
लाक्षाभल्लातश्रीवास श्वेतापराजिताशिफा ।
अर्जुनस्य फलं पुष्पं विड़ङ्गमथ गुग्गुलुः ॥ २२ ॥
एभिः कीटाश्च शाम्यन्ते स्थापितैश्च गृहे सदा ।
भुजङ्गा मूषिका दंशाः सङ्घनामा मतङ्गजाः ।
दूरादेव पलायन्ते क्रिम्नकीटाश्च ये स्मृताः ॥२३॥ लाक्षादिवटी।
शुद्धसूतमिन्द्रयवमजमोदा मनःशिला ।
पलाशवीजं गन्धञ्च देवदान्या द्रवैर्दिनम् ॥ २४ ॥
संमर्द्य भक्षयेन्नित्यं शालपर्णीरसैः सह ।
सितायुक्तं पिबेच्चानु क्रिमिपातो भवत्यलम्॥२५॥क्रिमिहररसः।
रसं गन्धञ्च मरिचं जातीफललवङ्गकम् ।
कणा तालं शुण्ठी टङ्गं प्रत्येकं भागसम्मितम् ॥ २६ ॥
सर्वचूर्णसमं लौहं विड़ङ्गं सर्वतुल्यकम् ।
लौहं विड़ङ्गकं नाम कोष्ठस्थक्रिमिनाशनम् ॥ २७ ॥
दुर्नाममरुचिञ्चैव मन्दाग्निञ्च विसूचिकाम् ।
शोथं शूलं ज्वरं हिक्कां श्वासं कासं विनाशयेत् ॥२८॥विड़ङ्गलौहम्।

इति रसेन्द्रसारसंग्रहे क्रिमिचिकित्सा ।

---

मूलम्, अर्जुनस्य फलं पुष्पमिति अर्जुनस्य फलं पुष्पञ्चेत्यर्थः ॥१९—२३॥

क्रिमिहररसे देवदानी हस्तिघोषकफलम् ॥२४॥२५॥

विड़ङ्गलौहे लौहञ्च तत्सममिति रसादितालकान्तानां तुल्यं लौहं तथा मिलितसर्वचूर्णसमं विड़ङ्गचूर्णम् ॥२६—२८॥

इति क्रिमिरोगचिकित्सा।

## अथ पाण्डुरोगचिकित्सा ।

लौहचूर्णं निशायुग्मं त्रिफला रोहिणीयुतम् ।
प्रलिह्यात् मधुसर्पिर्भ्यां कामलापाण्डुशान्तये॥१॥ निशालौहम् ।
धात्री लौहरजः व्योष निशाक्षौद्राज्यशर्करा: ।
भक्षणात् विनिहन्त्याशु कामलाञ्च हलीमकम्॥२॥ धात्रीलौहम्
शुद्धसूतं तथा गन्धं सृततास्राभ्रगुग्गुलु ।
नैपालवीजं तुल्यांशं घृतेन वटकीकृतम् ॥ ३ ॥
भक्षयेद्वदरास्थ्याभं शोथपाण्डुप्रशान्तये ।
पञ्चाननवटी ख्याता पाण्डुरोगकुलान्तिका ॥४॥ पञ्चाननवटी ।
हिङ्गुलसम्भवं सूतं गन्धकं काश्मीरोद्भवम् ।
लौहं ताम्रं वराटञ्च तुल्यं हिङ्गुफलत्रिकम् ॥ ५ ॥
स्नुहीक्षीरं यवक्षारं जैपालं दन्तिकं त्रिवृत् ।
प्रत्येकं शाणभागन्तु छागीक्षीरेण पेषयेत् ॥ ६ ॥
चतुर्गुञ्जां वटीं खादेत् वारिणा मधुना सह ।
प्राणवल्लभनामायं गहनानन्दभाषितः ॥ ७ ॥
श्लेष्मदोषं समालोक्य युक्त्या च त्रुटिवर्द्धनम् ।
निहन्ति कामलां पाण्डुमानाहं श्लीपदं तथा ॥ ८ ॥
गलगण्डं गण्डमालां व्रणानि च हलीमकम् ।
शोथं शूलमूरुस्तम्भं संग्रहग्रहणीं जयेत् ॥ ९ ॥
वान्तिं मूर्च्छां भ्रमिं दाहं कासं श्वासं गलग्रहम् ।

---

पुरीषक्रिमितः पाण्डुरोगस्य प्रादुर्भावात् क्रिम्यनन्तरं पाण्डुरोगचिकित्सामाह, तत्र निशालौहे निशायुगं हरिद्राद्वयम् अत्र सर्वद्रव्यसमं लौहं प्रदेयं लौहप्राधान्यात् पाण्डुरोगहरत्वाच्च लौहाभावे मण्डूरं प्रदेयमित्युपदिशन्ति वृद्धाः ॥१॥
पञ्चाननवटिकामाह शुद्धसूतमित्यादि । अत्र सर्वसमं जैपालचूर्णम् ॥२—४॥

असाध्यं सन्निपातञ्च जीर्णज्वरमरोचकम् ॥ १० ॥
वातरक्तं तथा शोषं कण्डूं विस्फोटकापचीम् ।
नातःपरतरं किञ्चित् कामलार्त्तिरुजापहम् ॥ ११ ॥

प्राणवल्लभोरसः ।

पलं सूतं पलं गन्धं पथ्याचित्रकयोः पलम् ।
मुस्तैलापत्रकाणाञ्च प्रति सार्द्धपलं क्षिपेत् ॥ १२ ॥
त्र्यूषणं पिप्पलीमूलं विषञ्चापि पलं न्यसेत् ।
नागकेशरकं कर्षमेरण्डस्य पलं तथा ॥ १३ ॥
पुरातनगुड़ेनैव तुल्येनैव विमिश्रयेत् ।
मर्दयेत् कनकद्रावैर्भावयेच्च घृतान्विताम् ॥ १४ ॥
वटिकां वदरास्थ्याभां कारयेत् भक्षयेत् निशि ।
पाण्डुरोगहरः सोऽयं रसः कामेश्वरः स्वयम् ॥ १५ ॥

कामेश्वररसः ।

पलं लौहस्य किट्टस्य पलं गव्यस्य सर्पिषः ।
सितायाश्च पलञ्चैकं क्षौद्रस्यापि पलं तथा ॥ १६ ॥
तोलैकं कान्तलौहस्य त्रिकत्रयसुभावितम् ।
ततः पात्रे विधातव्यं लौहे च मृण्मये तथा ॥ १७ ॥
हविषा भावितञ्चापि रौद्रे च शिशिरे तथा ।
भोजनादौ तथा मध्ये चान्ते चापि प्रदापयेत् ॥ १८ ॥
अनुपानं प्रदातव्यं बुद्ध्वा दोषबलाबलम् ।
कामलां पाण्डुरोगञ्च सुदारुणहलीमकम् ।

---

प्राणवल्लभरसे काश्मीरोद्भवं कुङ्कुमं, ताम्रमित्यत्र टङ्कणमिति केचित् पठन्ति ॥ ५—११॥

कामेश्वररसे वह्निश्चित्रकः पत्रं तेजपत्रं तुल्येनेति सर्वचूर्णतुल्येन, कनकद्रवैः धूस्तुररसैः ॥१२—१५॥

निहन्ति नात्र सन्देहो भास्करस्तिमिरं यथा ॥ १९ ॥

त्रिकत्रयाद्यं लौहम् ।

विड़ङ्गमुस्तत्रिफलादेवदारुषडूषणैः ।
तुल्यमात्रमयश्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ॥ २० ॥
तैरक्षमात्रां गुड़िकां कृत्वा खादेत् दिने दिने ।
कामलापाण्डुरोगार्त्तः सुखमाप्यतेऽचिरात् ॥ २१ ॥

विड़ङ्गादिलौहम् ।

विड़ङ्गत्रिफलाव्योषं शुद्धलौहन्तु तत्समम् ।
पुरातनगुड़ेनात्र लेहयेत् दिनसप्तकम् ।
श्वयथुं नाशयेत् शीघ्रं पाण्डुरोगं हलीमकम् ॥ २२ ॥

विड़ङ्गादिलौहम् ।

मानश्चैकं ततः सूतं षड़भ्रं वसुलौहकम् ।
गन्धकं त्रिफलाव्योषं चूर्णं मोचरसस्य च ॥ २३ ॥
मूषली चामृतासत्वं प्रत्येकं पञ्चभागिकम् ।
भावयेत् सर्वमेकत्र त्रिफलानां कषायके ॥ २४ ॥
भावना विंशतिर्देया दशरात्रं सुभावना ।
शिग्रुचित्रकमूलाभ्यां मष्टधा च पृथक् पृथक् ॥ २५ ॥
त्रैलोक्यसुन्दरो नाम रसो निष्कमितो हितः ।

---

त्रिकत्रयादिलौहे लौहं किट्टस्य मण्डूरस्य। अत्र शीताचीद्रे प्रक्षेपणीये ॥ १६—१९॥

विड़ङ्गादिलौहे तुल्यमात्रमयश्चूर्णमिति विड़ङ्गादीनां चूर्णसमं लौहचूर्णमित्यर्थः । अत्र लौहस्य प्राधान्यात् तदपेक्षयैव गोमूत्रस्य अष्टगुणत्वम् । पक्का अवतारिते विड़ङ्गादिचूर्णानि प्रक्षेप्याणि । अन्ये तु विड़ङ्गादिचूर्णैः सह लौहचूर्णस्य पाकः । गोमूत्रस्य अष्टगुणत्वं सर्वचूर्णापेक्षयैव, अत्र द्रवद्वैगुण्यं न व्यवहरन्ति वृद्धाः । पाकश्चात्र मुद्रापाकेन इत्याहुः अक्षमात्रां गुड़िकां कुर्य्यात् न तु तत् प्रमाणं खादेत् । मात्रा च देहाग्निबलापेक्षिणी एवं सर्वत्र मण्डूरपाकादौ ॥२०॥२१॥

सितया च समं क्षौद्रैः शोथपाण्डुक्षयापहः।
ज्वरातिसारसंयुक्तसर्वोपद्रवनाशनः ॥२६॥ त्रैलोक्यसुन्दरो रसः।

दार्वी सत्रिफलाव्योषविड़ङ्गान्ययसो रजः।
मधुसर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान् ॥ २७ ॥
दार्व्यादिलौहम्।

शालियष्टिकगोधूमयवमुद्गादयो हिताः।
रसाश्च जाङ्गलभवा मधुराः पाण्डुरोगिणाम्।
पाण्डुरोगोदिता योगा घ्नन्ति ते कामलामपि ॥ २८ ॥
सूतकं गन्धकं लौहमभ्रकञ्च पलं पलम्।
वराटिका शङ्खकञ्च प्रत्येकार्द्धपलं हरेत् ॥ २९ ॥
गोक्षुरवीजचूर्णञ्च पलैकं तत्र दीयते।
सर्वमेकीकृतं चूर्णं वाष्पयन्त्रे विभावयेत् ॥ ३० ॥
पटोलं पर्पटी भार्गी विदारी शतपुष्पिका।
कुण्डली दन्तीवासा च काकमाचीन्द्रवारुणी ॥ ३१ ॥
वर्षाभूकेशराजश्च शालिञ्च द्रोणपुष्पिका।
प्रत्येकार्द्धपलैर्द्रावैर्भावयित्वा वटीं कुरु ॥ ३२ ॥
चतुर्दशवटीं खादेत् छागीदुग्धानुपानतः।
गहनानन्दनाथोक्तश्चन्द्रसूर्य्यात्मको रसः ॥ ३३ ॥
हलीमकं निहन्त्याशु पाण्डुरोगं सकामलम्।
जीर्णज्वरं सविषममम्लपित्तमरोचकम् ॥ ३४ ॥
शूलं प्लीहोदरानाह मष्ठीलां गुल्मविद्रधिम्।
शोथं मन्दानलं हिक्कां कासं श्वासं वमिं भ्रमिम् ॥ ३५ ॥

---

त्रैलोक्यसुन्दररसे अमृतासत्वं गुड़ूचीसत्वम् ॥२३—२६॥
दार्व्यादिलौहे दार्वी दार्व्यास्त्वक्, लौहचूर्णं सर्वसमम् ॥२७॥
पाण्डुरोगचिकित्सां कामलायामपि अतिदिशति पाण्डुरोगेत्यादि ॥ २८ ॥

भगन्दरोपदंशञ्च दद्रुकण्डूव्रणानि च ।
दाहं तृष्णामूरुस्तम्भमामवातं कटीग्रहम् ॥ ३६ ॥
युक्तोमण्डेन मद्येन मुद्गयूषेण वारिणा ।
गुडूची त्रिफलावासा क्वाथनीरेण वा क्वचित् ॥ ३७ ॥
चन्द्रसूर्य्यात्मको रसः ।

रसं गन्धं मृतं ताम्रं जयपालञ्च गुग्गुलु ।
समांशमाज्यसंयुक्तां गुड़िकां कारयेद्भिषक् ॥ ३८ ॥
एकैकां भक्षयेन्नित्यं पाण्डुशोथप्रशान्तये ।
शीतलञ्च जलञ्चाम्लं वर्जयेत् पाण्डुसूदने॥३९॥ पाण्डुसूदनो रसः

पञ्चकोलं समरिचं देवदारु फलत्रिकम् ।
विड़ङ्गमुस्तायुक्ताश्च भागास्त्रिपलसम्मिताः ॥४०॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः ।
पक्का चाष्टगुणे मूत्रे घनीभूते तदुद्धरेत् ॥४१॥
ततोऽक्षमात्रान् वटकान् पिबेत् तक्रेण तक्रभुक् ।
पाण्डुरोगं जयत्याशु मन्दाग्नित्वमरोचकम् ॥४२॥
अर्शांसि ग्रहणीदोषमूरुस्तम्भमथापि वा ।
क्रिमिं प्लीहानमानाहं गलरोगञ्च नाशयेत् ।
मण्डूरो वज्रनामायं रोगानीकप्रणाशनः ॥ ४३ ॥
मण्डूरवज्रवटकः ।

---

चन्द्रसूर्य्यरसे कुण्डली गुड़ूची, वर्षाभूः पुनर्नवा ॥२९—३७॥

पाण्डुसूदने रसादि गुग्गुल्वन्तं पञ्चद्रव्यं समभागं घृतं सर्वसम गुड़िका तु पुरुषोचिता ज्ञेया ॥३८॥३९॥

मण्डूरवज्रवटके अत्र लौहकिट्टस्य प्राधान्यात् तदपेक्षयैव गोमूत्रस्य अष्टगुणत्वम् आसन्नपाके पञ्चकोलादिचूर्णं प्रक्षेप्यम् ॥४०—४३॥

पारदं गन्धकं लौहं विषमभ्रकमेव च ।
समांशं मरिचस्याष्टौ टङ्गनञ्च चतुर्गुणम् ॥४४॥
भृङ्गराजरसैः सप्त भावना चाम्लवेतसैः ।
गुञ्जाद्वयं पर्णखण्डे खादेत् सायं निहन्ति च ॥४५॥
पाण्डुतामरुचिञ्चैव मन्दाग्निं ग्रहणीं ज्वरम् ।
वातश्लेष्मभवान् रोगान् जयेदचिरसेवनात् ॥४६॥ लघ्वानन्दरसः

त्रिकटु त्रिफलावह्निविड़ङ्गं लौहमभ्रकम् ।
एतानि समभागानि घृतेन वटिकां कुरु ॥४७॥
कामलां पाण्डुरोगञ्च हृद्रोगं शोथमेव च ।
भगन्दरं कोष्ठक्रिमिं मन्दानलमरोचकम् ॥४८॥
तान् सर्वान् नाशयेदाशु बलवर्णाग्निवर्द्धनः ।
सम्मोहलौहनामायं पाण्डुरोगे च पूजितः ॥ ४९ ॥
सम्मोहलौहः ।

स्विन्नमष्टगुणे मूत्रे लौहकिट्टं सुशोधितम् ।
पाकान्ते त्र्यूषणं वह्निवरादार्वीं सुरद्रुमान् ॥५०॥
विड़ङ्गवीजचूर्णञ्च मुस्तं किट्टसमं क्षिपेत् ।
प्रातःकर्षं भजेदस्य जीर्णे तक्रौदनं भजेत् ॥५१॥
हलीमकं पाण्डुरोगमर्शांसि श्वयथुं तथा ।
ऊरुस्तम्भं जयेदेतत् कामलां कुम्भकामलाम् ॥५२॥
त्र्यूषणादिमण्डूरम् ।

त्रिफलाया गुजूच्या वा दार्व्या निम्बस्य वा रसः ।
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः ॥५३॥

इति पाण्डुरोगाधिकारः ।

## अथ रक्तपित्तचिकित्सा।

मृतार्कं मृतवङ्गञ्च मृताभ्रञ्च समाक्षिकम्।
अमृताम्बरसैर्भाव्य त्रिसप्तकपुटे पचेत् ॥१॥
वासा चोरविदारीभ्यां चतुर्गुञ्जाप्रमाणतः।
भक्षणाद्विनिहन्त्याशु रक्तपित्तं सुदारुणम् ॥२॥ अर्केश्वरः।
सूतं गन्धं माक्षिकञ्चैव लौहं सर्वं घृष्ट्वा त्रैफलेनोदकेन।
लौहे पात्रे गोमयेऽग्नौ पुटित्वा रात्रौ दद्याद्रक्तपित्तप्रशान्त्यै ॥३॥
सुधानिधिरसः।

आमला पिप्पलीचूर्णं तुल्यया सितया सह।
रक्तपित्तहरं लौहं योगराजमिदं स्मृतम् ॥४॥
वृष्याग्निदीपनं बल्यमम्लपित्तविनाशनम्।
पित्तोत्थानपि वातोत्थान् निहन्ति विविधान् गदान् ॥५॥
आमलाद्यं लौहम्।

शतमूली सिता धान्यनागकेशरचन्दनैः।
त्रिकत्रयतिलैर्युक्तं लौहं सर्वगदापहम्।
तृष्णादाहज्वरच्छर्दिरक्तपित्तविनाशनम् ॥६॥ शतमूल्याद्यं लौहम्
रक्तपित्ते पिबेत् व्योमसहितं पर्पटीं रसम्।
वासा द्राक्षाभयानाञ्च क्वाथं वा शर्करान्वितम् ॥७॥

---

पाण्डुरोगवत् रक्तपित्तस्यापि पित्तरक्तकारणत्वाव्यभिचारात् पाण्डुरोगानन्तरं रक्तपित्तचिकित्सामाह। तत्र अर्केश्वररसे अर्कस्ताम्रम् अमृता गुडूची, माक्षिकं स्वर्णमाक्षिकम् ॥ १ ॥ २ ॥

सुधानिधिरसे त्रैफलोदकेन त्रिफलाक्वाथेन। भावना चात्र लौहपात्रे गोमयाग्निना कर्त्तव्या ॥ ३ ॥

आमलादिलौहे लौहमिति सर्वचूर्णसमं लौहम्। शतमूल्यादि लौहे सिता शर्करा लौहमिति सर्वचूर्णसमम् ॥ ४ ॥ ५ ॥

योगवाहिरसान् सर्वान् रक्तपित्ते प्रयोजयेत्।
मृताभ्रं मुण्डतीक्ष्णञ्च माक्षिकं रसतालकम् ॥८॥
गन्धकञ्च भवेत्तुल्यं यष्टिद्राक्षामृताद्रवैः।
दिनैकं मर्दयेत् खल्ले सिताक्षौद्रसमन्वितम् ॥९॥
माषमात्रं निहन्त्याशु रक्तपित्तं सुदारुणम्।
ज्वरं दाहं क्षतक्षीणं तृष्णाशोषमरोचकम् ॥१०॥

रक्तपित्तान्तको रसः।

रसस्य द्विगुणं गन्धं माक्षिकञ्च शिलाजतु।
चन्दनं गुड़ूची द्राक्षा मधु पुष्पञ्च धान्यकम् ॥११॥
कुटजस्य त्वचं वीजं धातकी निम्बपत्रकम्।
यष्टिमधु समायुक्तं मधुशर्करयान्वितम् ॥१२॥
विधिना मर्दयित्वा तु कर्षमात्रन्तु भक्षयेत्।
धारोष्णपयसा युक्तं प्रातरेव समुत्थितः ॥१३॥
पित्तं तथाम्लपित्तञ्च रक्तपित्तं विशेषतः।
निहन्ति सर्वदोषञ्च ज्वरं सर्वं न संशयः।
रसामृतरसो नाम गहनानन्दभाषितः ॥१४॥ रसामृतरसः

कूष्माण्डकात् पलशतं सुस्विन्नं निष्कुलीकृतम्।
पचेत्तप्ते घृतप्रस्थे शनैस्ताम्रमये दृढ़े ॥१५॥
यदा मधुनिभः पाकस्तदा खण्डशतं न्यसेत्।
पिप्पलीशृङ्गवेराभ्यां द्वे पले जीरकस्य च ॥१६॥
त्वगेलापत्रमरिचधान्यकानां पलार्द्धकम्।
न्यसेत् चूर्णीकृतं तत्र दर्व्या संघट्टयेत् पुनः ॥१७॥
तत् पक्वं स्थापयेत् भाण्डे दत्त्वा क्षौद्रं घृतार्द्धकम्।
तद्यथाग्निबलं खादेद्रक्तपित्तक्षतक्षयी ॥१८॥ खण्डकूष्माण्डकः

---

रक्तपित्तान्तकरसे रसतालकं हरितालमेव ॥९-१०॥

शर्करातिलसंयुक्तं त्रिकत्रययुतन्त्वयः ।
रक्तपित्तं निहन्त्याशु चाम्लपित्तहरं परम् ॥१९॥

शर्कराद्यं लौहम् ।

लौहाच्चतुर्गुणं चीरमाज्यं द्विगुणमुत्तमम् ।
चूर्णं पादन्तु वैड़ङ्गं दद्यात् मधु सिते समे ॥२०॥
ताम्रपात्रे दृढ़े पक्का स्थापयेत् घृतभाजने ।
माषकादिक्रमेणैव भच्चयेत् विधिपूर्वकम् ॥२१॥
अनुपानं प्रयुञ्जीत नारिकेलोदकादिकम् ।
रक्तपित्तं जयेत्तीव्रमम्लपित्तचतचयम् ।
प्रहृष्टकान्तिजननमायुष्यमुत्तमोत्तमम् ॥ २२ ॥

समशर्करलौहम् ।

मृतं वा मूर्च्छितं सूतं कार्पासकुसुमद्रवैः ।
मर्दयेत् दिनमेकन्तु तेन पूर्य्या वराटिका ॥२३॥
निरुध्य चान्धमूषायां भाण्डे रुद्धा पुटे पचेत् ।
उद्धृत्य चूर्णयेत् श्लक्ष्णं मरिचैर्द्विगुणैः सह ॥२४॥
गुञ्जामात्रं घृतेनैव भच्चयेत् प्रातरुत्थितः ।
उड़ूम्बरं घृतञ्चैव अनुपानं प्रयोजयेत् ।

---

कूष्माण्डखण्डे निष्कुलीकृतमिति निस्त्वगस्थिकृतं किञ्चिज्जलं दत्त्वा उत्स्विद्य ...ौमे निवेश्य पीड़येत् ततः आतपे मनाक् संशोष्य पिष्टा च पलशतं गृहीत्वा ...क्तव्यम् । पिप्पलीशृङ्गवेराभ्यां द्वे पले जीरकस्य चेति कणाशुण्ठ्योः प्रत्येकं ...लद्वयं जीरकस्य च द्वे पले । अत्र खण्डामलकमानानुसारात् कूष्माण्डकद्रवात् ...ात्रम् । पाकाय दातव्यं यावान् वात्र रसो भवेदिति वक्तव्यम् । पाकश्चात्र ...द्रया । आसन्नपाके पिप्पल्यादिचूर्णं प्रक्षिप्य सुशीते च मधु प्रक्षेपणीयम् ॥११ – १८॥

शर्करादिलौहे लौहं सर्वचूर्णसमम् ॥१९॥

समशर्करलौहे मधुसिते चेति प्रत्येकं लौहसमम् । मुद्रया पाके जाते लौहात् ...दिकं विड़ङ्गनिकरचूर्णं प्रक्षिप्य शीते मधु देयम् ॥२० – २२॥

कपर्दको रसो नाम रक्तपित्तविनाशनः ॥२५॥ कपर्दको रसः

नीलोत्पलसिताक्षौद्रसंयुक्तं पद्मकेशरम् ।
तण्डुलोदकपानेन रक्तपित्तं नियच्छति ॥२६॥

इति रक्तपित्तचिकित्सा ।

---

## अथ यक्ष्माधिकारः ।

राम्नाश्वगन्धा कर्पूरभेकपर्णी शिलाह्वयैः ।
त्रिकत्रयसमायुक्तैः लौहं यक्ष्मान्तकन्मतम् ॥१॥
सर्वोपद्रवसंयुक्तमपि वैद्यविवर्जितम् ।
हन्ति कासं स्वराघातं राजयक्ष्मक्षतक्षयम् ।
बलवर्णाग्निपुष्टीनां वर्द्धनं दोषनाशनम् ॥२॥ राम्नादिलौह

रसभस्म त्रयो भागा भागैकं हेमभस्मकम् ।
मृततारस्य भागैकं शिलागन्धकतालकम् ॥३॥
प्रतिभागद्वयं शुद्धमेकीकृत्य विचूर्णयेत् ।
वराटिका तेन पूर्य्या चाजाक्षीरेण टङ्गनम् ॥४॥
पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तां निरोधयेत् ।
शुष्कं गजपुटे पाच्यं चूर्णयेत् स्वाङ्गशीतलम् ॥५॥
दशपिप्पलिकैः क्षौद्रैर्मरिचैर्वा घृतान्वितैः ।
गुञ्जाचतुष्टयञ्चास्य क्षयरोग प्रशान्तये ॥ ६ ॥
सघृतैर्दापयेद्वाथ वातश्लेष्मभवे क्षये ।
रसो राजमृगाङ्कोऽयं नानारोगनिसूदनः॥७॥राजमृगाङ्को रस

---

कपर्दकरसे तेन पूर्य्यां वराटिकेति तेनौषधेन वराटिका पूरणीया ॥२३-
यक्ष्मरूपेषु पित्तरक्तस्य चागम इति रक्तपित्तानन्तरं राजयक्ष्मचिकित्सितमु
रस्नादिलौहे भेकपर्णी थानकुनी ; शिला शिलाजतु, मनःशिलेति केचित् । रा
दीनां चूर्णसमं लौहम् ॥ १ ॥ २ ॥

स्यात् रसेन समं हेम मौक्तिकं द्विगुणं भवेत्।
गन्धकञ्च समं तेन रसतुल्यन्तु टङ्गनम्॥ ८॥
तत्सर्वं गोलकं कृत्वा काञ्जिकेन च पेषयेत्।
भाण्डे लवणपूर्णेऽथ पचेद्यामचतुष्टयम्॥ ९॥
मृगाङ्कसंज्ञको ज्ञेयो राजयक्ष्मनिकृन्तनः।
गुञ्जाचतुष्टयं चास्य मरिचैः सह भक्षयेत्॥ १०॥
पिप्पलीदशकैर्वापि मधुना सह लेहयेत्।
पथ्यन्तु लघुभिर्मांसैः प्रयोगेऽस्मिन् प्रयोजयेत्॥ ११॥
व्यञ्जनैर्घृतपक्वैश्च संस्कृतैर्ह्यविदाहिभिः।
वृन्ताकविल्वतैलानि कारवेल्लञ्च वर्जयेत्।
स्त्रियं परिहरेत् दूरं कोपञ्चापि विवर्जयेत्॥१२॥ मृगाङ्कः।
रसं वज्रं हेम तारं नागं लौहञ्च ताम्रकम्।
तुल्यांशं मरिचं देयं मुक्ताविद्रुममाक्षिकम्॥१३॥
शङ्खं तुत्थञ्च तुल्यांशं सप्ताहं चित्रकद्रवैः।
मर्द्दयित्वा विचूर्ण्याथ तेन पूर्य्या वराटिका॥१४॥
टङ्गनं रविदुग्धेन मुखं लिप्त्वा निरोधयेत्।
मृद्भाण्डे तां निरुध्याथ सम्यग्गजपुटे पचेत्॥१५॥
आदाय चूर्णयेत् सर्वं निर्गुण्ड्या सप्त भावयेत्।
आर्द्रकस्य रसैः सप्तचित्रकस्य च विंशतिः॥१६॥
द्रवैर्भाव्यं ततः शोष्यं देयं गुञ्जाचतुष्टयम्।
क्षयरोगं निहन्त्याशु साध्यासाध्यं न संशयः॥१७॥
योजयेत् पिप्पलीक्षौद्रैः सघृतैर्मरिचैस्तथा।
महारोगाष्टके कासे श्वासे चैवातिसारके।
पोट्टलीरत्नगर्भोऽयं सर्वरोगकुलान्तकः॥१८॥ रत्नगर्भपोट्टलीरसः।

---

रत्नगर्भपट्टोलिकायां वज्रं हीरकं तदभावे वैक्रान्तम्, नागं सीसकम्।

रसस्य भस्मना हेम पादांशेन प्रकल्पयेत् ।
द्विगुणं गन्धकं दत्त्वा मर्दयेत् चित्रकाम्बुना ॥१९॥
पूर्य्या वराटिका तेन टङ्गनेन निरुध्य च ।
भाण्डे चूर्णप्रलिप्तेऽथ क्षिप्त्वा रुद्ध्वा च मृण्मये ॥२०॥
शोषयित्वा गजपुटे पुटेत्तु चापराह्णिके ।
स्वाङ्गशीतं समुद्धृत्य चूर्णयित्वा तु विन्यसेत् ॥२१॥
एष लोकेश्वरो नाम वीर्य्यपुष्टिविवर्द्धनः ।
गुञ्जाचतुष्टयं चास्य पिप्पलीमधुसंयुतम् ॥२२॥
मरिचैर्घृतयुक्तैश्च भक्षयेद्दिवसत्रयम् ।
अङ्गकार्श्येऽग्निमान्द्ये च कासे पित्ते क्षयेऽपि च ॥२३॥
लवणं वर्जयेत्तत्र साज्यं दधि च योजयेत् ।
एकविंशदिनं यावत् सघृतं मरिचं पिबेत् ।
पथ्यं मृगाङ्कवद्देयं शयितोत्तानपादतः ॥२४॥
ये शुष्का विषमाशनैः क्षयरुजा व्याप्ताश्च येऽष्ठीलया
पाण्डुत्वेन हताश्च वैद्यविधिना ये चाधिना दुर्भगाः ।
ये तप्ता विविधैर्ज्वरैः श्रममदोन्मादैः प्रमादं गताः
ते सर्वे विगतामया हतरुजाः स्युः पोट्टलीसेवनात् ॥२५॥

लोकेश्वरपोट्टलीरसः ।

रसस्य तुर्य्यभागेन हेमभस्म प्रयोजयेत् ।
मनःशिला गन्धकञ्च तुल्यं माक्षिकतालकम् ॥२६॥
विषं टङ्गनकं सर्वं रसतुल्यं प्रदापयेत् ।

---

तुल्यांशं मरिचमिति मरिचचूर्णमेकभागसमम्। आदाय चूर्णयेत् सुवर्णं वराटिकया सहैव ॥३-१८॥

लोकेश्वरपोट्टलिकायां द्विगुणं गन्धकमिति रसात् द्विगुणं गन्धकमित्यर्थः १९—२५ ॥

मर्द्दयेत् सर्वमेकत्र खल्लपात्रे च निर्मले ॥२७॥
जयन्तीभृङ्गराजोत्थैः पाठाया वासकस्य च।
अगस्तिलाङ्गलाग्नीनां स्वरसैश्च पृथक् पृथक् ॥२८॥
भावयित्वा विशोष्याथ पुनश्चार्द्रकवारिणा।
सप्तधा भावयित्वा च रसः कनकसुन्दरः ॥२९॥
गुञ्जाद्वयं त्रयं वास्य राजयक्ष्मप्रशान्तये।
मधुना पिप्पलीभिर्वा मरिचैर्वा घृतान्वितम् ॥३०॥
सन्निपाते प्रदातव्यमार्द्रकस्य रसेन वै।
यवक्षाररजोभिर्वा गुल्मिने शूलरोगिणे ॥३१॥
अम्लवर्ज्यं चरेत् पथ्यं बल्यं हृद्यं रसायनम्।
वर्जयेल्लवणं हिङ्गु तक्रं दधि विदाहि यत् ॥३२॥ कनकसुन्दरो रसः

रसभस्मत्रयो भागा भागैकं हेमभस्मकम्।
मृतताम्रस्य भागैकं तोलैकं गन्धकस्य च ॥३३॥
मर्दयेच्चित्रकद्रावैर्द्दिनयामान्ते समुद्धरेत्।
पूर्य्या वराटिका तेन टङ्कनेन विलेपयेत् ॥३४॥
वराटीं पूरयेद्भाण्डे रुद्ध्वा गजपुटे पचेत्।
विचूर्णयेत् स्वाङ्गशीते पोट्टलीं हेमगर्भिकाम्।
मृगाङ्कवत् चतुर्गुञ्जाभक्षणाद्राजयक्ष्मनुत् ॥३५॥ हेमगर्भपोट्टली।

रसं गन्धञ्च तुल्यांशं द्वौ भागौ टङ्कनस्य च।
मौक्तिकं विद्रुमं शङ्खभस्म देयं समांशिकम् ॥३६॥
हेमभस्मार्द्धभागञ्च सर्वं खल्ले विमर्दयेत्।
निम्बुद्रवेण संपिष्य पिण्डिकां कारयेत् ततः ॥३७॥
पश्चाद् गजपुटं दत्त्वा सुशीतञ्च समुद्धरेत्।
हेमभस्मसमं तीक्ष्णं तीक्ष्णार्द्धं दरदं मतम् ॥३८॥

---

कनकसुन्दररसे तुर्य्यभागेन चतुर्थभागेन, क्षयानुस्थिवकः ॥ २६—३२॥

एकीकृत्य समस्तानि सूक्ष्मचूर्णानि कारयेत् ।
ततः पूजां प्रकुर्वीत रसस्य दिवसे शुभे ॥३९॥
सर्वाङ्गसुन्दरो ह्येष राजयक्ष्मनिकृन्तनः ।
वातपित्तज्वरे घोरे सन्निपाते सुदारुणे ॥४०॥
अर्शांसि ग्रहणीदोषे मेहे गुल्मे भगन्दरे ।
निहन्ति वातजान् रोगान् श्लैष्मिकांश्च विशेषतः ॥४१॥
पिप्पलीमधुसंयुक्तं घृतयुक्तमथापि वा ।
भक्षयेत् पर्णखण्डेन सितया चार्द्रकेण वा ॥ ४२ ॥

सर्वाङ्गसुन्दरोरसः ।

पलं कपर्दचूर्णस्य पलं पारदगन्धयोः ।
माषञ्च टङ्गणस्यैव जम्बीराद्भिर्विमर्दयेत् ।
पुटेत् लोकेश्वरो नाम्ना लोकनाथरसोत्तमः ॥४३॥
ऋते कुष्ठं रक्तपित्तमन्यान् रोगान् बलाद् जयेत् ।
पुष्टिवीर्य्यप्रसादौजःकान्तिलावण्यदः परः ॥४४॥
कोऽस्ति लोकेश्वरादन्यो नृणां शम्भुमुखोद्गतः ।
पथ्यं शाल्योदनं सर्पिर्दधि शाकं सहिङ्गुकम् ॥४५॥
नित्यं यामद्वयादूर्द्धं कार्य्यं वारत्रयं दिवा ।
त्र्यहाद्रुचौ वा वान्ते वा लग्नः सूतो नचेत् पुनः ॥४६॥
अष्टमेऽह्नि प्रदातव्यः पूर्ववत् कार्य्यसिद्धये ।
प्रथमे सप्तमे देया लावशूरणमुद्गकाः ॥४७॥
द्वितीये माषगोधूमं भक्ष्यं पूर्वोदितञ्च यत् ।
देयानि मत्स्यमांसानि तृतीये मर्दनादिकम् ॥४८॥
तैलविल्वारणालानि कोपस्त्रीस्वप्नजागरान् ।
त्यजेत् कादीनि द्रव्याणि हृद्यं स्वादु च शीलयेत् ॥४९॥

---

सर्वाङ्गसुन्दररसे रसगन्धं स्वर्णं ७ त्वं मौक्तिकादीनि स्वर्णार्द्धभागानि॥२१

वायौ सेव्यं पयः कोष्णं पित्ते तु ससितं हितम् ।
अत्यग्नौ चोरवीजानि तिलेक्षुकदलीफलम् ॥५०॥
खर्जूरं मांसमृद्वीका सितादि सकलं भजेत् ।
वीर्य्यच्युतौ नारिकेलजलं तालफलानि च ॥५१॥
आनाहारुचिमूर्च्छार्त्तिधूमोद्गारविसूचिकाः ।
एतेषु लघु शाल्यन्नं केवलं सघृतं हितम् ॥५२॥
अतिवान्तौ पिबेच्छिन्नारसं क्षौद्रेण संयुतम् ।
सक्षौद्रं वासकं रक्तपित्तेऽरुचिविपर्य्यये ॥५३॥
भृष्टधान्यं सितायुक्तमथवा क्षौद्रसंयुतम् ।
यवान्नं मधुसंयुक्तं पिबेद्वा माहिषं दधि ॥५४॥
घृतान्नं भक्षयेन्नित्यं सुखोष्णेन च वारिणा ।
छिन्नाम्बुसहितं देयं दाहे जीर्णे सुधाजलम् ॥५५॥
आर्द्रकं सर्षपं रम्भाफलं शृङ्गं कफोल्वणे ।
अन्येऽप्युपद्रवा ये स्युस्तत् तच्छान्त्यै यथौषधम् ॥५६॥
द्वात्रिंशत् दिवसे कार्य्यं स्नानमामकलैस्तिलैः ।
युक्तं सेव्यं बले जाते शनैरग्निबलादनु ॥५७॥ लोकेश्वरो रसः ।
रसभस्म हेमभस्मतुल्यं गुञ्जाद्वयं भजेत् ।
दोषं बुद्ध्वानुपानेन मृगाङ्कोऽयं क्षयापहः ॥५८॥ स्वल्पमृगाङ्कः ।
काञ्चनं रससिन्दूरं मौक्तिकं लौहमभ्रकम् ।
विद्रुमञ्चाभया तारं कस्तूरी च मनःशिलाः ॥५९॥
प्रत्येकं विन्दुमात्रन्तु सर्वं संमर्द्य यत्नतः ।
वारिणा वटिका कार्य्या द्विगुञ्जाफलमानतः ॥६०॥
अनुपानं प्रयोक्तव्यं यथादोषानुसारतः ।
क्षयं हन्ति तथा कासं श्लेष्मपित्तसमुद्भवम् ॥ ६१ ॥
प्रमेहं विविधञ्चैव दोषत्रयसमुत्थितम् ।
कफजान् वातजान् रोगान् नाशयेत् सद्य एव हि ॥६२॥

बलवृद्धिं वीर्य्यवृद्धिं लिङ्गदार्ढ्यं करोति च।
श्रीकरः पुष्टिजननः नानारोगनिसूदनः।
गहनानन्दनाथोक्तो रसोऽयं काञ्चनाभ्रकः॥६३॥काञ्चनाभ्ररसः।
काञ्चनं रससिन्दूरं मौक्तिकं लौहमभ्रकम्।
विद्रुमं मृतवैक्रान्तं तारं ताम्रञ्च वङ्गकम्॥ ६४॥
कस्तूरिका लवङ्गञ्च जातीकोषैलवालुकम्।
प्रत्येकं विन्दुमात्रञ्च सर्वं मर्द्यं प्रयत्नतः॥ ६५॥
कन्यानीरेण संमर्द्यं केशराजरसेन च।
अजाक्षीरेण संभाव्यं प्रत्येकं दिवसत्रयम्॥ ६६॥
चतुर्गुञ्जाप्रमाणेन वटिकां कारयेद्भिषक्।
अनुपानं प्रयोक्तव्यं यथा दोषानुसारतः॥ ६७॥
क्षयं हन्ति तथा कासं यक्ष्माणं श्वासमेव च।
प्रमेहान् विंशतिञ्चैव दोषत्रयसमुद्भवान्।
सर्वरोगं निहन्त्याशु भास्करस्तिमिरं यथा॥ ६८॥

बृहत्काञ्चनाभ्ररसः।

शिलाजतु मधुव्योष ताप्यं लौहरजस्तथा।
क्षीरेण लोड़ितस्याशु क्षयं क्षयमवाप्नुयात्॥ ६९॥

शिलाजत्वादिलौहम्।

हेमभस्मरसभस्मगन्धकं मौक्तिकन्तु रसटङ्कनं तथा।
तारकं गरुड़सर्वतुल्यकं काञ्जिकेन परिमर्द्य गोलकम्॥७०॥
मृत्स्नया च परिवेष्ट्य शोषितं भाण्डके लवणगेऽथ पाचयेत्।
एकरात्रपचनं पुटेन वा सिद्धिमेति कुमुदेश्वरो रसः।

---

काञ्चनाभ्ररसे विन्दुमात्रं कर्षपरिमितमित्यर्थः॥४२—६३॥
शिलाजत्वादिलौहे मधु यष्टिमधु, ताप्यं स्वर्णमाक्षिकम्। लौहं सर्व-
समम्॥६४—६९॥

वल्लमस्य मरिचैः घृताप्लुते राजयक्ष्मपरिशान्तये पिबेत् ॥७१॥

कुमुदेश्वरो रसः।

त्रिकटु त्रिफलैलाभिर्जातिफललवङ्गकैः।
नवभागोन्मितैस्तुल्यं लौहपारदसिन्दूरम्।
मधुना क्षयरोगांश्च हन्त्ययं यक्ष्मकेशरी ॥७२॥ क्षयकेशरीरसः।

रसगन्धकयोर्ग्राह्यं कर्षमेकं सुशोधितम्।
अभ्रं निश्चन्द्रकं दद्यात् पलार्द्धञ्च विचक्षणः ॥ ७३ ॥
कर्पूरं शाणकं दद्यात् स्वर्णं तोलकसम्मितम्।
ताम्रञ्च तोलकं दद्यात् विशुद्धं मारितं भिषक् ॥७४॥
लौहं कर्षं क्षिपेत्तत्र वृद्धदारकजीरकम्।
विदारी शतमूली च क्षुरकश्च बला तथा ॥ ७५ ॥
मर्कट्यतिबलाचैव जातीकोषफले तथा।
लवङ्गं विजयावीजं श्वेतसर्जरसं तथा ॥ ७६ ॥
शाणभागं समादाय चैकीकृत्य प्रयत्नतः।
मधुना मर्दयेत् तावद् यावदेकत्वमागतम् ॥ ७७ ॥
चतुर्गुञ्जाप्रमाणेन वटिकां कुरु यत्नतः।
भक्षयेद्वटिकामेकां पिप्पलीमधुना सह ॥ ७८ ॥

वृहत् चन्द्रामृतो रसः।

निरुत्थभस्मसौवर्णं द्विगुणं भस्मसूतकम्।
द्विगुणं भस्म मुक्तोत्थं शुकपुच्छं चतुर्गुणम् ॥ ७९ ॥
मृतताम्यञ्च पञ्चांशं तारभस्मचतुर्गुणम्।

---

कुमुदेश्वरे तारकमित्यत्र तालकमिति केचित् पठन्ति। तारकं रौप्यं गरुड़ स्वर्णमाक्षिकम् ॥७०—७१॥

वृहच्चन्द्रामृतरसे क्षुरकं कोकिलाक्षबीजं मर्कटी शूकशिम्बी श्वेतसर्जरसं श्वेत-धूनक म् ॥७२—७८॥

सप्तभागं प्रवालञ्च रसतुल्यञ्च टङ्कनम् ॥ ८० ॥
सर्वमेकत्र संमर्द्य त्रिदिनं लुङ्गवारिणा ।
ततश्च गोलकं कृत्वा शोषयित्वा खरातपे ॥ ८१ ॥
लवणैः पात्रमापूर्य्य तन्मध्ये गोलकं क्षिपेत् ।
तन्मुखन्तु मृदा रुध्वा पचेत् यामचतुष्टयम् ॥ ८२ ॥
आकृष्य चूर्णयेत् शुद्धं चतुःषष्टिविभागतः ।
वज्रं वा तदभावे तु वैक्रान्तं षोड़शांशिकम् ॥ ८३ ॥
महामृगाङ्कः खलु एष सिद्धः श्रीनन्दीनाथप्रकटीकृतोऽयम् ।
वल्लोऽस्य सेव्यो मरिचाज्ययुक्तः सेव्योऽथवा पिप्पलिकासमेतः ॥८४॥
तत्रोपचाराः कर्त्तव्याः सर्वे क्षयगदोदिताः ।
बल्यं वृष्यञ्च भोक्तव्यं त्यजेत् सूतविरोधि यत् ॥ ८५ ॥
यक्ष्माणं बहुरूपिणं ज्वरगदं गुल्मं तथा विद्रधिम्
मन्दाग्निं स्वरभेदकासमरुचिं कान्तिञ्च मूर्च्छां भ्रमिम् ।
अष्टावेव महागदान् गरगदान् पाण्ड्वामयान् कामलान्
पित्तोत्थांश्च समग्रकान् बहुविधानन्यांस्तथा नाशयेत् ॥८६॥

महामृगाङ्को रसः ।

मृतमभ्रं मृतं सूतं मृतं लौहञ्च ताम्रकम् ।
मृतं नागञ्च कांस्यञ्च मण्डूरं विमलं मृतम् ॥ ८७ ॥
वङ्गं खर्परकं तालं शङ्ख टङ्कनमाक्षिकम् ।
मृतं स्वर्णं मृतं कान्तं वैक्रान्तं विद्रुममौक्तिकम् ॥ ८८ ॥
वराटं मणिराजञ्च राजपट्टञ्च गन्धकम् ।
सर्वमेकत्र संचूर्ण्य खल्लमध्ये विनिक्षिपेत् ॥ ८९ ॥

---

महामृगाङ्के द्विगुणं भस्मसूतकमिति सुवर्णापेक्षया द्विगुणं रससिन्दूरमित्यर्थः। शुकपुच्छं गन्धकम् । चतुःषष्टिविभागत इति पुटदानानन्तरं सर्वचूर्णाच्चतुःषष्टिविभागतः वज्रं देयं वज्राभावे षोड़शांशं वैक्रान्तं प्रदातव्यम् ॥७९—८६॥

मर्दयेत् अग्निभानुभ्यां प्रपुटेत् त्रिदिनं लघु।
भावयेत् पुटयेदेभिर्वारांस्त्रींश्च पृथक् पृथक् ॥ ९० ॥
मातुलुङ्गवरावह्निमम्लवेतसमार्कवम्।
हयमारार्द्रकरसैः पाचितो लघुवह्निना ॥ ९१ ॥
वातपित्तकफोत्क्लेशान् ज्वरान् संमर्दितानपि।
सन्निपातं निहन्त्याशु सर्वाङ्गैकाङ्गमारुतान् ॥ ९२ ॥
सेवितश्च सितायुक्तो मागधीरजसा युतः।
मधुकार्द्रकसंयुक्तस्तद्वाधिहरणौषधैः ॥ ९३ ॥
सेवितो हन्ति रोगौघान् व्याधिवारणकेशरी।
क्षयमेकादशविधं शोषं पाण्डुं क्रिमिं जयेत् ॥ ९४ ॥
कासं पञ्चविधं श्वासं मेहमेदोमहोदरम्।
अश्मरीं शर्करां शूलं प्लीहगुल्मं हलीमकम्।
सर्वव्याधिहरो बल्यो वृष्यो मेध्यो रसायनः ॥ ९५ ॥क्षयकेशरी।
चन्दनं मधुकं क्षीरं पीतं रुधिरवान्तिजित्।
भृङ्गराजस्य पत्रन्तु चूर्णितं मधुना सह ॥ ९६ ॥
गोलकं धारयेदास्ये कासारिष्टप्रशान्तये।
पिबेद्वान्तिप्रशान्त्यर्थं क्षौद्रैः छिन्नारुहारसम् ॥ ९७ ॥
भस्मत्वं समुपागतो विकृतिको हेमामृतेनान्वितः
पादांशेन कणाज्यवल्लसहितो गुञ्जोन्मितः सेवितः।
यक्ष्माणं ज्वरणञ्च पाण्डुगदजं श्वासञ्च कासामयम्
दुष्टाञ्च ग्रहणीं क्षतक्षयमुखान् रोगान् जयेत् देहभृत् ॥९८॥

---

क्षयकेशरिकायां मृतं सूतं रससिन्दूरम्, रविस्ताम्रम, शिला शिलाजतु, मनःशिलेति भट्टः। राजपट्टं कान्तपाषाणं तदभावे गोदन्ता। अग्निभानुभ्यामिति चित्रकार्काभ्याम्। मार्कवं भृङ्गराजं हयमारं करवीरम्। अथादिसर्वं चित्रकार्करसैर्भावयेत्। ततः मृदुवह्निना त्रिदिनं पुटेत् एवं वारत्रयं कुर्य्यात् तत उद्धृत्य लौहपात्रे कृत्वा मातुलुङ्गादिरसैर्लघुवह्निना भावयेत् ॥८७—९५॥

लीढो व्योषवरान्वितो विमलको युक्तो घृतैः सेवितो
हन्यात् दुर्भगदुर्जयान् श्वयथुकं पाण्डुप्रमेहारुचिम्।
शूलार्त्तिं ग्रहणीञ्च शूलमतुलं यक्ष्मामयं कामलाम्
सर्वान् पित्तमरुद्गदान् किमपरैर्योगैरशेषामयान्॥ ९९॥

क्षयारिरसः।

भस्मीभूतं रजतममलं तत्समं व्योमचूर्णम्
सर्वैस्तुल्यं त्रिकटुसवरं सर्वमाज्येन युक्तम्।
लीढ़ं प्रातः क्षपयतितरां यक्ष्मपाण्डूदरार्शः
श्वासं कासं नयनजरुजः पित्तरोगानशेषान् ॥१००॥

रजतादिलौहम्।

सुशुद्धं पारदं गन्धं प्रत्येकं शुक्तिसम्मितम्।
ततः कज्जलिकां कृत्वा मर्दयेच्च पृथक् पृथक्॥ १०१॥
बिल्वाग्निमन्थश्योणाक काश्मरी पाटला बला।
मुस्तं पुनर्नवा धात्री बृहती वृषपत्रकम्॥ १०२॥
विदारी बहुपुत्री च एषां कर्षरसैर्भिषक्।
सुवर्णं रजतं ताम्यं प्रत्येकं शाणमानकम्॥ १०३॥
पलमात्रन्तु कृष्णाभ्रं तदर्द्धञ्च शिलाह्वयम्।
जातीकोषफलं मांसी तालीशैलालवङ्गकम्॥ १०४॥
प्रत्येकं कोलमानन्तु वासानीरैर्विमर्दयेत्।
शोषयित्वातपे पश्चाद्विदारीरसमर्दितम्॥ १०५॥
द्विगुञ्जाभां वटीं खादेत् पिप्पलीमधुसंयुताम्।
नाम्ना नित्योदयश्चायं रसो विष्णुविनिर्मितः॥ १०६॥
पञ्चकासान् निहन्त्याशु चिरकालोद्भवानपि।

---

रजतादिलौहे अमलं मलरहितम्। सवरमिति त्रिफलासहित नवनीतकम्॥९६—१००॥

राजयक्ष्माणमत्युग्रं जीर्णज्वरमरोचकम् ॥ १०७ ॥
धातुस्थं विषमाख्यञ्च तृतीयकचतुर्थकम् ।
अर्शांसि कामलां पाण्डुमग्निमान्द्यं प्रमेहकम् ॥ १०८ ॥
सेवनादस्य कन्दर्परूपो भवति मानवः ।
अत्तमाक्षिकसंयुक्तः श्वासं हन्ति सुदारुणम् ॥ १०९ ॥
तालीशचूर्णसंयुक्तः मधुना रक्तपित्तनुत् ।
अतिव्यवायाज्जायन्ते श्वासकासज्वरादयः ।
अतो विशेषतश्चात्र व्यवायं परिवर्जयेत्॥११०॥ नित्योदयोरसः ।

इति राजयक्ष्माधिकारः ।

---

## अथ कासचिकित्सा ।

कर्षं शुद्धरसेन्द्रस्य गन्धकस्याभ्रकस्य च ।
ताम्रस्य हरितालस्य लौहस्य च विषस्य च ॥१॥
मनःशिलायाः क्षाराणां वीजस्य धूस्तूरस्य च ।
मरिचस्य च सर्वेषां समं चूर्णं प्रकल्पयेत् ॥२॥
जयन्ती चित्रकं मानं खण्डकर्णीऽथ मण्डूकी ।
शक्राशनं भृङ्गराजं केशराजं तथार्द्रकम् ॥३॥
निर्गुण्डीस्वरसेनापि कर्षमात्रेण मर्दयेत् ।
कलायपरिमाणान्तु वटिकां कारयेद्भिषक् ॥४॥
आर्द्रकस्वरसेनैव पञ्चकासं व्यपोहति ।
हन्ति कासं तथा श्वासं यक्ष्माणं सभगन्दरम् ॥५॥
अग्निमान्द्यारुचिं शोथमुदरं पाण्डुकामलम् ।
रसायनी च वृष्या च बलवर्णप्रसादिनी ॥६॥ वृहद्रसेन्द्रगुड़िका

---

यक्ष्मरूपेषु कासपाठात् कासापेक्षया च यक्ष्मासम्भवात् यक्ष्मानन्तरं कासचिकित्सामाह। वृहद्रसेन्द्रगुड़िकायां रसादि मनःशिलान्तानां दशोदशद्रव्याणां

पारदं गन्धकं शुद्धं मृतलौहञ्च टङ्गनम् ।
रास्नाविड़ङ्ग त्रिफला देवदारुकचित्रकम् ॥७॥
अमृतापञ्चकं चौद्रं विषञ्चैव विमर्दयेत् ।
द्विगुञ्जं वातकासार्त्तः सेवयेदमृतार्णवम् ॥८॥ अमृतार्णवो रसः ।

भस्मताम्राभ्रकान्तानां कासमर्दत्वचो रसैः ।
मणिजैर्वेतसाम्लैश्च दिनं मर्द्यं सुपिण्डितम् ॥९॥
निष्कार्द्धं पित्तकासार्त्तो भक्षयेच्च दिनत्रयम् ।
कासश्वासाग्निमान्द्यञ्च क्षयञ्चापि निहन्त्यलम् ॥१०॥
पित्तकासान्तको रसः ।

रसगन्धकताम्राभ्रशङ्खटङ्गनलौहकम् ।
मरिचं कुष्ठतालीश जातीफललवङ्गकम् ॥११॥
कार्षिकं चूर्णमादाय दण्डेनामर्द्य भावयेत् ।
भेकपर्णी केशराजो निर्गुण्डी काकमाचिका ॥१२॥
द्रोणपुष्पी शालपर्णी ग्रीष्मसुन्दरकं तथा ।
भार्गी हरीतकी वासा कार्षिकैः पत्रजैरसैः ॥१३॥
वटिकां कारयेद्वैद्यः पञ्चगुञ्जाप्रमाणतः ।
वातजं पैत्तिकं कासं श्लैष्मिकं चिरजं तथा ॥१४॥
श्रीमद्गहननाथेन काससंहारभैरवः ।
रसोऽयं निर्मितो यत्नात् लोकरक्षणहेतवे ॥१५॥
वासा शुण्ठी कण्टकारीक्वाथेन पाययेद्बुधः ।
कासं नानाविधं हन्ति श्वासमुग्रमरोचकम् ।

---

प्रत्येक कर्षमात्रम् । खण्डकर्णः खरकोण इति ख्यातः, मण्डूकपर्णी थानकुनी जयन्त्यादीनां स्वरसः पृथक् कर्षपरिमितः ॥१—६॥

अमृतार्णवे अमृता गुड़ूची पञ्चकं पञ्चकाष्ठम् ॥७॥८॥

पित्तकासान्तकरसे कासमर्दी कालकासेन्दा इति ख्याता । मणिजैर्वङ्कुपुष्पं ॥९॥१०॥

बलवर्णकरः श्रीदः पुष्टिदः कान्तिवर्द्धनः ॥१६॥ काससंहारभैरवः

शुद्धसूतं सतालञ्च तालार्द्धं रसखर्परम्।
वङ्गं ताम्रं घनं कान्तं कांस्यं गन्धं पलं पलम् ॥१७॥
केशराजरसेनैव भावयेद्दिवसत्रयम्।
कुलत्थस्य रसेनैव भावयेच्च पुनः पुनः ॥१८॥
एलाजातीफलाख्यञ्च तेजपत्रं लवङ्गकम्।
यमानीजीरकञ्चैव त्रिकटु त्रिफलासमम् ॥१९॥
भावयेच्च रसेनैव गोलयेत् सर्वमौषधम्।
छायाशुष्का वटी कार्य्या चणकप्रमिता शुभा ॥२०॥
शीताम्बुना पिबेद्धीमान् सर्वकासनिवृत्तये।
मत्स्यं मांसं तथा क्षीरं पथ्यं स्यात् स्निग्धभोजनम् ॥२१॥
क्षयकासं तथा श्वासं सज्वरं वाथ विज्वरम्।
हलीमकं पाण्डुरोगं शोथं शूलं प्रमेहकम् ॥२२॥
अर्शोनाशं करोत्येव बलवृद्धिञ्च कारयेत्।
वर्जयेच्छाकमम्लञ्च भृष्टद्रव्यं हुताशनम् ॥२३॥ लक्ष्मीविलासो रसः

रसगन्धकयोश्चूर्णमेकीकृत्याभ्रकं तथा।
हेमभिस्म समं कृत्वा मर्दयेत् यामकद्वयम् ॥२४॥
त्रूषणानिलवङ्गैला टङ्गनं हेमतुल्यकम्।
कण्टकार्य्या रसैर्भाव्यमेकविंशतिवारकम् ॥२५॥
शिग्रुवीजार्द्रकरसैः सप्तधा भावयेत् पृथक्।
रसः सर्वेश्वरो नाम कासश्वासक्षयापहः।
अनुपानं प्रयोक्तव्यं विभीतकफलत्वचम् ॥ २६ ॥ सर्वेश्वरो रसः।

---

काससंहारभैरवे भेकपर्णी थान्कुनी भेकपर्ण्यादीनां स्वरसः प्रत्येकं कर्षपरिमित इत्यर्थः ॥११—१६॥

लक्ष्मीविलासरसे रसखर्परं खर्परमेव ॥१७—२३॥

शुद्धं कृष्णाभ्रचूर्णं द्विपलपरिमितं शाणमानं यदन्यत्
कर्पूरं जातीकोषं सजलमिभकणा तेजपत्रं लवङ्गम्।
मांसीतालीशचोचे गजकुसुमगदं धातकी चेति तुल्यम्
पथ्या धात्रीबिभीतं त्रिकटुरथ पृथगर्द्धशाणं द्विशाणम् ॥२७
एलाजातीफलाख्यं चितितलविधिना शुद्धगन्धाश्मकोलम्
कोलार्द्धं पारदस्य प्रतिपदविहितं पिष्टमेकत्र मिश्रम्।
पानीयेनैव कार्य्याः परिणतचणकस्विन्नतुल्याश्च वट्यः
प्रातःखाद्यास्ततस्तदनु च कियत् शृङ्गवेरं सपर्णम् ॥२८
पानीयं पीतमन्ते ध्रुवमपहरति चिप्रमेतान् विकारान्
कोष्ठे दुष्टाग्निजातान् ज्वरमुदररुजो राजयक्ष्मक्षयञ्च।
कासं श्वासं सशोथं नयनपरिभवं मेहमेदोविकारान्
छर्दिं शूलाम्लपित्तं तृषमपि महतीं गुल्मजालं विशालम् ॥२९॥
पाण्डुत्वं रक्तपित्तं गरलभवगदान् पीनसं प्लीहरोगान्
हन्यादामाशयोत्थान् कफपवनकृतान् पित्तरोगानशेषान्।
बल्यो वृष्यश्च योगस्तरुणतरकरः सर्वरोगे प्रशस्तः
पथ्यं मांसैश्च यूषैः घृतपरिलुलितैः गव्यदुग्धैश्च भूयः ॥ ३० ॥
भोज्यं योज्यं यथेष्टं ललितललनया दीयमानं मुदा यत्
शृङ्गाराभ्रेण कामी युवतिजनशताभोगयोगादतुष्टः।
वर्ज्यं शाकाम्लमादौ दिनकतिपयचित् स्वेच्छया भोज्यमन्यत्
दीर्घायुः काममूर्त्तिर्गतवलिपलितो मानवोऽस्य प्रसादात् ॥३१

शृङ्गाराभ्रम्।

जीर्णं सुवर्णं लौहं वा यद्यत्रैव प्रदीयते।
तदाऽयं सर्वरोगाणां सार्वभौमो न संशयः ॥३२॥ सार्वभौमः

---

शृङ्गाराभ्रे जलं बालकम् इभकणा गजपिप्पली। चितितलविधिं पातालयन्त्रेण। कोलं तोलकम् ॥२४—३१॥

सार्वभौमरसमाह जीर्णमित्यादि। अत्र शृङ्गाराभ्रे यदि स्वर्णं लौहं प्रदीयते तदायं सार्वभौमः ॥३२॥

कर्षद्वयं रसेन्द्रस्य शुद्धस्य गन्धकस्य च।
कज्जलीकृत्य यत्नेन शुभे दृढ़शिलातले ॥ ३३ ॥
विल्वाग्निमन्थः श्योनाकः काश्मरी पाटला बला।
मुस्तं पुनर्णवा धात्री बृहती वृषपत्रकम् ॥ ३४ ॥
विदारी शतमूली च कर्षैरेषां पृथक् रसैः।
मर्दयित्वा पुनर्वासास्वरसैः दशतोलकैः ॥३५॥
मर्दयेत्तत्र शुद्धाभ्रं रसस्य द्विगुणं क्षिपेत्।
रसस्यार्द्धञ्च कर्पूरं तत्रैव दापयेद्भिषक् ॥ ३६ ॥
जातीकोषफले मांसी तालीशैलालवङ्गकम्।
चूर्णं कृत्वा प्रयत्नेन माषमात्रं क्षिपेत् पृथक् ॥ ३७ ॥
विदारीस्वरसेनैव वटिकां कारयेद्भिषक्।
राजयक्ष्माणमत्युग्रं क्षयञ्चोग्रमुरःक्षतम् ॥ ३८ ॥
कासं पञ्चविधं श्वासं स्वराघातमरोचकम्।
कामलां पाण्डुरोगञ्च प्लीहानं सहलीमकम् ॥ ३९ ॥
जीर्णज्वरं तृषं गुल्मं ग्रहणीमामसम्भवाम्।
अतीसारञ्च शोथञ्च कुष्ठानि च भगन्दरम् ॥ ४० ॥
नाशयेदेष विख्यातस्तरुणानन्दसंज्ञितः।
रसायनवरो वृष्यश्चक्षुष्यः पुष्टिवर्द्धनः ॥ ४१ ॥
सहस्रं याति नारीणां भक्षणादस्य मानवः।
क्षीणता न च शुक्रस्य न च बुद्धिबलक्षयम् ॥ ४२ ॥
द्विमाषमुपयोगेन निहन्ति कामलान् गदान्।
शुक्रसन्दीपनं कृत्वा ज्वरं हन्ति न संशयः ॥ ४३ ॥
नारिकेलजलेनैव भक्ष्योऽयञ्च रसायनः।
क्षीरानुपानात् वृष्योऽयं न क्वचित् प्रतिहन्यते ॥ ४४ ॥

तरुणानन्दरसः।

---

तरुणानन्दरसे गन्धकस्य कर्षद्वयं विल्वादीनां स्वरसः प्रत्येकं कर्षांशः॥३३—४४॥

सूतकं गन्धकं लौहं विषञ्चैव वराङ्गकम् ।
ताम्रकं वङ्गभस्मापि व्योमकञ्च समांशकम् ॥ ४५ ॥
त्रिकटु भद्रमुस्तञ्च विड़ङ्गं नागकेशरम् ।
रेणुकामलकञ्चैव पिप्पलीमूलमेव च ॥ ४६ ॥
एषाञ्च द्विगुणं भागं मर्दयित्वा प्रयत्नतः ।
भावना तत्र दातव्या गजपिप्पलीकाम्बुभिः ॥ ४७ ॥
चणमात्रां वटी कार्य्या संग्रहग्रहणीहिता ।
कासं हन्ति तथा श्वासमर्शांसि च भगन्दरम् ॥ ४८ ॥
हृच्छूलं पार्श्वशूलञ्च कर्णरोगं कपालिकाम् ।
हरेत् संग्रहणीरोगानष्टौ च जठराणि च ।
प्रमेहान् विंशतिञ्चैव चतुर्विधमजीर्णकम् ॥ ४९ ॥
न चान्नपाने परिहार्य्यमस्ति न शीतवातातपमैथुनेषु ।
यथेष्टचेष्टाभिरतः प्रयोगी नरो भवेत् काञ्चनराशिगौरः ॥ ५०

महोदधिरसः ।

सूतकं गन्धकं लौहं विषं वत्सकमेव च ।
विड़ङ्गं केशरं मुस्तमेलाग्रन्थिकरेणुकम् ॥ ५१ ॥
त्रिकटु त्रिफला चित्रं शुद्धं जैपालवीजकम् ।
एतानि समभागानि द्विगुणो गुड़ उच्यते ॥ ५२ ॥
तिन्तिड़ीवीजमानेन प्रातःकाले च भक्षयेत् ।
कासं श्वासं क्षयं गुल्मं प्रमेहं विषमज्वरम् ॥ ५३ ॥
अजीर्णं ग्रहणीरोगं शूलं पाण्डामयं तथा ।
अपाने हृदये शूले वातरोगे गलग्रहे ॥ ५४ ॥

---

महोदधिरसे वराङ्गं गुड़त्वक् । सूतादिव्योमान्तानां प्रत्येकमेकभागम
त्रिकट्वादीनां प्रत्येकमेकभागापेक्षया द्विगुणम् । गजपिप्पलिकाम्बुभिः पिप्पलीक्वाथैः ॥४५–५०॥

अरुचावतिसारे च सूतिकातङ्कपीड़िते ।
जयाख्या निर्मिता ह्येषा भक्षणीया सुरैरपि॥५५॥ जयागुड़िका।
सूतकं गन्धकं लौहं विषं चित्रकपत्रकम् ।
विड़ङ्गरेणुकामुस्तमेलाकेशरग्रन्थिकम् ॥ ५६ ॥
फलत्रिकं त्रिकटुकं शुल्वभस्म तथैव च ।
एतानि समभागानि द्विगुणो दीयते गुड़ः ॥ ५७ ॥
कासे श्वासे क्षये गुल्मे प्रमेहे विषमज्वरे ।
सूतायां ग्रहणीरोगे शूले पाण्ड्वामये तथा ।
हस्तपादादिदाहे च गुड़िकेयं प्रशस्यते ॥५८॥ विजयगुड़िका।
रसमेकं द्विधा गन्धं गन्धतुल्यञ्च सैन्धवम् ।
ज्वालामुखीरसैः पञ्चदिनानि परिमर्दयेत् ॥ ५९ ॥
मूषकायां निरुध्याथ पुटेद्रात्रौ च मध्यमम् ।
सर्वं भस्म यदा याति वल्लमेनं प्रयच्छति ॥ ६० ॥
ग्रहण्यां संग्रहण्याञ्च कासे श्वासे विशेषतः ।
उग्रासु ज्वरतन्द्रासु निद्रास्वल्पासु योजयेत् ॥ ६१ ॥
अन्यरोगेषु तं दद्याद्रसं स्वच्छन्दभैरवम् ।
तुष्टिं पुष्टिमसौ कुर्य्यात् सौकुमार्य्यञ्च कारयेत् ॥६२॥
स्वच्छन्दभैरवः ।
रसभागो भवेदेको गन्धको द्विगुणो मतः ।
त्रिभागा पिप्पली पथ्या चतुर्भागा विभीतकः ॥६३॥
पञ्चभागस्त्वामला च षड्गुणा सप्तभागिका ।
भार्गी सर्वमिदं चूर्णं भाव्यं वव्वोलजैर्द्रवैः ॥ ६४ ॥

---

जयागुड़िकायां वत्सकं कुटजं केशरं नागकेशरं ग्रन्थिकं पिप्पलीमूलम् ॥५१ – ५५ ॥

स्वच्छन्दभैरवे ज्वालामुखी भल्लातकम् ॥५६ – ६२॥

एकविंशतिवारञ्च मधुना गुड़िका कृता ।
विभीतकप्रमाणेन प्रातरेकान्तु भक्षयेत् ।
कासं श्वासं हरेत् क्षुद्राक्काथं तदनुकषायया॥६५॥ रसगुड़िका।
माक्षिकञ्च शिखिग्रीवमभ्रकं तालकं तथा ।
एतांस्तु मिलितान् सर्वान् भावयेदार्द्रकद्रवैः ॥ ६६ ॥
रक्तिद्वयप्रमाणान्तु कल्पयेत् गुड़िकां भिषक् ।
जीर्णान्ने भक्षयेदेकां चौरमांसरसाशनः ॥ ६७ ॥
पञ्चकासं क्षयं श्वासं रक्तपित्तं विनाशयेत् ।
पाण्डुक्रिमिज्वरहरी कृशानां पुष्टिवर्द्धिनी ।
शुक्रवृद्धिकरी चैषा अम्लपित्तविनाशिनी ॥६८॥ रसेन्द्रगुड़िका।
सूतकात् द्विगुणं गन्धमेकधा कज्जलीकृतम् ।
त्रिकटु त्रिफलाचूर्णं प्रत्येकं सूतसम्मितम् ॥ ६९ ॥
अजाक्षीरेण संभाव्य वटिकां कारयेत्ततः ।
आर्द्रकस्य रसैः सेव्या शीततोयं पिबेदनु ॥ ७० ॥
कासश्वासप्रशमनी विशेषादग्निवर्द्धिनी ।
इयं यदि सदा सेव्या तदा स्याद् योगवाहिका ।
वृद्धोऽपि तरुणः शक्तः स्त्रीशतेषु वृषायते ॥७१॥ पुरन्दरवटी।
सूतं गन्धं विषञ्चैव शालपर्णी च धान्यकम् ।
यावन्त्येतानि चूर्णानि तावन्मात्रं मरिचकम् ।
गुञ्जाचतुष्टयं खादेत् मधुना कासशान्तये ॥७२॥ कासान्तको रसः
हिङ्गुलं मरिचं गन्धं सव्योषं टङ्कनं तथा ।
द्विगुञ्जमार्द्रकद्रावैः सन्निपातं सुदारुणम् ॥
कासं नानाविधं हन्ति शिरोरोगं विनाशयेत् ॥७३॥ कासकुठार

---

रसगुड़िकायाम् आमला षड्गुणा मता इत्यत्र वासा षड्गुणिता मता इति केचित् पठन्ति। वव्वीलं वावइ इति ख्यातः क्षुपविशेषः। विभीतकप्रमाणेन कर्षमाणेन ॥ ६३ – ६८ ॥

त्रिकटु त्रिफला धान्यं चव्यं जीरकसैन्धवम् ।
दिव्यौषधिहतस्यापि तत्तुल्यमयसो रजः ॥ ७४ ॥
नवगुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् ।
प्रातःकाले शुचिर्भूत्वा चिन्तयित्वाऽमृतेश्वरीम् ॥ ७५ ॥
एकैकां वटिकां खादेत् रक्तोत्पलरसाप्लुताम् ।
नीलोत्पलरसेनैव कुलत्थस्वरसेन च ॥ ७६ ॥
निहन्ति विविधं कासं दोषत्रयसमुद्भवम् ।
वातिकं पैत्तिकञ्चैव गरदोषसमुद्भवम् ॥ ७७ ॥
सरक्तमथ नीरक्तं ज्वरं श्वाससमन्वितम् ।
भ्रमदाहहृद्शूलघ्नं रुच्यं वह्निप्रकोपणम् ॥७८॥
बलवर्णकरं वृष्यं जीर्णज्वरविनाशनम् ।
इदं चन्द्रामृतं लौहं चन्द्रनाथेन निर्मितम् ॥७९॥

चन्द्रामृतलौहम् ।

रसगन्धकलौहानां प्रत्येकं कार्षिकं क्षिपेत् ।
टङ्गनस्य पलं दत्त्वा मरिचस्य पलार्द्धकम् ॥८०॥
त्रिकटु त्रिफला चव्यं धान्यजीरकसैन्धवम् ।
प्रत्येकं तोलकं ग्राह्यं छागीदुग्धेन पेषयेत् ॥८१॥
नवगुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् ।
प्रातःकाले शुचिर्भूत्वा चिन्तयित्वाऽमृतेश्वरीम् ॥८२॥
एकैकां वटिकां खादेत् रक्तोत्पलरसेन च ।
नीलोत्पलरसेनापि कुलत्थस्वरसेन च ॥८३॥
छागीक्षीरेण मण्डेन केशराजरसेन च ।
निहन्ति विविधं कासं वातरक्तसमुद्भवम् ॥८४॥

---

चन्द्रामृतलौहे दिव्यौषधिहतस्यापि तत्तुल्यमयसो रज इति मनःशिलाया हतस्य लौहचूर्णस्य सर्वचूर्णसमत्वं ज्ञेयम् ॥६९—७९॥

वातश्लेष्मज्वरं कासं पित्तश्लेष्मज्वरं तथा ।
वातिकं पैत्तिकं वापि गरदोषसमन्वितम् ॥८५॥
वासा गुडूचिकाभार्गी मुस्तकं कण्टकारिका ।
समभागकृतं क्वाथं प्रत्यहं भक्षयेदनु ॥८६॥ चन्द्रामृतो रसः ।
हिङ्गुलञ्च विषञ्चैव कणा मरिचं टङ्गनम् ।
जातीकोषं समं सर्वं जम्बीररसमर्दितम् ॥८७॥
रक्तिमानां वटीं कुर्य्यादार्द्रकरससंयुताम् ।
वटीद्वयं त्रयं खादेत् सन्निपातं सुदारुणम् ॥८८॥
अग्निमान्द्यमजीर्णञ्च सामवातं सुदारुणम् ।
उष्णतोयानुपानेन सर्वं व्याधिं नियच्छति ॥८९॥
कासं पञ्चविधं श्वासं सर्वाङ्गग्रहमेव च ।
जीर्णज्वरं क्षयं कासं हन्यादमृतमञ्जरी ॥९०॥ अमृतमञ्जरी ।
त्रिफला व्योषचूर्णञ्च समभागं प्रकल्पयेत् ।
मधुना सह पानात्तु दुष्टकासं नियच्छति ॥९१॥ कासान्तकः ।
पारदं गन्धकञ्चैव टङ्गनं नागकेशरम् ।
कर्पूरं जातीकोषञ्च लवङ्गं तेजपत्रकम् ॥९२॥
सुवर्णञ्चापि प्रत्येकं कर्षमात्रं प्रकल्पयेत् ।
शुद्धकृष्णाभ्रचूर्णन्तु चतुःकर्षं प्रयोजयेत् ॥९३॥
तालीशं घनकुष्ठञ्च मांसीत्वक् धात्रीपुष्पिका ।
एलावीजं त्रिकटुकं त्रिफला करिपिप्पली ॥९४॥
कर्षद्वयं वा चैतेषां पिप्पलीक्वाथमर्दितम् ।
अनुपानं प्रयोक्तव्यं चोचं क्षौद्रसमायुतम् ॥९५॥
अग्निमान्द्यादिकान्रोगानरुचिं पाण्डुकामलान् ।
उदराणि तथा शोथमानाहं ज्वरमेव च ॥९६॥
ग्रहणीं श्वासकासञ्च हन्याद् यक्ष्माणमेव च ।
नानारोगप्रशमनं बलवर्णाग्निकारकम् ॥९७॥

बृहच्छृङ्गाराभ्रनाम विष्णुना परिकीर्त्तितम् ।
तस्याभ्यासमात्रेण निर्व्याधिर्जायते नरः ॥९८॥ बृहच्छृङ्गाराभ्रम्

इति कासाधिकारः ।

---

## अथ हिक्काश्वासाधिकारः ।

सूतकं गन्धकं मर्द्यं यामैकं कन्यकाद्रवैः ।
द्वयोस्तुल्यं ताम्रपात्रं पूर्वकल्केन लेपयेत् ॥१॥
दिनैकं हण्डिकायन्त्रे पचेच्छीतं समुद्धरेत् ।
सूर्य्यावर्त्तरसो नाम द्विगुञ्जः श्वासकासनुत् ॥२॥
इन्द्रवारुणिकामूलं देवदारु कटुत्रयम् ।
शर्करासहितं खादेदूर्द्ध्वश्वासनिवृत्तये ॥३॥ सूर्य्यावर्त्तो रसः
सूतकं गन्धकं लौहं विषमभ्रकमेव च ।
विड़ङ्गं रेणुकं मुस्तमेला ग्रन्थिककेशरम् ॥४॥
त्रिकटु त्रिफला ताम्रं शुल्वं जैपालचित्रकम् ।
एतानि समभागानि द्विगुणो दीयते गुड़ः ॥५॥
कासे श्वासे क्षये गुल्मे प्रमेहे विषमज्वरे ।
सूतायां ग्रहणीदोषे शूले पाण्ड्वामये तथा ।
हस्तपादादिदाहेषु वटिकेयं प्रशस्यते ॥६॥ विजयावटी ।

---

बृहच्छृङ्गाराभ्रे सुवर्णं धूस्तूरबीजं स्वर्णमित्यर्के घनं मुस्तकं धात्रीपुष्पिका धातकी करिपिप्पली गजपिप्पली ॥८०—९८॥

इति कासाधिकारः ।

---

तुल्यनिदानत्वात् कासानन्तरं हिक्काश्वासचिकित्सामाह । सूर्य्यावर्त्तरसे सूतार्द्धं गन्धकमिति केचित् । पूर्वकल्केनेति पूर्वोक्तरसगन्धककल्केन । इन्द्रवारुण्यादीनां मूलचूर्णं यथाबलं लेह्यम् ॥१—३॥

घृतेन पाचयेत् स्थूलं पत्रञ्च वासकस्य च ।
भक्षयेत् प्रातरुत्थाय कासे श्वासे क्षये तथा ॥७॥
पिप्पली देवदारु च शुण्ठीचूर्णं समं तथा ।
ऊर्द्ध्वश्वासं सदा हन्ति पिबेदुष्णजलेन च ॥८॥
भागौ रसस्य गन्धस्य द्वावेको लौहभस्मतः ।
एतद् घृष्टं द्रवीभूतं मृद्वग्नौ कदलीदले ॥९॥
पातयेद् गोमयगते तथैवोपरि योजयेत् ।
ततः पिष्ट्वा द्रवैरेभिः सप्तधा भावयेत् पृथक् ॥१०॥
भार्गी मुण्डी मुनिवरा जया निर्गुण्डिका तथा ।
व्योषवासककन्यार्द्रद्रवैस्ततः पुटे पचेत् ॥११॥
आगन्धं खर्परे ताम्रे पर्पटाख्यो रसो भवेत् ।
सर्वरोगहरस्तैस्तैरनुपानैर्हि माषकैः ॥१२॥
ताम्बूलीपत्रसहितः श्वासकासहरः परः ।
सकणः सुरसाक्वाथोऽनुपानं वासकाज्जलम् ॥१३॥
अम्लिकातैलवार्त्ताकु कूष्माण्डं कदलीफलम् ।
वर्ज्यं मांसरसं सर्वं पथ्यं दद्यात् विचक्षणः ।
वर्जयेच्च विशेषेण कफकृत् स्त्रीसुखादिकम् ॥१४॥

लौहपर्पटीरसः ।

लौहस्थाने ताम्रयोगात्ताम्रपर्पटिका भवेत् ॥१५॥
पिप्पल्यामलकी द्राक्षा कोलास्थि मधुशर्करा ।
विड़ङ्गपुष्करैर्युक्तं लौहं हन्ति सुदारुणाम् ।

---

लौहपर्पटीरसे रसस्य द्वौ भागौ गन्धकस्य च द्वौ भागौ लौहभस्मतश्चैको भागः, एतत् सर्वमेकीकृत्य रसपर्पटीवत् पचेत् । ततः भार्ग्यादिद्रवैः प्रत्येकशः सप्तधा मर्दयेत् तदनन्तरं ताम्रभाजने कृत्वा आगन्धं प्रपुटेत् ॥७—१४॥

छर्दिं हिक्कां तथा तृष्णां त्रिरात्रेण न संशयः ॥ १६ ॥

पिप्पल्याद्यं लौहम्।

टङ्गनं पारदं गन्धं विषं शिला कटुत्रिकम्।
निष्पिष्य वटिका कार्य्या वाणगुञ्जाप्रमाणतः ॥१७॥
उष्णोदकं पिबेच्चानु क्षुद्राक्वाथमथापि वा।
कासं पञ्चविधं हन्ति श्वासं श्लेष्मसमुद्भवम्।
शिरोरोगं निहन्त्याशु वृक्षमिन्द्राशनिर्यथा ॥१८॥ श्वासकुठारः।
पारदं माक्षिकं स्वर्णं समांशं परिकल्पयेत्।
पारदार्द्धं मौक्तिकञ्च सूताद् द्विगुणगन्धकम् ॥१९॥
अभ्रञ्चैव तथा योज्यं व्योम्नो द्विगुणलौहकम्।
कण्टकारीरसेनैव छागीदुग्धेन च पृथक् ॥२०॥
यष्टिमधुरसेनैव पर्णपत्ररसेन च।
भावयेत् सप्तवारञ्च द्विगुञ्जां वटिकां भजेत्।
पिप्पलीमधुसंयुक्तां श्वासकासविमर्दिनीम् ॥२१॥

श्वासकासचिन्तामणिः।

रसं गन्धं विषं टङ्गं शिलोषणकटुत्रयम्।
सर्वं संमर्द्य दातव्यो रसः श्वासकुठारकः।
वातश्लेष्मसमुद्भूतं श्वासं कासं क्षयं जयेत् ॥२२॥ श्वासकुठारः।
रसं गन्धं विषञ्चैव टङ्गनं समनःशिलम्।
एतानि समभागानि मरिचं तच्चतुर्गुणम् ॥२३॥
त्रिभागं त्रूषणं ज्ञेयं खल्ले सर्वं विचूर्णयेत्।
रसः श्वासकुठारोऽयं द्विगुञ्जः श्वासकासजित् ॥२४॥

---

पिप्पल्यादिलौहे कोलास्थि वदरास्थि मज्जा, मधु यष्टिमधु पुष्कर पुष्करमूलम् १५—१६॥

श्वासकुठाररसे गरलं विषं क्षुद्राक्वाथं कण्टकारीक्वाथम् ॥१७॥१८॥

श्वासकुठारे शिला मनःशिला त्रूषणं मरिचम् ॥१९—२२॥

गता संज्ञा यदा पुंसां तदा नस्यं प्रदापयेत्।
घ्रापयेन्नासिकारन्ध्रे संज्ञाजननमुत्तमम् ॥२५॥
प्रतिश्यायं क्षतक्षीणमेकादशविधं क्षयम्।
हृद्रोगं श्वासशूलञ्च स्वरभेदं सुदारुणम्।
सन्निपातं तथा घोरं तन्द्रामोहान्वितं जयेत्॥२६॥ श्वासकुठारः

इति हिक्काश्वासाधिकारः।

---

## अथ स्वरभेदचिकित्सा।

रसं गन्धं विषं टङ्कं मरिचं चव्यचित्रकम्।
आर्द्रकस्य रसेनैव संमर्द्य वटिकां ततः ॥ १ ॥
गुञ्जात्रयप्रमाणेन खादेत्तोयानुपानतः।
स्वरभेदं निहन्त्याशु श्वासं कासं सुदुस्तरम्॥२॥ भैरवीरसः।

चव्याम्लवेतसकटुत्रयतिन्तिड़ीक-
तालीश-जीरक-तुगादहनैः समांशैः।
चूर्णं गुड़प्रमृदितं त्रिसुगन्धियुक्तं
वैस्वर्य्यपीनस-कफारुचिसु प्रशस्तम् ॥३॥

अनेनैवानुपानेन भस्मसूतं प्रयोजयेत्।
योगवाहि रसञ्चापि योजयन्ति भिषग्वराः ॥४॥
सशर्करं शुण्ठीचूर्णं क्षौद्रेण सह योजितम्।
कोकिलस्वर एव स्याद् गुड़िकाभुक्तमात्रतः ॥५॥

इति स्वरभेदाधिकारः।

---

श्वासकुठारे मरिचं तत् चतुर्गुणमिति एकभागापेक्षया चतुर्गुणम् ॥२३—२६॥
इति हिक्काश्वासाधिकारः।

---

प्राणोदानदुष्टिसाधर्म्यात् हिक्काश्वासानन्तरं स्वरभेदचिकित्सामाह रसमित्यादि। सतभस्मप्रयोगे तिन्तिड़ीकं महार्द्रकं तुगा वंशलोचना। दहनश्चित्रकः गुड़मिति सर्वचूर्णसमम् ॥१—५॥

इति स्वरभेदाधिकारः।

## अथ अरोचकचिकित्सा ।

रसगन्धौ समौ शुद्धौ दन्तीक्वाथेन भावयेत् ।
जम्बीरस्य रसेनैव आर्द्रकस्य रसेन च ॥१॥
मातुलुङ्गस्य तोयेन तथा मज्जरसेन च ।
पश्चाद्विशोष्य सर्वांस्तान् टङ्कनञ्चावचारयेत् ॥२॥
देवपुष्पं बाणमितं रसपादं मृतामृतम् ।
माषमात्रञ्च तत्सर्वं नागरेण गुड़ेन वा ॥३॥
विसूचीञ्चाग्निमान्द्यञ्च भक्तद्वेषञ्च दारुणम् ।
रसोऽयं वारयत्याशु केशरी करिणं यथा ॥४॥ सुधानिधिरसः ।

पलं सुजीर्णं गगनन्तु वज्रकं तेजोवतीकोलसुशीरदाड़िमम् ।
धात्र्यम्लवोलीरुचकं पृथक् रसैः पलोन्मितं मर्दितमेव सेवितम्॥५॥
अरोचकं वातकफत्रिदोषजं पित्तोद्भवं गन्धसमुद्भवं नृणाम् ।
कासं स्वराघातमुरोग्रहं रुजं श्वासं बलासं यकृतं भगन्दरम् ॥६॥
प्लीहाग्निमान्द्यं श्वयथुं समीरणं मेहं भृशं कुष्ठमसृग्दरं क्रिमिम् ।
शूलाम्लपित्तक्षयरोगमुद्गतं सरक्तपित्तं वमिदाहमश्मरीम् ।
निहन्ति चार्शांसि सुलोचनाभ्रकं बलप्रदं वृष्यतमं रसायनम्॥७॥

सुलोचनाभ्रम् ।

ससूतमरुचिघ्नं स्यात्तिन्तिड़िकगुड़ोषणम् ।
मृद्वीका जीरकं कृष्णा मातुलुङ्गाम्लवेतसम् ॥८॥

इत्यरोचकाधिकारः ।

---

अरोचकस्य अपि ऊर्द्ध्वगविकारत्वेन स्वरभेदानन्तरमरोचकमाह । सुधानिधिरसे सर्वचूर्णसमं टङ्कनचूर्णम्, देवपुष्पं लवङ्गं मृतामृतमिति शोधितविषम् । भक्तद्वेषमरोचकम् ॥१—४॥

सुलोचनाभ्रे सुजीर्णगगनं भस्माभ्रं, तेजोवती चवी कोलं वदरफलमज्जा, रुचकं कोलाङ्ग इति ख्यातः । ससूतमित्यादौ तिन्तिड़िकं पक्वतिन्तिड़ीफलम् ॥५—८॥

इति अरोचकाधिकारः ।

## अथ छर्दिरोगचिकित्सा ।

अजाजीधान्यपथ्याभिः सक्षौद्राभिः कटुत्रिकैः ।
एभिः सार्द्धं भस्मसूतः सेव्यो वान्तिप्रशान्तये ।
हिक्काधिकारोक्तपिप्पल्यादिलौहमत्र विधेयम् ॥१॥

इति छर्दिरोगचिकित्सा ।

---

## अथ तृष्णारोगचिकित्सा ।

ताम्रं चक्रिकया बद्धं सूतं तालं सतुल्यकम् ।
वटाङ्कुररसैर्भाव्यं तृष्णाहृद्वल्लमात्रतः ॥१॥
सक्षौद्रमाम्रजम्बूत्थं पिबेत् क्वाथं पलोन्मितम् ।
सकृष्णमधुना कुर्य्यात् गण्डूषं शीतले स्थितः ॥२॥ महोदधिरसः ।
मृतताम्रस्य भागौ द्वौ भागैकं वङ्गभस्मकम् ।
यष्टिमधुरसैर्भाव्यं शुष्कं माषार्द्धकं शुभम् ।
सेव्यञ्चैवानुपानेन वक्ष्यमाणेन बुद्धिमान् ॥३॥
चन्दनं शारिवामुस्तं क्षुद्रैलानागकेशरम् ।
सर्वतुल्या तथा लाजा पचेत् षोड़शिकैर्जलैः ॥४॥
अर्द्धशेषं हरेत् क्वाथं सिताक्षौद्रयुतन्तु तत् ।
छर्दिं तृष्णां निहन्त्याशु रसोऽयं कुमुदेश्वरः ॥५॥ कुमुदेश्वरो रसः ।

इति तृष्णाधिकारः ।

---

अरोचकवत् पश्चाद्भवत्वात् तथा छर्द्यामयेऽपि अरुचेः सम्भवात् अरोचकानन्तरं छर्दिचिकित्सितमुच्यते । अजाजीत्यादि अजाजी जीरकं पथ्या हरीतकी ॥१॥

इति छर्दिचिकित्सा ।

---

छर्दिस्तृष्णोपद्रवात् छर्द्यनन्तरं तृष्णाचिकित्सामाह । कुमुदेश्वरे यष्टिमधुरसैः यष्टिमधुक्वाथैः ॥१—॥
चन्दनेत्यादौ शारिवा अनन्तमूलं क्षुद्रैला गुजरातीति ख्याता ॥४—५॥

इति तृष्णाधिकारः ।

## अथ मूर्च्छारोगचिकित्सा ।

कणामधुयुतं सूतं मूर्च्छायामनुशीलयेत् ।
शीतसेकावगाहादि सर्वं वा शीतलं भजेत् ।
सुधानिधिरसो नाम मदमूर्च्छाविनाशनः ॥१॥ सुधानिधिरसः ।

इति मूर्च्छाधिकारः ।

---

## अथ मदात्ययचिकित्सा ।

सचव्यहिङ्गुरुचकं धन्याकं विश्वदीप्यकम् ।
चूर्णं ससूतं मद्येन पीतं पानात्ययं जयेत् ॥१॥
सौवर्चलमजाज्यश्च वृक्षाम्लं साम्लवेतसम् ।
त्वगेला मरिचार्द्धांशं शर्करामधुयोजितम् ॥२॥
हितं लवणमष्टाङ्गमग्निसन्दीपनं परम् ।
मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम् ॥ ३॥ अष्टाङ्गलवणम्

इति मदात्ययाधिकारः ।

---

## अथ दाहचिकित्सा ।

सूतात् पञ्चार्कतसैकं कृत्वा पिण्डं सुशोभनम् ।
जम्बीरस्वरसैर्मर्द्यं सूततुल्यञ्च गन्धकम् ॥१॥

---

तृष्णायां मोहो भवतीत्यनन्तरं मोहचिकित्सामाह कणेत्यादि । सुधानिधिरसो हतमिति सूतभस्म ॥ १ ॥

इति मूर्च्छाधिकारः ।

---

मूर्च्छावत् मदात्ययस्यापि मद्यजन्यत्वात् मूर्च्छानन्तरं मदात्ययचिकित्सामाह सचव्येत्यादि । दीप्यकं यमानी सूतं भस्मसूतम् ॥ १ ॥
सौवर्चलेत्यादौ अजाजी जीरकं वृक्षाम्लं महार्द्रकम् ॥२—३॥

इति मदात्ययाधिकारः ।

नागवल्लीदलैः पिष्ट्वा ताम्रपालीं प्रलेपयेत् ।
प्रपुटेद् भूधरे यन्त्रे यावद् भस्मत्वमाप्नुयात् ॥२॥
द्विगुञ्जमार्द्रकद्रावैस्तूषणेन च योजयेत् ।
निहन्ति दाहसन्तापं मूर्च्छां पित्तसमुद्भवाम् ॥ ३ ॥

दाहान्तको रसः ।

इति दाहाधिकारः ।

---

## अथ उन्मादरोगचिकित्सा ।

त्रिदिनं कनकद्रावैर्महाराष्ट्रीद्रवैः पुनः ।
विषमुष्टिजलैः सूतं समुत्थाप्यार्कचक्रिकाम् ॥१॥
कृत्वा तप्तां सगन्धां तां युक्त्या बन्धनमाचरेत् ।
तत्समं कनकं वीजमभ्रकं गन्धकं विषम् ॥२॥
मर्दयेत् त्रिदिनं सर्वं वल्लमात्रं प्रयोजयेत् ।
दोषोन्मादं द्रुतं हन्ति भूतोन्मादं विशेषतः ॥ ३ ॥

उन्मादगजाङ्कुशो रसः ।

सूतायस्ताम्रमभ्रञ्च मुक्ता चापि समं समम् ।
सूतपादोत्तमं वज्रं शिला गन्धकतालकम् ॥४॥
तुत्थं रसाञ्जनं शुद्धमब्धिफेनं शिलाञ्जनम् ।

---

मदात्ययेऽपि दाहो भवति अतः मदात्ययानन्तरं दाहचिकित्सामाह सूतादि त्यादि । अर्कस्ताम्रम् ॥१—३॥

इति दाहाधिकारः ।

---

मदात्ययस्य उन्मादसदृशत्वेन तथा पूर्वोक्तरीत्या च यद्यपि मदात्ययानन्तरम् उन्माददाहावेव वक्तुमुचितौ तथापि सूचिकटाहन्यायेन दाहमभिधाय उन्माद चिकित्सामाह त्रिदिनमित्यादि । उन्मादगजाङ्कुशे महाराष्ट्री ब्रह्मयष्टि इत्यर्थः । विषमुष्टिः कुचिलेति ख्याता । अर्कचक्रिकां ताम्रचक्रिकाम् ॥१—३॥

पञ्चानां लवणानाञ्च प्रतिभागं रसोन्मितम् ॥५॥
भृङ्गराजचित्रवज्रीदुग्धेनापि विमर्दयेत् ।
दिनान्ते पिण्डिकां कृत्वा रुद्ध्वा गजपुटे पचेत् ॥६॥
भूताङ्कुशो रसो नाम नित्यं गुञ्जाद्वयं लिहेत् ।
आर्द्रकस्य रसेनापि भूतोन्मादनिवारणम् ॥७॥
पिप्पल्यान्तं पिबेच्चानु दशमूलकषायकम् ।
स्वेदयेत् कटुतुम्ब्या च तीक्ष्णं रूक्षञ्च वर्जयेत् ॥८॥
माहिषञ्च घृतं क्षीरं गुर्वन्नमपि भक्षयेत् ।
अभ्यङ्गः कटुतैलेन हितो भूताङ्कुशे रसे ॥९॥ भूताङ्कुशोरसः

शुद्धं मनःशिलाचूर्णं सैन्धवं कटुरोहिणी ।
वचाशिरीषवीजञ्च हिङ्गु च श्वेतसर्षपम् ॥१०॥
करञ्जवीजं त्रिकटु मलं पारावतस्य च ।
एतानि समभागानि गोमूत्रैर्वटिकां कुरु ॥११॥
गिरिमल्लीवीजसमां छायाशुष्कांश्च कारयेत् ।
प्रातःसन्ध्यानिशाकाले चक्षुषो रञ्जनं हितम् ॥१२॥
मधुरादिरसे चाञ्जनं रात्रावपि जलेन च ।
वटिकैका समाख्याता नाम्ना चोन्मादभञ्जिनी ।
चातुर्थकापस्मारहरा सर्वोन्मादविनाशिनी॥१३॥उन्मादभञ्जिनी

त्रिकत्रयसमायुक्तं जीवनीययुतं त्वयः ।
हन्त्यपस्मारमुन्मादं वातव्याधिं सुदुस्तरम् ॥१४॥

त्रिकत्रयादिलौहम् ।

त्रिकटु त्रिफला चैव गजपिप्पलिका तथा ।

---

भूताङ्कुशरसे समं समभित्येकभागसमं, वज्रं हीरकं तच्च एकभागापेक्षया ...दिकम् । तालादिकं प्रत्येकं भागैकम् ॥ ४—९ ॥

उन्मादभञ्जिन्यां कटुरोहिणी कटुकी, गिरिमल्लीवीजं कुटजवीजम् ॥१०—१३॥

विड़ङ्गञ्च देवदारु किरातं कटुकी तथा ॥१५॥
कण्टकारी च यष्टीन्द्रयवं चित्रकमेव च।
बला च पिप्पलीमूलं मूलञ्च वीरणस्य च ॥१६॥
शोभाञ्जनस्य वीजानि त्रिवृता चेन्द्रवारुणी।
वङ्गं रूप्यमभ्रकञ्च प्रवालं समभागिकम् ॥ १७ ॥
सर्वचूर्णसमं लौहं सलिलेन विमर्दयेत्।
उन्मादमपि भूतोत्थमुन्मादं वातजं तथा ॥ १८ ॥
अपस्मारं तथा कार्श्यं रक्तपित्तं सुदारुणम्।
नाशयेदविकल्पेन रसश्चोन्मादभञ्जनः॥१९॥ उन्मादभञ्जनोरसः

मृतसूतस्य भागौ द्वौ भागैकं हेमभस्मकम्।
शिला कस्तूरिका तालं प्रत्येकं हेमतुल्यकम् ॥ २० ॥
सर्वं खल्लतले क्षिप्त्वा कन्यया मर्दयेद्दिनम्।
एरण्डपत्रैरावेष्ट्य धान्यगर्भे दिनत्रयम् ॥ २१ ॥
संस्थाप्य च तदुद्धृत्य सर्वरोगेषु योजयेत्।
एतद्रसायनवरं त्रिफलामधुमर्दितम् ॥ २२ ॥
तत् यथाग्निबलं खादेत् बलीपलितनाशनम्।
अपस्मारे ज्वरे कासे शोषे मन्दानले क्षये ॥ २३ ॥
हस्तकम्पे शिरःकम्पे गात्रकम्पे विशेषतः।
वातपित्तसमुत्थांश्च कफजान् नाशयेत् ध्रुवम् ॥ २४ ॥
सर्वौषधिप्रयोगैर्ये व्याधयो न प्रशमिताः।
कर्मभिः पञ्चभिश्चैव मन्त्रौषधिप्रयोगतः ॥ २५ ॥
सर्वांस्तान् नाशयत्याशु वृत्रमिन्द्राशनिर्यथा।
चतुर्भुजरसोनाम महेशेन प्रकाशितः ॥२६॥ चतुर्भुजरसः

कृष्णधूस्तूरजैर्वीजैः पञ्चभिः पर्पटीरसः।

---

उन्मादभञ्जनरसे किरातं भूनिम्बम्, इन्द्रवारुणी गोरचककंटी ॥१४—१९॥

संप्रयोज्य: प्रशान्त्यर्थमुन्मादं भूतसम्भवम्॥२७॥ उन्मादपर्पटीरस:

इत्युन्मादाधिकार: ।

---

## अथ अपस्माररोगचिकित्सा ।

मृतसूतार्कलौहानां शिला गन्धकतालकम् ।
रसाञ्जनञ्च तुल्यांशं नरमूत्रेण मर्दयेत् ॥ १ ॥
तद्गोलं द्विगुणं गन्धं लौहपात्रे चणं पचेत् ।
पञ्चगुञ्जामितं खादेदपस्मारहरं परम् ॥ २ ॥
हिङ्गु सौवर्चलं व्योषं नरमूत्रेण सर्पिषा ।
कर्षमात्रं पिबेच्चानु रसोऽयं भूतभैरव: ॥३॥ भूतभैरव: ।
शङ्खपुष्पी वचा ब्राह्मी कुष्ठमेलारसै: सह ।
सूतभस्मप्रयोगोऽयं रक्तिकाद्वयमानत: ।
सर्वापस्मारनाशाय महादेवेन भाषित: ॥४॥ सूतभस्मप्रयोग: ।
मृतसूताभ्रकं तीक्ष्णं तारं ताप्यं विषं समम् ।
पद्मकेशरसंयुक्तं दिनैकं मर्दयेत् द्रवै: ॥ ५ ॥
स्नुह्यग्निविजयैरण्डवचानिष्पावशूरणै: ।
निर्गुण्ड्याश्च द्रवैर्मर्द्यं तद्गोलं पाचयेत् पुन: ॥ ६ ॥
कङ्गोलसर्षपोत्थेन तैलेन गन्धसंयुतम् ।
तत: पक्वा समुद्धृत्य चणमात्रा वटीकृता ॥ ७ ॥
इन्द्रब्रह्मवटीनाम भक्षयेदार्द्रकद्रवै: ।
दशमूलकषायञ्च कणायुक्तं पिबेदनु ।

---

उन्मादपर्पटीरसो पर्पटीरस इति चैवपर्पटीरस: ॥२०—२७॥

इति उन्मादचिकित्सा ।

---

तुल्यचिकित्सितत्वात् उन्मादानन्तरम् अपस्मारचिकित्सामाह मृतेत्यादि ।
भूतभैरवरसे हिङ्ग्वादि सर्वमनुपानं ज्ञेयम् ॥ १—३ ॥

अपस्मारं जयत्याशु यथा सूर्य्योदये तमः ॥८॥ इन्द्रब्रह्मवटी।

मृगनाभिः शिला नागकेशरं कलिद्रुमजम्।
पारदं गन्धकं जातीफलमेलालवङ्गकम् ॥ ९ ॥
प्रत्येकं कार्षिकञ्चैव श्लक्ष्णचूर्णञ्च कारयेत्।
जलेन मर्दयित्वा तु वटीं कुर्य्यात् द्विरत्तिकाम् ॥ १० ॥
यद्वा व्याध्यनुपानेन योजयेच्च चिकित्सकः।
अपस्मारे महाघोरे मूर्च्छारोगे च शस्यते ॥ ११ ॥
वातजान् सर्वरोगांश्च हन्यादचिरसेवनात्।
नातः परतरं श्रेष्ठमपस्मारेषु वर्त्तते।
ब्रह्मणा निर्मितः पूर्वं नाम्ना वातकुलान्तकः ॥ १२ ॥

वातकुलान्तकः।

इति अपस्माराधिकारः।

—००—

## अथ वातव्याधिचिकित्सा।

गन्धकात् द्विगुणं सूतं शुद्धं मृदग्निना क्षणम्।
पक्त्वाऽवतार्य्य संचूर्ण्य तुल्याभयासमन्वितम् ॥ १ ॥
सप्तगुञ्जामितं खादेत् वर्द्धयेच्च दिने दिने।
गुञ्जैकैकक्रमेणैव यावत् स्यादेकविंशतिः ॥ २ ॥
क्षीराज्यशर्कराभिश्च शाल्यन्नं पथ्यमाचरेत्।
कम्पवातप्रशान्त्यर्थं निर्वाते निवसेत् सदा।

---

इन्द्रब्रह्मवटिकायां तारं रौप्यम्। ताप्यं स्वर्णमाक्षिकम् ॥४—८॥

वातकुलान्तके मृगनाभि कस्तूरिका शिवा हरीतकी। कलिद्रुमजं बिभीतकफलम् ॥९—१२॥

इति अपस्माराधिकारः।

---

अपस्मारवत् वातविकाराणामाक्षेपकादीनां वेगकर्तृत्वात् तथाप्रायस्तुल्य-

द्विगुणाख्यरसो नाम त्रिपक्षात् कम्पवातजित् ॥ ३ ॥

द्विगुणाख्यो रसः ।

मृतं सूतं मृतं लौहं ताप्यं गन्धकतालकम् ।
पथ्या शृङ्गी विषं व्योषमग्निमन्यञ्च टङ्कनम् ॥४॥
तुल्यं खल्ले दिनं मर्द्यं मुण्डीनिर्गुण्डिकाद्रवैः ।
द्विगुञ्जां वटिकां खादेत् सर्ववातप्रशान्तये ॥ ५ ॥
कणाचूर्णयुतञ्चैव जिङ्गीक्काथं पिबेदनु ।
साध्यासाध्यं निहन्त्याशु रसो वातगजाङ्कुशः ॥ ६ ॥
सप्ताहाद् गृध्रसीं हन्ति दारुणं सान्निपातिकम् ।
क्रोष्टुकशीर्षवातञ्चाप्यवबाहुकसंज्ञकम् ॥ ७ ॥
मन्यास्तम्भमूरुस्तम्भं हनुस्तम्भं विनाशयेत् ।
पक्षाघातादिरोगेषु कथितः परमोत्तमः ॥ ८ ॥ वातगजाङ्कुशः ।
रसो वातशोषणोऽत्र युक्तोऽन्यो योगवाहिकः ।
सूताभ्रतीक्ष्णकान्तानि ताम्रतालकगन्धकम् ॥ ९ ॥
स्वर्णं शुण्ठी बला धान्यं कट्फलं चाभयाविषम् ।
पथ्या शृङ्गी पिप्पली च मरिचं टङ्कनं तथा ॥१०॥
तुल्यं खल्ले दिनं मर्द्यं मुण्डीनिर्गुण्डीजैर्द्रवैः ।
द्विगुञ्जां वटिकां खादेत् सर्ववातप्रशान्तये ।
साध्यासाध्यं निहन्त्याशु वृहद्वातगजाङ्कुशः ॥ ११ ॥

वृहद्वातगजाङ्कुशः ।

---

चिकित्सितत्वाच्च अपस्मारानन्तरं वातव्याधिचिकित्सामाह । इत्यत्र तुल्याभया रसगन्धकयोस्तुल्या हरीतकीत्यर्थः ॥१—३॥

वातगजाङ्कुशे तालकं हरितालं माक्षिकं स्वर्णमाक्षिकं शृङ्गी कर्कटशृङ्गी अग्निमन्थं गणिकारी । सकणजिङ्गिणीक्काथमनुपेयम् ॥४—८॥

वृहद्वातगजाङ्कुशे मुण्डी मुण्डिरी । महावातगजाङ्कुशे बला श्वेतवाट्यालम्; चपलाद्रावैरिति पिप्पलीक्काथैः ॥९—११॥

मृताभ्रतीक्ष्णताम्रञ्च सूततालकगन्धकम् ।
भार्गी शुण्ठी बलाधान्यं कट्फलं चाभयाविषम् ॥ १२ ॥
सम्पिष्य चपलाद्रावैः निष्ककां भक्षयेद्वटीम् ।
वातश्लेष्महरो ह्येष महवातगजाङ्कुशः ॥१३॥ महावातगजाङ्कुशः

सूतहाटकवज्राणि ताम्रं लौहञ्च माक्षिकम् ।
तालं नीलाञ्जनं तुत्थं सिन्धुफेनं समांशिकम् ॥ १४ ॥
पञ्चानां लवणानाञ्च भागैकं च विमर्दयेत् ।
वज्रीक्षीरैर्दिनैकन्तु रुद्धा तं भूधरे पचेत् ॥ १५ ॥
माषैकमार्द्रकद्रावैः लिह्यात् वातविनाशनम् ।
पिप्पलीमूलकक्वाथं सकृष्णमनुपाययेत् ।
सर्वान् वातविकारांश्च निहन्त्याक्षेपकादिकान् ॥ १६ ॥
वातनाशनो रसः ।

रसभागो भवेदेको द्विगुणो गन्धको मतः ।
त्रिगुणा त्रिफला ग्राह्या चतुर्भागन्तु चित्रकम् ॥१७॥
गुग्गुलोः पञ्चभागमेरण्डतलेन मर्दयेत् ।
क्षिप्त्वाऽत्र पूर्वकं चूर्णं पुनस्तेनैव मर्दयेत् ॥ १८ ॥
गुड़िकां कर्षमात्रान्तु भक्षयेत् प्रातरुत्थितः ।
नागरैरण्डमूलानां क्वाथं तदनु पाययेत् ॥ १९ ॥
अङ्गमेरण्डतैलेन स्वेदयेत् पृष्ठदेशतः ।
विरेके तेन सञ्जाते स्निग्धमुष्णञ्च भोजयेत् ।
वातारिसंज्ञको ह्येष रसो निर्वातसेवितः ॥२०॥ वातारिरसः ।

---

वातनाशनरसे हाटकं स्वर्णम्; वज्रं हीरकम्; तदभावे वैक्रान्तम्। नीलाञ्जनं रसाञ्जनम्; सिन्धुफेनं समुद्रफेनम् ॥१२—१६॥

वातारिरसे द्विगुणमिति एकभागापेक्षया द्विगुणम् एवं सर्वत्र। आदौ गुग्गुलुमेरण्डतैलेन संमर्द्य रसादिसर्वं निक्षिप्य पुनर्मर्दयेत्। अङ्गं स्वेदयेदिति मर्दयेत् ॥ १७—२० ॥

रसेन गन्धं द्विगुणं विमर्द्य वातारिनिर्गुण्डीरसैर्दिनैकम् ।
निवेशयेत्ताम्रमये पुटे तत्सर्वं मृदावेष्ट्य च बालुकाख्ये ॥२१॥
यन्त्रे पुटेत् गोमयचूर्णवह्नौ स्वभावशीते तु समुद्धरेत्तत् ।
निर्गुण्डिका वातहराग्नितोयैः संचूर्ण्य यत्नेन विभावयेत्तत्॥२२॥
रसोऽनिलारिः कथितोऽस्य वल्लमेरण्डतैलेन ससैन्धवेन ।
मरिचचूर्णेन ससर्पिषा वा निर्गुण्डीचित्रैश्च कटुत्रिकैर्वा ॥२३॥

अनिलारिरसः ।

वज्रमृताभ्रहेमार्कतीक्ष्णमुण्डं क्रमोत्तरम् ।
मरिचं मर्दयेदम्लवर्गेण दिवसत्रयम् ॥ २४ ॥
द्विक्षारं पञ्चलवणं मर्दितं स्यात् सङ्‌ समम् ।
ततो निर्गुण्डिकाद्रावैः मर्दयेत् दिवसत्रयम् ॥ २५ ॥
शुष्कमेतद्विचूर्ण्याथ विषञ्चास्याष्टमांशतः ।
टङ्कनं विषतुल्यांशं दत्त्वा तं जम्बीरजद्रवैः ॥ २६ ॥
भावयेत् दिनमेकन्तु रसोऽयं वातकण्टकः ।
दातव्यो वातरोगेषु सन्निपाते विशेषतः ॥ २७ ॥
द्विगुञ्जमार्द्रकद्रावैः घृतैर्वा वातरोगिणे ।
निर्गुण्डीमूलचूर्णन्तु महिषाक्षं च गुग्गुलुम् ॥ २८ ॥
समांशं मर्दयेदाज्ये तद्वटी कर्षसम्मिता ।
अनुयोज्या घृतैर्नित्यं स्निग्धमुष्णञ्च भोजयेत् ॥ २९ ॥
मण्डलं नाशयेत् सर्वं वातरोगं विशेषतः ।
सन्निपाते पिबेच्चानु तालमूलीकषायकम् ॥ ३० ॥

वातकण्टको रसः ।

---

अनिलारिरसे वातारिरसैः एरण्डस्य मूलरसैः । अग्निश्चित्रकः । तोयैरिति द्रवैः ॥२१—२३॥

वातकण्टकरसे तीक्ष्णं तीक्ष्णलौहं मुण्डं मुण्डलौहं क्रमोत्तरमिति यथोत्तरं ... द्विक्षारं यवक्षारं सर्जिक्षारञ्च । अष्टमांश इति एकभागापेक्षया ; निर्गुण्ड्यादि... कर्षपरिमितमनुयोज्यम् ॥२४—३०॥

पारदं गन्धकं लौहमभ्रकं विषमेव च।
समांशं मरिचस्याष्टौ टङ्गन्तु चतुर्गुणम् ॥ ३१ ॥
भृङ्गराजरसेनैव दातव्या पञ्चभावना।
तथा दाड़िमतोयेन वटीं कुर्य्यात् समाहितः।
निहन्ति वातजान् रोगान् भ्रमदाहपुरःसरान् ॥ ३२ ॥

लघ्वानन्दो रसः।

कर्षकं रससिन्दूरं तत्समं मृतमभ्रकम्।
तदर्द्धं मृतलौहञ्च स्वर्णं शाणं क्षिपेत् बुधः ॥ ३३ ॥
कन्यारसेन संमर्द्य गुञ्जामानां वटीं चरेत्।
अनुपानादिकं दद्यात् बुद्धा दोषबलाबलम् ॥ ३४ ॥
हन्ति श्लेष्मान्वितं वातं केवलं पित्तसंयुतम्।
हृल्लासमरुचिं दाहं वान्तिं भ्रान्तिं शिरोग्रहम् ॥ ३५ ॥
प्रमेहं कर्णनादञ्च ज्वरगद्गदमूकताम्।
बाधिर्य्यं गर्भिणीरोगमश्मरीं सूतिकामयम् ॥ ३६ ॥
प्रदरं सोमरोगञ्च यक्ष्माणं ज्वरमेव च।
बलवर्णाग्निदः सम्यक् कान्तिपुष्टिप्रसाधकः।
चिन्तामणिरसश्चायं चिन्तामणिरिवापरः ॥ ३७ ॥ चिन्तामणिरसः।

रसगन्धकलौहाभ्रं समं सूताङ्घ्रि हेम च।
सर्वं खल्लतले क्षिप्त्वा कन्याख्यरसमर्दितम् ॥ ३८ ॥
एरण्डपत्रैराविष्ट्य धान्यराशौ दिनत्रयम्।
संस्थाप्य च तदुद्धृत्य त्रिफलारससंयुतम् ॥ ३९ ॥
एतद्रसायनवरं सर्वरोगेषु योजयेत्।
तद्यथाग्निबलं खादेत् बलीपलितनाशनम् ॥ ४० ॥

---

लघ्वानन्दे मरिचस्याष्टावित्येकभागापेक्षया मरिचस्याष्टौ भागाः ॥२१—

चिन्तामणिरसे मृतलौहमित्यत्र कान्तलौहमिति केचित् पठन्ति ॥२२—

पौष्टिकं बल्यमायुष्यं पुत्रप्रसवकारकम्।
क्षयमेकादशविधं कासं पञ्चविधं तथा ॥ ४१ ॥
कुष्ठमेकादशविधं पाण्डुरोगान् प्रमेहकान्।
शूलं श्वासञ्च हिक्काञ्च मन्दाग्निञ्चाम्लपित्तकम् ॥ ४२ ॥
अपस्मारं महोन्मादं सर्वार्शांसि त्वगामयान्।
क्रमेण शीलितं हन्ति वृक्षमिन्द्राशनिर्यथा ॥ ४३ ॥
जगताञ्च हितार्थाय चतुर्मुखमुखोदितः।
सश्चतुर्मुखो नाम चतुर्मुख इवापरः ॥ ४४ ॥ चतुर्मुखो रसः।
पलं कृष्णाभ्रचूर्णस्य तदर्द्धौ रसगन्धकौ।
बला नागबलाभीरु विदारीकन्दमेव च ॥ ४५ ॥
कृष्णधूस्तूरनिचुलं गोक्षुरवृद्धदारयोः।
वीजं शक्राशनस्यापि जातीकोषफले तथा ॥ ४६ ॥
कर्पूरञ्चैव कर्षांशं श्लक्ष्णचूर्णं पृथक् पृथक्।
गृहीत्वा चाष्टमांशेन स्वर्णं पर्णरसेन च ॥ ४७ ॥
वटिकां स्विन्नचणकप्रमाणां कारयेद्भिषक्।
रसो लक्ष्मीविलासोऽयं पूर्ववत् गुणकारकः ॥ ४८ ॥

लक्ष्मीविलासो रसः।

सूताद् द्वयो घनवरानलविल्वभार्गी
तिक्ता कटुत्रयवरैः सवचैः समांशैः।
रोगेभसिंह इति वातकफामयघ्नः
सान्द्रोऽयमल्प पटुतो विहितो द्विगुञ्जः ॥ ४९ ॥

---

चतुर्मुखरसे रसगन्धकयोरप्राप्तौ कफप्रबले वा व्याधौ स्वर्णसिन्दूरं क्षिपन्ति वृद्धाः। सूताङ्घ्रिहेम च इति सूतात् पादिकं स्वर्णभस्म इत्यर्थः ॥३८—४४॥

लक्ष्मीविलासरसे तदर्द्धौ रसगन्धकाविति मिलितौ रसगन्धकौ तदर्द्धौ। बलादीनां प्रत्येकं कर्षांशः। अष्टमांशेन स्वर्णमिति कर्षमानापेक्षया च अष्टमांशम् ॥ ४५—४८ ॥

एतैः गुड़प्रस्थदितै रसवर्जितैः स्यात्
श्रीखण्डनाम गुड़िका विहिता द्विगुञ्जा ।
शैत्याद्यजीर्णकफवातभवान् विकारान्
हन्त्यार्द्रकेण सहिताप्यथ केवला वा ॥ ५० ॥

रोगिभसिंहश्रीखण्डवटी ।

सूतात् पञ्चार्कतश्चेकं कृत्वा पिण्डं सुगन्धकम् ।
सूतांशं नागवल्याश्च द्रवैः पिष्ट्वा प्रलेपयेत् ॥ ५१ ॥
ताम्रपत्रीं प्रलिप्तां तां रुद्ध्वा गजपुटे पचेत् ।
द्विगुञ्जन्मूषणेनार्द्रवपुर्वातं सकम्पकम् ।
निहन्ति दाहसन्तापमूर्च्छापित्तसमन्वितम् ॥५२॥ पिण्डीरसः ।

रसगन्धौ समौ शुद्धौ चाभया तालकं तथा ।
विषं कटुत्रिव्योषञ्च वोलजैपालकौ समौ ॥५३॥
भृङ्गराजरसैर्मर्द्यं स्नुह्यर्कस्वरसैस्तथा ।
गुञ्जाद्वयं भक्षयेच्च हृच्छूलं पार्श्वशूलकम् ॥५४॥
आमवाताढ्यवातादीन् कटिशूलञ्च नाशयेत् ।
अग्निञ्च कुरुते दीप्तं स्थौल्यञ्चाप्यपकर्षति ।
रसः कुञ्जविनोदोऽयं गहनानन्दभाषितः॥५५॥ कुञ्जविनोदरसः ।

हिमवन्ति हि गात्राणि रोगाणि स्फुरितानि च ।
शिरोऽक्षिवेदनालस्यं शीतवातस्य लक्षणम् ॥५६॥
रसेन गन्धं द्विगुणं प्रगृह्य पुनर्नवाग्निस्वरसैर्विभाव्य ।
पक्वार्कपत्रस्य रसेन पश्चाद्विपाचयेदष्टगुणेन यत्नात् ॥५७॥
रसार्द्धभागञ्च विषञ्च दत्त्वा विपाचयेदग्निजले क्षणं तत् ।

---

रोगिभसिंहे घन मुस्तकम् । वरा त्रिफला, अनलश्चित्रकः वेल्लं विड़ङ्गम्॥ ४९॥५०
पिण्डीरसे पारदगन्धकनागवल्लीरसैस्ताम्रपत्रीं प्रलिप्य गजपुटे पचेत् ॥५१॥५२॥
कुञ्जविनोदरसे वोलं गन्धवोलम् ॥५३—५५॥
शीतवातलक्षणमाह हिमवन्तीति ॥५६॥

शीतारिसंज्ञस्य रसायनस्य वल्लञ्च सार्द्धं मरिचार्द्रकेण।
मरीचचूर्णेन घृताप्लुतेन सेवेत मांसञ्च घृतञ्च पथ्यम् ॥५८॥

शीतारिरसः।

सूतमभ्रकसत्त्वञ्च कांस्यं शुल्वञ्च माक्षिकम्।
गन्धकं तालकं सर्वं भागोत्तरविवर्द्धितम् ॥५९॥
कज्जलीकृत्य तत्सर्वं वातारिस्नेहसंयुतम्।
सप्ताहं मर्दयित्वा तु गोलकीकृत्य यत्नतः ॥६०॥
निम्बुद्रवेण संपीड्य तिलकल्केन लेपयेत्।
अर्द्धाङ्गुलदलेनैव परिशोष्य प्रयत्नतः ॥६१॥
प्रपचेत् बालुकायन्त्रे द्वादशप्रहरं ततः।
जठरस्य रुजः सर्वास्तथा च मलविग्रहम् ॥६२॥
आध्मानकं तथानाहं विसूचीं वह्निमान्द्यकम्।
आमदोषमशेषञ्च गुल्मं छर्दिञ्च दुर्जराम् ॥६३॥
ग्रहणीं श्वासकासौ च क्रिमिरोगं विशेषतः।
हन्यात् सर्वाङ्गशूलञ्च मन्यास्तम्भं तथैव च ॥६४॥
ज्वरे चैवातिसारे च शूलरोगे त्रिदोषजे।
पथ्यं रोगानुसारेण देयमस्मिन् भिषग्वरैः।
श्रीमता नन्दीनाथेन वातविध्वंसिनो रसः॥६५॥वातविध्वंसिनोरसः

पलाशवीजोत्थरसेन सूतं गन्धेन युक्तं त्रिदिनं विमर्द्य।
सच्चीकृतं तद्विषतिन्दुवीजं संयोजयेदस्य कलाप्रमाणम्।
मासद्वयं निष्कमितं प्रयत्नात् अर्शांसि हन्त्याशु नियोजनीयम्॥६६

---

शीतारिरसे पक्वार्कपत्रं हरितवर्णं पक्वार्कपत्रं विपाचयेदष्टगुणेनेति रसगन्धकापेक्षया अष्टगुणेन पाचयेत् बालुकायन्त्रे मूषायां वा रसक्षयाधिकपाकः ॥५७॥५८॥

वातविध्वंसिरसे कोष्ठाश्रितवाते अत्र भागोत्तरविवर्द्धितमिति यथोत्तरमेकैकभागवर्द्धितमित्यर्थः। वातारि स्नेहसंयुतमिति च एरण्डतैलसंयुतम् ॥५९—६५॥

वातरक्तं तथा शोथमस्पर्शाख्यानिलामयम्।
वातवत् पित्तरोगेऽपि तत्र पित्तेन भावयेत्।
पलाशादिवटी ख्याता वातरोगकुलान्तिका॥६७॥ पलाशादिवटी

यष्टिधात्रीबलाद्राक्षा एलाचन्दनवालुकम्।
मधूकपुष्पं खर्जूरं दाड़िमं पेषयेत् समम् ॥६८॥
सर्वतुल्या सिता योज्या पलार्द्धं भक्षयेत् सदा।
दशसारवटी ख्याता सर्ववातविकारनुत्।
अथ दाड़िममित्यत्र गणमिच्छन्ति चापरे ॥६९॥ दशसारवटी

मृतगगनरसार्कं मुण्डतीक्ष्णं सताप्यं
सबलिसममिदं स्यात् यष्टितोयप्रपिष्टम्।
तदनुसलिलजातैर्वासकैर्गोस्तनीभिः
मृदितमनुविदारी वारिणा घस्रमेकम् ॥७०॥
घृतमधुसहितेयं निष्कमात्रा वटीति
क्षपयति गुरुवातं पित्तरोगं क्षयञ्च।
भ्रममदकफशोषान् दाहतृष्णासमुत्थान्
मलयजमिहपेयञ्चानुपेयं सचन्द्रम् ॥७१॥ गगनादिवटी।

शुद्धसूताभ्रताम्रायो हिङ्गुलं कार्षिकं समम्।
गन्धकश्चैकभागः स्यात् सर्वमेकत्र मर्दयेत् ॥७२॥
सप्तपर्णार्कस्नुक्क्षीरवासा वातारिवारिणा।
विषमुष्टिसमं सर्वं पेष्यं तद्गोलकीकृतम् ॥७३॥
विपचेत् वालुकायन्त्रे द्वियामान्ते समुद्धरेत्।
पिप्पलीविषसंयुक्तो रसः सर्वाङ्गसुन्दरः।

---

पलाशादिवटिकायां विषतिन्दुकवीजं कुचिला इति ख्याता। इयं पलाशादि वटी यदा पित्तरोगे प्रयोक्तव्या तदा पञ्चपित्तेषु भावयेत् ॥६६॥६७॥

गगनादिवटिकायां मुण्डं मुण्डलौहं तीक्ष्णं तीक्ष्णलौहं ताप्यं स्वर्णमाक्षिकम्। मलयजं श्वेतचन्दनं चन्द्रं कर्पूरम् ॥६८—७१॥

सर्ववातविकारघ्नः सर्वशूलनिसूदनः ॥७४॥ सर्वाङ्गसुन्दरो रसः ।

एकभागो रसस्य स्यात् शुद्धस्तालैकभागिकः ।
अष्टौ स्युर्विजयायाश्च गुड़िकां गुड़तश्चरेत् ॥७५॥
एकैकां भक्षयेत् प्रातश्छायायामुपवेशयेत् ।
तालकेश्वरनामायं रोगश्वासस्पर्शनाशनः ॥७६॥ तालकेश्वरः ।

हीरं सुवर्णं सुमृतञ्च तारमेषां समं तीक्ष्णरजश्चतुर्णाम्
समं मृताभ्रं रससिन्दूरञ्च निष्पिष्टतीक्ष्णस्य तथाश्मनो वा ॥७७॥
खल्ले द्रवेणैव कुमारिकाया गुञ्जाप्रमाणां वटिकां प्रकुर्य्यात्
त्रैलोक्यचिन्तामणिरेष नाम्ना संपूज्य सम्यक् गिरिजां दिनेशम् ।
हन्त्यामयान् योगशतैर्विवर्ज्यानथ प्रणाशाय मुनिप्रणीतः
अस्य प्रसादेन गदानशेषान् जरां विनिर्जित्य सुखं विभाति॥७८॥

स्निग्धे श्लेष्मण्यार्द्रकस्य रसेन पाययेत् सुधीः ।
शुष्के च माक्षिकेणैव पित्ते घृतसमायुतम् ॥७९॥
श्लेष्मणि मारुते सम्यग् दुष्टे च समतां गते ।
कणाचूर्णं क्षौद्रयुतं प्रमेहे दुग्धसंयुतम् ॥८०॥
बलवर्णाग्निजननः कासघ्नः कफवातजित् ।
आयुःपुष्टिकरो वृष्यः सर्वरोगनिसूदनः ॥८१॥

तारशब्देनात्र शुद्धमौक्तिकमेवोच्यते न तु रजतम्, हीरं स्वर्णं, सुशुद्धञ्च मौक्तिकमिति पाठान्तरदर्शनात् ।

त्रैलोक्यचिन्तामणिरसः ।

इति वातव्याध्यधिकारः ।

---

अथास्पर्शवातचिकित्सामाह एकभाग इत्यादि । रसस्येति भस्मसूतस्य गुड़िकां गुड़तु इति सर्वचूर्णापेक्षया गुड़स्य द्वैगुण्यम् । मात्रा चास्य तोलकैकपरिमिता ॥७२—७६॥

त्रैलोक्यचिन्तामणिरसे हीरं हीरकं तारं मौक्तिकम् । सममिति समभागं चतुर्णां समं मृताभ्रमिति एषां चतुर्णां समं भस्माभ्रं योज्यम् । रससिन्दूरञ्चभा

# अथ कफरोगचिकित्सा ।

रसस्य द्विगुणं गन्धं गन्धकात् द्विगुणं विषम् ।
विषात्तु द्विगुणं देयं चूर्णं त्रिकटुसम्भवम् ॥ १ ॥
रसतुल्या प्रदातव्या चाभया सविभीतकी ।
धात्रीपुष्करमूलञ्च चाजमोदाजगन्धिका ॥२॥
विड़ङ्गं कट्फलं चव्यं पञ्चैव लवणानि च ।
लवङ्गं त्रिवृता दन्ती सर्वमेकत्र चूर्णयेत् ॥ ३ ॥
भावयेत् सप्तधा रौद्रे स्वरसैः सुरसोद्भवैः ।
हन्ति सर्वं कफोद्भूतं व्याधिं कालानलो रसः ॥ ४ ॥

श्लेष्मकालानलो रसः

पारदं गन्धकं लौहं त्र्यूषणं जीरकद्वयम् ।
शृङ्गी शची यमानी च पौष्करञ्चार्द्रकं तथा ॥ ५ ॥
गैरिकं यावशूकञ्च कट्फलं गजपिप्पली ।
जातीकोषाजमोदा च वरा यासलवङ्गकम् ॥ ६ ॥
कणकारुणवीजानि कट्फलं चव्यकं तथा ।
प्रत्येकं तोलकञ्चैषां श्लक्ष्णचूर्णानि कारयेत् ॥ ७ ॥
पाषाणे विमले खल्ले घृष्टं पाषाणमुद्गरैः ।
विल्वमूलरसं दत्त्वा चार्द्रचित्रफलत्रिका ॥ ८ ॥
वासानिर्गुण्डीगणिका चेन्द्राशनं प्रचोदनी ।

---

तुल्यम् एतत् सर्वमेकीकृत्य लौहखल्ले पाषाणखल्ले वा कुमारिकारसे निष्पीड्य गुञ्जामात्रा वटिका कार्य्या ॥७७—८१॥

इति वातव्याधिचिकित्सा ।

---

दोषत्वसामान्यात् वातपित्तकफानामिति वातरोगचिकित्सामभिधाय इदानीं कफरोगचिकित्सामाह । रसस्येति द्विगुणं देयं चूर्णं त्रिकटु सम्भवमिति त्रिकटु चूर्णं मेलयित्वा विषात् द्विगुणं देयम् । अजगन्धिका वर्वरीति ख्याता ॥१—४॥

धूस्तूरं कृष्णजीरञ्च पारिभद्रकपिप्पली ॥ ९ ॥
एतेषाञ्च रसैर्मर्द्यमार्द्रकैश्च विभावयेत्।
उष्णतोयानुपानेन सर्वव्याधिं विनाशयेत् ॥ १० ॥
विंशतिं श्लैष्मिकान् रोगान् सन्निपातभवान् गदान्।
उदराष्टकदुर्नामश्वासमवातञ्च दारुणम् ॥ ११ ॥
पञ्च पाण्ड्वामयान् दोषान् क्रिमिं स्थौल्यमथो नृणाम्।
यथा शुष्केन्धने वह्निस्तथैवाग्निविवर्द्धनः॥१२॥श्लेष्मशैलेन्द्रो रसः।
हिङ्गुलसम्भवं सूतं शिलागन्धकटङ्कनम्।
ताम्रं वङ्गं तथाभ्रञ्च स्वर्णमाक्षिकतालकम् ॥१३॥
धूस्तूरं सैन्धवं कुष्ठं हिङ्गुपिप्पलीकट्फलम्।
दन्तीवीजं सोमराजी वनराजफलत्रिवृत् ॥ १४ ॥
वज्रीक्षीरेण संमर्द्य वटिकां कारयेद्भिषक्।
कलायपरिमाणान्तु खादेदेकां यथाबलम् ॥ १५ ॥
सन्निपातं निहन्त्याशु वृक्षमिन्द्राशनिर्यथा।
मदसिंहो यथारण्ये मृगाणां कुलनाशनः।
तथायं सर्वरोगाणां सद्यो नाशकरो महान् ॥ १६ ॥

महाश्लेष्मकालानलो रसः।

पलं वज्राभ्रचूर्णस्य तदर्द्धं गन्धकं भवेत्।
तदर्द्धं वङ्गभस्मापि तदर्द्धं पारदं तथा ॥ १७ ॥
तत्समं हरितालञ्च तदर्द्धं ताम्रभस्मकम्।
रससाम्यञ्च कर्पूरं जातीकोषफले तथा ॥ १८ ॥
वृद्धदारकवीजञ्च वीजं स्वर्णफलस्य च।
प्रत्येकं कार्षिकं भागं मृतस्वर्णञ्च शाणकम् ॥ १९ ॥

---

* श्लेष्मशैलेन्द्ररसे तूषणं त्रिकटु, यावशूकं यवक्षारं वरा त्रिफला यासी दुरालभा कनकवीजं धूस्तूरवीजम्। इन्द्राशनस्य त्रैलोक्यविजयायाः ॥५—१२॥

निष्पिष्य वटिका कार्य्या द्विगुञ्जाफलमानतः ।
निहन्ति सन्निपातोत्थान् गदान् घोरान् सुदारुणान् ॥२०॥
गलोत्थानन्त्रवृद्धिञ्च तथातिसारमेव च ।
कुष्ठमेकादशविधं प्रमेहान् विंशतिं तथा ॥ २१ ॥
श्लीपदं कफवातोत्थं चिरजं कुलजं तथा ।
नाड़ीव्रणं व्रणं घोरं गुदामयं भगन्दरम् ॥ २२ ॥
कासपीनसयक्ष्मार्शःस्थौल्यदौर्गन्ध्यरक्तनुत् ।
श्वासवातं सर्वरूपं जिह्वास्तम्भं गलग्रहम् ॥ २३ ॥
उदरं कर्णनासाक्षिमुखवैजात्यमेव च ।
सर्वशूलं शिरःशूलं स्त्रीरोगञ्च विनाशयेत् ॥ २४ ॥
वटिकां प्रातरेकैकां खादेन्नित्यं यथाबलम् ।
अनुपानमिह प्रोक्तं मांसं पिष्टं पयो दधि ॥ २५ ॥
वारिभक्तं सुरासीधुसेवनात् कामरूपधृक् ।
वृद्धोऽपि तरुणस्पर्द्धी न च शुक्रक्षयो भवेत् ॥ २६ ॥
न च लिङ्गस्य शैथिल्यं न केशा यान्ति पक्कताम् ।
नित्यं गच्छेत् शतं स्त्रीणां मत्तवारणविक्रमः ॥ २७ ॥
द्विलक्षयोजनी दृष्टिर्जायते पौष्टिकस्तथा ।
प्रोक्तः प्रयोगराजोऽयं नारदेन महात्मना ॥ २८ ॥
रसो लक्ष्मीविलासोऽयं वासुदेवो जगत्पतिः ।
प्रसादादस्य भगवान् लक्षनारीषु वल्लभः ॥ २९ ॥

महालक्ष्मीविलासः ।

टङ्कनं मागधीशृङ्गं वत्सनाभं समं समम् ।
आर्द्रकस्य रसेनापि भावयेद्दिवसत्रयम् ॥ ३० ॥
गुञ्जामात्रं प्रदातव्य मार्द्रकस्य रसेन वै ।

---

महालक्ष्मीविलासे स्वर्णफलस्य धूस्तूरफलस्य ॥१३—२९॥

पीनसं श्वासकासञ्च गलरोगं गलग्रहम् ॥३१॥
दन्तरोगं कर्णरोगं नेत्ररोगं सुदारुणम् ।
सन्निपातं निहन्त्याशु कफकेतुरसोत्तमः ॥३२॥ कफकेतुरसः ।
हिङ्गुलेन्द्रयवं टङ्कं त्रैलोक्यबीजमेव च ।
मरिचञ्च समं सर्वं त्रिभागं रससिन्दूरम् ॥ ३३ ॥
आर्द्रकस्य रसेनैव मर्दयेत् याममात्रकम् ।
चणकाभा वटी कार्य्या कफरोगप्रशान्तये ।
कफरोगं निहन्त्याशु भास्करस्तिमिरं यथा ॥ ३४ ॥
कफचिन्तामणिरसः ।

इति कफरोगाधिकारः ।

---

## अथ पित्तरोगाधिकारः ।

गुडूचीसारसंयुक्तं त्रिकत्रययुतं त्वयः ।
वातरक्तं निहन्त्याशु सर्ववातहरं परम् ॥१॥ गुडूच्यादिलौहम् ।
धात्रीचूर्णस्याष्टौ पलानि चत्वारि लौहचूर्णस्य ।
यष्टीमधूकरजश्च द्विपलं दद्यात् पटे घृष्टम् ॥ २ ॥
धात्र्याश्च क्वाथेन तच्चूर्णं भाव्यञ्च सप्ताहम् ।
चण्डातपेन संशुष्कं भूयः पिष्टं घटे स्थितम् ॥ ३ ॥

---

कफकेतुरसे मागधी पिप्पली ॥३०—३२॥
कफचिन्तामणिरसे त्रैलोक्यविजयाबीजं शक्राशनबीजम् ॥३३॥३४॥

इति कफरोगचिकित्सा ।

---

प्रागुक्तरीत्या कफरोगानन्तरं पित्तरोगचिकित्सामाह गुडूचीत्यादि । गुडूचीसारं गुडूचीसत्त्वम् अत्र सर्वसमं लौहं प्रदेयम् ॥ १ ॥

घृतेन मधुना युक्तं भोजनाद्यन्तमध्यतः ।
त्रीन् वारान् भक्षयेन्नित्यं पथ्यं दोषानुबन्धतः ॥ ४ ॥
भक्तस्यादौ नाशयेच्च दोषान् पित्तकृतानपि ।
मध्ये चानाहविष्टब्धं तथान्ते चाग्निमान्द्यताम् ।
रक्तपित्तसमुद्भूतान् रोगान् हन्ति न संशयः ॥५॥ धात्रीलौहम् ।

जातीकोषफले मांसी कुष्ठं तालीशपत्रकम् ।
माक्षिकं मृतलौहञ्च अभ्रं दिव्यं समांशिकम् ॥६॥
सर्वतुल्यं मृतं तारं समं निष्पिष्य वारिणा ।
द्विगुञ्जाभा वटी कार्या पित्तरोगविनाशिनी ॥ ७ ॥
कोष्ठाश्रितञ्च यत् पित्तं शाखाश्रितमथापि वा ।
शूलञ्चैवाम्लपित्तञ्च पाण्डुरोगं हलीमकम् ॥ ८ ॥
दुर्नामं भ्रान्तिवान्तिञ्च क्षिप्रमेव विनाशयेत् ।
रसः पित्तान्तको ह्येष काशीराजेन भाषितः ॥९॥

पित्तान्तको रसः ।

यद्यत्र माक्षिकं त्यक्त्वा सुवर्णमपि दीयते ।
महापित्तान्तको नाम सर्वपित्तविनाशनः ॥१०॥

महापित्तान्तको रसः ।

इति पित्तरोगचिकित्सा ।

---

पित्तान्तकरसे फलं जातीफलं तारं रौप्यम् ॥२—१०॥

इति पित्तरोगचिकित्सा ।

## अथ वातरक्तचिकित्सा ।

विशुद्धलाङ्गलीमूलत्रिकटु त्रिफलैस्तथा ।
द्राक्षा गुग्गुलुभिस्तुल्यं लौहचूर्णं नियोजयेत् ॥१॥
मातुलुङ्गरसेनैव त्रिफलाया रसेन च ।
विमृद्य यत्नतः पश्चात् गुड़िकां कोलसम्मिताम् ॥२॥
भक्षयेत् मधुना सार्द्धं शृणु कुर्वन्ति यान् गुणान् ।
आजानुस्फुटितं घोरं सर्वाङ्गस्फुटितं तथा ।
तत् सर्वं नाशयत्याशु साध्यासाध्यञ्च शोणितम् ॥३॥

लाङ्गलाद्यं लौहम् ।

गन्धकं पारदं लौहं शिला तालं घनं तथा ।
शिलाजतु पुरं शुद्धं समभागं विचूर्णयेत् ॥४॥
श्वेतापराजिता दार्वी वागुजी चित्रकं तथा ।
पुनर्नवा देवकाष्ठत्रिफलाव्योषवेल्लकम् ॥५॥
चूर्णमेषां पृथक् तुल्यं सवमेकत्र कारयेत् ।
त्रिफला भृङ्गराजस्य रसेनैव त्रिधा त्रिधा ॥६॥
भावयेत् भक्षयेत् पश्चात् चणमात्रं दिने दिने ।
ततोऽनुपानं निम्बस्य पत्रं पुष्पं त्वचं समम् ॥७॥
शाणमात्रं घृतैः कुर्य्यात् सर्ववातविकारनुत् ।
वातरक्तं महाघोरं गम्भीरं सर्वजञ्च यत् ।
सर्वोपद्रवसंयुक्तं साध्यासाध्यं निहन्त्यलम् ॥८॥ वातरक्तान्तको रसः

---

पित्तजनितरक्तदुष्टिसाधर्म्यात् पित्तरोगानन्तरं वातरक्तचिकित्सामाह । लाङ्गलादि लौहे सर्वचूर्णसमं लौहम् ॥१—३॥

वातरक्तान्तकरसे घनमभ्रम् । पुरं गुग्गुलुः । वागुजी सोमराजी । चणमेषां पृथक् तुल्यमिति प्रत्येकं पारदसममित्यर्थः ॥४—८॥

हरितालं पलं शुद्धं तथा कर्षं विषस्य च।
श्वेताङ्कोठरसेनैव द्वयमेकत्र खल्लयेत् ॥९॥
पलाशभस्म द्विपलं निधाय स्थालिकोपरि।
तद्भस्मोपरि तालस्य गोलकं स्थापयेत् सुधीः ॥१०॥
तस्योपर्य्यपामार्गभस्म दद्यात् पलत्रयम्।
स्थालीमुखे शरावं च दद्यात् यत्नेन लेपयेत् ॥११॥
लेपयित्वा ततश्चुल्लयामहोरात्रं पचेत् भिषक्।
ततस्तु जायते भस्म शुद्धकर्पूरसन्निभम् ॥१२॥
गुञ्जात्रयं ततो भक्ष्यमनुपानविशेषतः।
वातरक्तञ्च कुष्ठञ्च दद्रुविस्फोटकापचीम् ॥१३॥
विचर्चिकां चर्मदलं वातरक्तञ्च शोणितम्।
रक्तपित्तं तथा शोथं गलत्कुष्ठं विनाशयेत्।
हृल्लासकं तथा शूलमग्निमान्द्यमरोचकम् ॥१४॥तालभस्म।
तथा सिद्धेन तालेन गन्धतुल्येन मेलयेत्।
द्वयोस्तुल्यं जीर्णताम्रं बालुकायन्त्रगं पचेत् ॥१५॥
अयं तालेश्वरो नाम रसः परमदुर्लभः।
हन्यात् कुष्ठानि सर्वाणि वातरक्तमथापि च ॥१६॥
शूलमष्टविधं श्वित्रं रसस्तालेश्वरो महान् ॥१७॥

महातालेश्वरो रसः।

रसात् दश विषात् पञ्च गन्धकात् दश शोधितात्।
तुत्थात् दश पलाशस्य वीजेभ्यः पञ्च कारयेत् ॥१८॥
क्षुद्राश्वमारधूस्तूरकरहाटकनीलोतः।
दशकं दशकं कुर्य्यात् शोषयित्वा जटात्वचः ॥१९॥
दशकं दशकं दत्त्वा कुचिलात् दश नूतनात्।
भल्लातकाच्च दशकं चूर्णयित्वा भिषक् ततः ॥२०॥
सुदिवसे बलिं दत्त्वा वैद्यः पूजापरायणः।

रक्तिकाद्वितयं दद्यात् सहते यदि वा त्रयम् ॥२१॥
वातरक्तं ज्वरं कुष्ठं खरस्पर्शमसौख्यदम् ।
आजानुस्फुटितं हन्ति विषजं वाखिनिःसृतम् ॥२२॥
कुष्ठमष्टादशविधमग्निमान्द्यमरोचकम् ।
विश्वेश्वरो रसो नाम विश्वनाथेन भाषितः ॥२३॥विश्वेश्वरो रसः
वक्ष्यते कुष्ठरोगे यदौषधं भिषजां वरैः ।
वातरक्ते प्रयुञ्जीत कुर्य्याच्च रक्तमोक्षणम् ॥२४॥

इति वातरक्ताधिकारः ।

## ऊरुस्तम्भाधिकारः ।

निष्कत्रयं शुद्धसूतं निष्कद्वादश गन्धकम् ।
गुञ्जावीजञ्च षड्निष्कं जयन्ती निम्बवीजकम् ॥१॥
प्रत्येकं निष्कमात्रन्तु निष्कं जैपालवीजकम् ।
जयाजम्बीरधूस्तूरकाकमाचीद्रवैर्दिनम् ॥२॥
भावयित्वा वटीं कुर्य्यात् चतुर्गुञ्जाप्रमाणतः ।
गुञ्जाभद्ररसो नाम हिङ्गुसैन्धवसंयुतः ।
शमयत्युल्वणं दुःखमूरुस्तम्भं सुदारुणम् ॥३॥गुञ्जाभद्ररसः ।
शिलाजतु गुग्गुलुं वा पिप्पलीमथ नागरम् ।
ऊरुस्तम्भे पिबेत् मूत्रैर्दशमूलीरसेन वा ॥४॥
प्लीहाधिकारे कथितं रसेन्द्रं वारिशोषणम् ।
ऊरुस्तम्भे प्रयुञ्जीत चान्यद्वा योगवाहिकम् ॥५॥

इति ऊरुस्तम्भाधिकारः ।

---

विश्वेश्वररसे चुद्रा कण्टकारी । अश्वमारः, करवीरः, करहाटः हाडजुडेति ख्याता लता ॥९—२४॥

इति वातरक्ताधिकारः ।

## अथ आमवाताधिकारः ।

रसगन्धकलौहाभ्रं तुल्यं टङ्कनसैन्धवम् ।
समभागं विचूर्ण्याथ चूर्णाद्द्विगुणगुग्गुलुम् ॥१॥
गुग्गुलोः पादिकं देयं त्रिवृतामूलवल्कलम् ।
तत्समं चित्रकं देयं घृतेन परिमर्दयेत् ॥२॥
खादेत् माषद्वयञ्चास्य त्रिफलाचूर्णयोगतः ।
आमवातारि वटिका पाचिका भेदिका मता ॥३॥
आमवातं निहन्त्याशु गुल्मशूलोदराणि च ।
यकृत्प्लीहोदराष्ठीलाकामलापाण्डुरोचकान् ॥४॥
ग्रन्थिशूलं शिरःशूलं वातरोगञ्च गृध्रसीम् ।
गलगण्डं गण्डमालां क्रिमिकुष्ठभगन्दरान् ॥५॥
विद्रधिमन्त्रवृद्धिञ्च अर्शांसि गुदजानि च ।
आमवातारि वटिका पुरेशानेन चोदिता ॥६॥

आमवातारिवटिका ।

रसगन्धौ वरावह्नि गुग्गुलुः क्रमवर्द्धितः ।
एतदेरण्डतैलेन मर्दयेदतिचिक्कणम् ॥७॥
कर्षोऽस्यैरण्डतैलेन हन्त्युष्णजलपायिनः ।
आमवातमतीव्रोग्रं दुग्धं मुद्गादि वर्जयेत् ॥८॥

अपरा आमवातारिवटिका ।

---

आवृतवातसाधर्म्यात् वातरक्तानन्तरम् ऊरुस्तम्भचिकित्सामाह । गुञ्जाभद्रेति गुञ्जावीजं श्वेतगुञ्जावीजम् ॥१—५॥

इति ऊरुस्तम्भाधिकारः ।

---

आमवातजन्यत्वसामान्यात् ऊरुस्तम्भानन्तरं आमवातचिकित्सामाह । आमवातारिवटिकायां चूर्णात् द्विगुणगुग्गुलुं इति गुग्गुलोः सर्वचूर्णात् द्वैगुण्यम् ॥१—६॥

शुद्धगन्धं पलार्द्धञ्च मृतताम्रञ्च तत् समम् ।
ताम्रार्द्धं पारदं शुद्धं रसतुल्यं मृतायसम् ॥९॥
सर्वं पञ्चाङ्गुलेनैव भावयेच्च पुनः पुनः ।
संचूर्ण्य पञ्च कौलत्थैः क्वाथैः सर्वं विभावयेत् ॥१०॥
रौद्रे विंशतिवारांश्च गुडूचीनां रसैर्दश ।
भृष्टटङ्कनचूर्णेन तुल्येन सह मेलयेत् ॥११॥
टङ्कनार्द्धं विड़ं देयं मरिचं विड़तुल्यकम् ।
तिन्तिड़ीक्षारतुल्यञ्च सूततुल्यञ्च दन्तिकम् ॥१२॥
त्रिकटु त्रिफलञ्चैव लवङ्गं चार्द्धभागिकम् ।
आमवातेश्वरो नाम विष्णुना परिकीर्त्तितः ॥१३॥
महाग्निकारको ह्येष आमवातान्तको मतः ।
स्थूलानां कर्षणः श्रेष्ठः कृशानां स्थौल्यकारकः ॥१४॥
अनुपानविशेषेण सर्वरोगविनाशनः ।
अनेन सदृशो नास्ति वह्निदीप्तिकरो महान् ।
गुल्मार्शोग्रहणीदोषशोथपाण्डुरुजापहः ॥१५॥

आमवातेश्वरो रसः ।

वृद्धदारत्रिवृद्दन्तीगजपिप्पलीमानकैः ।
त्रिकत्रयसमायुक्तैरामवातात्मकं त्वयः ।
सर्वानेव गदान् हन्ति केशरी करिणो यथा ॥१६॥

वृद्धदाराद्यं लौहम् ।

शिवाविभीतामलकीफलानां प्रत्येकशो मुष्टिचतुष्टयञ्च ।

---

आमवातेश्वररसे गन्धादि सर्वं पञ्चाङ्गुलरस इति एरण्डमूलरसे पुनः पुनः इति सप्तवारं भावयेत् ततः संचूर्ण्य पञ्चकौलत्थक्वाथैः विंशतिवारान् भावयेत् । ततः टङ्कनादिसर्वं योज्यम् ॥ ७—१५ ॥

वृद्धदारादिलौहे त्रिवृदिति त्रिवृन्मूलम् । मानकन्दं पुराणं ग्राह्यम् अत्र सर्वसमं लौहं प्रदेयम् ॥ १६ ॥

तोयाढ़के तत् क्वथितं विधाय पादावशेषे त्ववतारणीयम् ॥१७॥
एरण्डतैलं द्विपलं निधाय पिचुत्रयं गन्धकनामकस्य।
पचेत् पुरस्यात्र पलद्वयञ्च पाकावशेषे च विचूर्ण्य दद्यात् ॥१८॥
रास्ना विड़ङ्गं मरिचं कणा च दन्तीजटा नागरदेवदारु।
प्रत्येकशः कोलमितं तथैषां विचूर्ण्य निक्षिप्य नियोजयेच्च ॥१९॥

आमवाते कटीशूले गृध्रसीक्रोष्टुशीर्षके।
न चान्यदस्ति भैषज्यं यथायं गुग्गुलुः स्मृतः ॥२०॥

शिवागुग्गुलुः।

शुण्ठीचूर्णस्य प्रस्थैकं यमान्याश्च पलाष्टकम्।
जीरकस्य पले द्वे च धन्याकञ्च पलद्वयम् ॥२१॥
पलैकं शतपुष्पाया लवङ्गस्य पलं तथा।
टङ्गनस्य पलं भृष्टं मरिचस्य पलानि च ॥२२॥
त्रिवृतात्रिफलाक्षारपिप्पलीनां पलं तथा।
शठ्येला तेजपत्रञ्च चविकानां पलं तथा ॥२३॥
अभ्रं लौहं तथा वङ्गं प्रत्येकञ्च पलं पलम्।
एतेषां सर्वचूर्णानां खण्डं दद्यात् गुणत्रयम् ॥२४॥
घृतेन मधुना मिश्रं कर्षमात्रं तु मोदकम्।
एकैकं भक्षयेत् प्रातः घृतञ्चानुपिबेत् पयः ॥२५॥
शूलघ्नो रक्तपित्तघ्नश्चाम्लपित्तविनाशनः।
आमवातकुलध्वंसी केशरी विधिनिर्मितः ॥२६॥

आमवातगजसिंहमोदकः।

---

शिवागुग्गुलौ शिवा हरीतकी, मुष्टिचतुष्टयमित्यर्द्धशरावं, पिचुत्रयमिति तोलकषट्कम्। पुरस्य गुग्गुलोः। प्रत्येकशः कोलमिति प्रत्येकं तोलकमितम् ॥ १७—२० ॥

आमवातगजसिंहमोदके आदौ खण्डं किञ्चिज्जलञ्च संमिश्य मृद्वग्निसन्तापे

रामवाणो रसो देयो योगवाहिरसेन्द्रकाः ।
आमवाते विधीयन्ते सानुपानैः प्रयत्नतः ॥२७॥

इति आमवाताधिकारः ।

---

## अथ शूलरोगचिकित्सा ।

मधुकं त्रिफलाचूर्णं मयोरजः समं लिहन् ।
मधुसर्पिर्युतं सम्यक् गव्यक्षीरं पिबेदनु ॥१॥
छर्दिं सतिमिरं शूलमम्लपित्तं ज्वरारुचिम् ।
मूत्रकृच्छ्रं तथा मेहं हन्यादेतन्न संशयः ॥२॥ सप्तामृतलौहम् ।
तीक्ष्णायश्चूर्णसंयुक्तं त्रिफलाचूर्णमुत्तमम् ।
नीरेण पाययेत् धीमान् सद्यः शूलनिवारणम् ॥३॥ त्रिफलालौहम्
अभ्रं ताम्रं रसं लौहं गन्धकं संस्कृतं पलम् ।
सर्वमेतत् समाहृत्य यत्नतः कुशलो भिषक् ॥४॥
आज्ये पले द्वादशके दुग्धे वत्सरसंख्यके ।
पक्त्वा तत्र क्षिपेत् चूर्णं सुपूतं घनवाससा ॥५॥
विड़ङ्गत्रिफलावह्नित्रिकटूनां तथैव च ।
पिष्ट्वा पलोन्मितानेतानथ संमिश्रितान् नयेत् ॥६॥
ततः पिष्ट्वा शुभे भाण्डे स्थापयेच्च विचक्षणः ।
आत्मनः शोभने चाह्नि पूजयित्वा रविं गुरुम् ॥७॥
घृतेन मधुनालोड्य भक्षयेत् माषकादिकम् ।

---

उष्णीकृतं तत्चूर्णादिसर्वं प्रक्षिप्य मोदकवत् पचेत् । घृतमधुनी च प्रक्षेप्ये ॥२१॥२७॥

इति आमवाताधिकारः ।

---

आमवाते शूलं भवति इति अनन्तरं शूलचिकित्सामाह मधुकमित्यादि । तुल्यभागमयो रज इति सर्वद्रव्यसमं लौहमित्यर्थः ॥ १ ॥ २ ॥

त्रिफलालौहे त्रिफलाचूर्णसमं लौहम् ॥ ३ ॥

अष्टौ माषान् क्रमेणैव वर्द्धयेच्च समाहितः ॥८॥
अनुपानं प्रयोक्तव्यं नारिकेलजलं पयः।
जीर्णे लोहितशाल्यन्नं मुद्गमांसरसं तथा ॥९॥
भक्षयेत् घृतसंयुक्तं सद्यःशूलात् विमुच्यते।
हृच्छूलं पार्श्वशूलञ्च सामवातं कटिग्रहम्।
गुल्मशूलं शिरःशूलं योगेनानेन नाशयेत् ॥१०॥ चतुःसमलौहम्
मृतसूताभ्रकं चाम्लवेतसं ताम्रगन्धकम्।
विषं फलत्रयाचूर्णं तुल्यं मर्द्यं दिनावधि ॥११॥
जयन्ती मुण्डिरी वासा बृहती च गुडूचिका।
महाराष्ट्री जम्बुरसैस्तथा नीलोत्पलस्य च ॥ १२ ॥
पलद्वावैर्दिनं भाव्यं ततः संशोष्य यत्नतः।
अर्द्धांशं पञ्चलवणं दत्त्वार्द्रकरसेन च ॥१३॥
दिनं पेष्यं ततः कुर्य्यात् वटिकां चणसम्मिताम्।
प्रातर्मध्याह्ने रात्रौ च भक्षयेत् वटिकात्रयम् ॥१४॥
माषेक्षुपिष्टगुर्वन्नं गोपयश्च हितं तथा।
सेवेत वातशूलार्त्तो रसं पञ्चात्मकं शुभम् ॥१५॥

पञ्चात्मको रसः।

कुड़वं शुद्धमण्डूरं यवञ्च कुड़वं तथा।
पाकार्थञ्च जलप्रस्थं चतुर्भागावशेषितम् ॥१६॥
शतावरीरसस्याष्टा वामलक्या रसस्य च।
तथा दधिपयो भूमिकूष्माण्डस्य चतुःपलम् ॥१७॥

---

चतुःसमलौहे अभ्रादिलौहान्तं द्रव्यचतुष्कं प्रत्येकं पलम्। दुग्धे वत्सरसङ्ख्यक इति द्वादशपले दुग्धे। विड़ङ्गादीनामष्टद्रव्याणां चूर्णं मेलयित्वा पलं पाके निष्पन्ने प्रक्षिपेत् ॥४—१०॥

पञ्चात्मकरसे महाराष्ट्री ब्रह्मयष्टि, अर्द्धांशं पञ्चलवणमिति, सर्वद्रव्यापेक्षया मिलितं पञ्चलवणमर्द्धांशम् ॥११—१५॥

चतुःपलमिक्षुरसं दद्यात् तत्र विचक्षणः।
प्रक्षिपेत् जीरकं धान्यं त्रिजातं करिपिप्पली ॥१८॥
मुस्तं हरीतकी चैव अभ्रं लौहं कटुत्रयम्।
रेणुका त्रिफला चैव तालीशं स्वर्णकेशरम् ॥१९॥
कटुकं मधुकं रास्ना चाश्वगन्धा च चन्दनम्।
एतेषां कार्षिकं भागं चूर्णयित्वा विनिक्षिपेत् ॥२०॥
भोजनाद्यवसाने च मध्ये चैव समाहितः।
तोलैकं भक्षयेत् नित्यमनुपानं पयस्तथा ॥२१॥
शूलमष्टविधं हन्ति साध्यासाध्यमथापि वा।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥२२॥
परिणामसमुत्थञ्च अन्नद्रवभवं तथा।
सर्वशूलहरं श्रेष्ठं धात्रीलौहमिदं शुभम् ॥२३॥ धात्रीलौहम्
कर्षैकं कान्तलौहस्य शुद्धमभ्रं पलं तथा।
सितायाश्च पलञ्चैकं मधुसर्पिस्तथैव च ॥२४॥
सर्वमेकीकृतं पात्रे लौहदण्डेन मर्दयेत्।
त्रिकटु त्रिफला मुस्तं विड़ङ्गं चव्यचित्रकम् ॥२५॥
प्रत्येकं तोलकं मानं चूर्णितं तत्र दापयेत्।
भक्षयेत् प्रातरुत्थाय शिशिराम्बुनुपानतः ॥२६॥
सर्वदोषभवं शूलं कुक्षिशूलञ्च यत् भवेत्।
हृच्छूलं पार्श्वशूलञ्च अम्लपित्तञ्च नाशयेत् ॥२७॥

---

धात्रीलौहे कुड़वपरिमितयवस्य क्वाथे मण्डूरं शतावरीरसादीन् च प्रक्षिप्य पचेत्। पाकशेषे जीरकादिचूर्णं प्रक्षेप्यम्। त्रिजातं त्रिसुगन्धि। स्वर्णकेशरं नागकेशरम् ॥१९—२३॥

विद्याधराभ्रे विड़ङ्गादिकटुत्रयान्तानां द्वादशद्रव्याणां प्रत्येकं पिचुः कर्षः उपलक्षणात् पलं वा यद्वायससानि शिवाटिकाया इति यद्वा लौहस्य चत्वारि

अर्शांसि ग्रहणीदोषं प्रमेहांश्च विसूचिकाम्।
शूलराजमिदं लौहं हरेण परिनिर्मितम् ॥२८॥ शूलराजलौहम्

विड़ङ्गमुस्तत्रिफला गुडूची दन्ती त्रिवृद्वह्निकटुत्रयञ्च।
प्रत्येकमेषां पिचुभागचूर्णं पलानि चत्वार्य्ययसो मलस्य ॥२९॥
गोमूत्रशुद्धस्य पुरातनस्य यद्वायसस्तानि शिवाटिकायाः।
कृष्णाभ्रचूर्णस्य पलं विशुद्धं निश्चन्द्रकं शुद्धमतीव सूतात् ॥३०॥
पादोनकर्षं स्वरसेन खल्ले शिलातले थानकुनीदलस्य।
संमर्द्य पश्चादतिशुद्धगन्धपाषाणचूर्णेन पिचून्मितेन ॥३१॥
युक्त्या ततः पूर्वरजांसि दत्त्वा सर्पिर्मधुभ्यामवमर्द्य यत्नात्।
निधापयेत् स्निग्धविशुद्धभाण्डे ततः प्रयोज्योऽस्य रसायनस्य॥३२॥
प्राङ्माषको वाप्यथवा द्वितीयो गव्यं पयो वा शिशिरं जलं वा।
पिबेदयं योगवरः प्रभूतकालप्रनष्टानलदीपकश्च ॥३३॥
रोगं निहन्यात् परिणामशूलं शूलं तथान्नद्रवसंज्ञकञ्च
यक्ष्माम्लपित्तं ग्रहणीं प्रवृद्धां जीर्णज्वरं लोहितपित्तकञ्च।
न सन्ति ते यान् न निहन्ति रोगान् योगोत्तमः सम्यगुपास्यमानः॥३४॥

विद्याधराभ्रम्।

शुद्धसूतं तथा गन्धं फलत्रयकटुत्रयम्।
विड़ङ्गमुस्तकञ्चैव त्रिवृता दन्ती चित्रकम् ॥३५॥
आखुपर्णी ग्रन्थिकञ्च प्रत्येकं कर्षसम्मितम्।
पलं कृष्णाभ्रचूर्णस्य मृतायश्च चतुर्गुणम् ॥३६॥

---

पलानि अथवा लौहपत्रिकायाः चत्वारि पलानि। सूतात् पादोनकर्षमिति पादहीनकर्षं चतुर्दशमाषकमित्यर्थः। थानकुनीरसेन पारदं संशोध्य संमर्द्य पश्चात् गन्धकचूर्णं कर्षमितं दत्त्वा संमर्द्य च विड़ङ्गादिचूर्णं प्रक्षिप्य घृतभाण्डे स्थापनीयं ततो लौहपात्रे लौहदण्डेन घृतमधुभ्यां माषैकं पुरुषापेक्षया माषद्वयं वा समर्द्य खिद्यात्। चतुःषष्टिगुणं गव्यदुग्धं शिशिरतोयं वा अनुपेयम् ॥२९—३४॥

घृतेन मधुना पिष्ट्वा वटिकां कोलसम्मिताम्।
एकैकां वटिकां खादेत् प्रातरुत्थाय नित्यशः ॥३७॥
अनुपानं गवां क्षीरं नीरं वा नारिकेलजम्।
सर्वशूलं निहन्त्याशु वातपित्तभवं तथा ॥३८॥
एकजं द्वन्द्वजञ्चैव तथैव सान्निपातिकम्।
परिणामोद्भवं शूलमामवातोद्भवं तथा ॥३९॥
कार्श्यं वैवर्ण्यमालस्यं तन्द्रारुचिविनाशनम्।
साध्यासाध्यं निहन्त्याशु भास्करस्तिमिरं यथा ॥४०॥

बृहद्विद्याधराभ्रम्।

शुद्धसूतं तथा ताम्रं शिलामाक्षिकतालकम्।
रजतं स्वर्णवङ्गञ्च लौहमभ्रं सनागरम् ॥ ४१ ॥
चूर्णयेत् पञ्चलवणं देयं सर्वन्तु तुल्यकम्।
गन्धकं मिश्रयेत् सर्वं रसैरेषां विभावयेत् ॥४२॥
शुण्ठीजयन्तीविजयामण्डाराष्ट्रिकधूर्त्तजैः।
सर्वाङ्गसुन्दरो नाम्ना रसोऽयं विष्णुनिर्मितः ॥४३॥
खादेदेरण्डशुण्ठीभ्यां माषमात्रं दिने दिने।
कफवातामयं हन्ति चानुपानं वदाम्यहम् ॥४४॥
व्योषं सौवर्चलं हिङ्गु करञ्जवीजसंयुतम्।
पिबेदुष्णाम्बुना चानु सर्वशूलनिकृन्तनम् ॥४५॥

सर्वाङ्गसुन्दरो रसः।

रसगन्धकलौहानां पलार्द्धेन समन्वितम्।
त्रिफला रामठं शुल्वं त्रिकटु शटीटङ्गनम् ॥४६॥
पत्रं त्वगेला तालीशजातीफललवङ्गकम्।

---

बृहद्विद्याधराभ्रे ग्रन्थिकं पिप्पलीमूलम् अनुपानं गवां क्षीरमिति चतुःषष्टि गुणम् ॥३५—४०॥

यमानी जीरकं धान्यं प्रत्येकं तोलकं मतम् ॥४७॥
माषैका वटिका कार्य्या छागीदुग्धेन वा पुनः।
एकैका भक्षिता चेयं वटिका शूलवज्रिणी ॥४८॥
शूलमष्टविधं हन्ति प्लीहगुल्मोदरं तथा।
अम्लपित्तामवातञ्च पाण्डुत्वं कामलां तथा ॥४९॥
शोथं गलग्रहं वृद्धिं श्लीपदं सभगन्दरम्।
वृद्धबालकरी चैव मन्दाग्नेरपि दीपनी ॥५०॥ शूलवज्रिणीवटिका।

भागो रसस्याश्महेम्नः भागो ग्राह्यातियत्नतः।
तयोर्द्वादशभागानि ताम्रपत्राणि लेपयेत् ॥५१॥
पचेत् शूलहरः सूतो भवेत् त्रिपुरभैरवः।
माषो मध्वाज्यसंयुक्तो देयोऽस्य परिणामजे।
अन्ये त्वेरण्डतैलेन हिङ्गुत्रययुतो रसः ॥५२॥ त्रिपुरभैरवः।

रसबलिगगनार्कं वेतसाम्लं विषं स्यात्
सवरमिह पृथक् स्यात् भावयेत् घस्रमितैः।
कनकभुजगवल्लीकण्टकारीजयाद्भिः
कमलसलिलवासामुष्टिवज्राम्बुपूरैः ॥५३॥
अरुणसदृशपाकैर्मातुलुङ्गैश्च योज्यः
पुटगण इह तुल्यो भावयेदार्द्रकाद्भिः।
दहनवदननाम्ना वल्लमात्रो निहन्ति
प्रबलसकलशूलं तद्विकारानशेषान् ॥५४॥ अग्निमुखः।

शुद्धसूतं द्विधा गन्धं यामैकं मर्दयेत् दृढम्।
द्वयोस्तुल्यं शुद्धताम्रं सम्पुटे सन्निवेशयेत् ॥५५॥

---

त्रिपुरभैरवे अश्महेम्नः गन्धकस्य ॥४१—५२॥
अग्निमुखे बलिर्गन्धकः सवरमिति त्रिफलासहितं भुजगवल्ली पर्णं सलिलं वालकम् ॥५३॥५४॥

ऊर्द्धाधो लवणं दत्त्वा मृद्भाण्डे स्थापयेत् भिषक्।
ततो गजपुटं दद्यात् स्वाङ्गशीतं समुद्धरेत् ॥५६॥
सम्पुटात् चूर्णयेत् श्लक्ष्णं पर्णखण्डे द्विगुञ्जकम्।
भक्षयेत् सर्वशूलार्त्तो हिङ्गुशुण्ठी च जीरकम् ॥५७॥
वचा मरिचजं चूर्णं कर्षमुष्णजलैः पिबेत्।
असाध्यं नाशयेत् शूलं श्रीशूलगजकेशरी ॥५८॥ शूलगजकेशरी।

टङ्गनं हारिणं शृङ्गं खर्णं गन्धं मृतं रसम्।
दिनैकमार्द्रकद्रावैर्मर्द्यं रुद्ध्वा पुटे पचेत् ॥५९॥
त्रिगुणाख्यो रसो नाम्ना माषैकं मधुसर्पिषा।
सैन्धवं जीरकं हिङ्गुमध्वाज्याभ्यां लिहेदनु।
पक्तिशूलहरः ख्यातो याममात्रात् न संशयः ॥६०॥
त्रिगुणाख्यो रसः।

हरीतकी त्रिकटुकं कुचिला हिङ्गु सैन्धवम्।
गन्धकञ्च समं सर्वं वटीं कुर्य्यात् सुखावहाम् ॥६१॥
लघुकोलप्रमाणान्तु ग्रस्यते प्रातरेव हि।
एकैका वटिका ग्राह्या गुल्मशूलविनाशिनी ॥६२॥
ग्रहण्यामतिसारे च साजीर्णे मन्दपावके।
योजयेदुष्णपयसा सुखमाप्नोति निश्चितम्।
सुवर्णञ्च भवेत् देहं सदोत्साहयुतं नृणाम् ॥६३॥ शूलहरणयोगः

त्रिफलायास्तथा धात्र्याश्चूर्णं वा काललौहजम्।
शर्कराचूर्णसंयुक्तं सर्वशूलेषु योजयेत् ॥६४॥ शर्करालौहम्।

---

शूलकेशरीरसे तस्य ताम्रस्य सम्पुटे सम्पुटं निर्माय तस्मिन् मृतकगन्धककज्जलं दत्त्वा रोधयेत् लेपं विनैव। स्वल्पं मृत्भाण्डे पलद्वयलवणप्रवेशयोग्ये पलैकं लवणं निक्षिप्य लवणमध्ये सम्पुटकं स्थापयित्वा अपरलवणपलेन आच्छाद्य भाण्डमुखं कर्पट्या आच्छाद्य लिप्त्वा च गजपुटे पचेत्। तस्मादाकृष्य सम्पुटं चूर्णयेत्। अनुपानञ्च हिङ्गुशुण्ठ्यादिचूर्णं माषैकं कर्षमित्युपलक्षणम् ॥५५—६३॥

शङ्खचूर्णस्य चपलं पञ्चैव लवणानि च।
क्षारं टङ्कनकं जाती शतपुष्पा यमानिका ॥६५॥
हिङ्गु त्रिकटुकञ्चैव सर्वमेकत्र चूर्णयेत्।
आमवातं यकृच्छूलं परिणामसमुद्भवम्।
अन्नद्रवकृतं शूलं शूलञ्चैव त्रिदोषजम् ॥६६॥ शङ्खादिचूर्णम्
व्यायामं मैथुनं मद्यं लवणानि कटूनि च।
वेगरोधं शुचं क्रोधं वर्जयेत् शूलवान् नरः ॥६७॥

इति शूलरोगाधिकारः।

---

## अथ उदावर्त्तानाहाधिकारः।

पथ्या त्रिकटु सूतञ्च द्विगुणं कनकं तथा।
थानकुनीरसैरम्ललोनिकाया रसैः कृता ॥१॥
गुड़िकोदरगुल्मादिपाण्ड्वामयविनाशिनी।
क्रिमिकुष्ठगात्रकण्डूपीड़कांश्च निहन्ति च।
गुड़ी सिद्धफला चेयं वैद्यनाथेन भाषिता ॥२॥ वैद्यनाथवटी
शुद्धं पारदटङ्कनं समरिचं गन्धाश्मतुल्यं त्रिवृत्
विश्वा च द्विगुणा ततो नवगुणं जैपालचूर्णं क्षिपेत्।
खल्ले दण्डयुगं विमर्द्य विधिना चार्कस्य पात्रे ततः
स्वेदं गोमयवह्निना च मृदुना स्वेच्छावशाद्भेदकः ॥३॥

---

शर्करालौहे लौहचूर्णं सर्वतुल्यम्। शङ्खादिचूर्णे शङ्खस्य क्षारं टङ्कनकमिति टङ्कनक्षारम् ॥६४—६६॥

इति शूलाधिकारः।

---

उदावर्त्तेऽपि शूलं भवतीति शूलानन्तरमुदावर्त्तानाहचिकित्सामाह। वैद्यनाथवटिकायां पथ्या हरीतकी कनकं जैपालम् ॥१॥२॥

गुञ्जैकप्रमितो रसो हिमजलैः संसेवितो रेचयेत्
यावन्नोष्णजलं पिबेदपि वरं पथ्यञ्च दध्योदनम्।
आमं सर्वभवं सुजीर्णमुदरं गुल्मं विशालं हरेत्
वह्नेर्दीप्तिकरो बलाग्रहरणः सर्वामयध्वंसनः ॥४॥

बृहत् इच्छाभेदीरसः।

योगवाहिरसान् सर्वान् रेचके कथितानपि।
प्लीहाधिकारे कथितं रसेन्द्रं वारिशोषणम् ॥५॥
उदावर्त्ते तथानाहे प्रयुञ्जीतानुपानतः।
पुटितं भावितं लौहं त्रिवृत्क्वाथैरनेकशः ॥६॥
उदावर्त्तहरं युञ्ज्यात् ससितं वा यथाबलम्।
उदावर्त्ते प्रयोक्तव्या उदरोक्ता रसाः खलु ॥७॥

इति उदावर्त्तानाहाधिकारः।

---

## अथ गुल्मरोगचिकित्सा।

ताम्रं सूतं समं गन्धं जैपालञ्च फलत्रिकम्।
कटुकं पेषयेत् क्षारैर्निष्कं गुल्महरं पिबेत्।
उष्णोदकं पिबेच्चानु नाराचोऽयं महारसः ॥१॥ महानाराचरसः
पारदं शिखितुल्यञ्च गन्धं जैपालपिप्पली।
आरग्वधफलात् मज्जा वज्रीक्षीरेण पेषयेत् ॥२॥

---

इच्छाभेदीरसे गन्धाश्मो गन्धकः। नवगुणं जैपालचर्णमित्येकभागापेक्षया नवगुणं जैपालचूर्णमित्यर्थः ॥३—७॥

इत्युदावर्त्ताधिकारः।

---

गुल्मेऽप्यानाहो भवतीत्यानाहानन्तरं गुल्मचिकित्सामाह। महानाराचरसे — कटुकं त्रिकटुकं क्षारैः क्षारत्रयैः ॥ १ ॥

—००—

धात्रीरसयुतं खादेत् रक्तगुल्मप्रशान्तये ।
चिञ्चाफलरसञ्चानु पथ्यं दध्योदनं हितम् ॥३॥ पञ्चाननरसः ।

रसगन्धकताम्रञ्च कांस्यं टङ्गनतालकम् ।
प्रत्येकं पलिकं ग्राह्यं मर्दयेदतियत्नतः ॥४॥
तत् यथाग्निबलं खादेत् रक्तगुल्मप्रशान्तये ।
निर्मिता नित्यनाथेन वटिका गुल्मवज्रिणी ॥५॥
गुल्मप्लीहोदराष्ठीलायकृदानाहनाशिनी ।
कामला पाण्डुरोगघ्नी ज्वरशूलविनाशिनी ॥६॥

गुल्मवज्रिणी वटिका ।

सूतकं लौहकं ताम्रं तालकं गन्धकं समम् ।
तोलद्वयमितं भागं यवक्षारञ्च तत्समम् ॥७॥
मुस्तकं मरिचं शुण्ठी पिप्पलीगजपिप्पली ।
हरीतकी वचा कुष्ठं तोलैकं चूर्णयेत् बुधः ॥८॥
सर्वमेकीकृतं पात्रे क्रियन्ते भावनास्ततः ।
पर्पटं मुस्तकं शुण्ठ्यपामार्गं चापचेलिमम् ॥९॥
तत् पुनश्चूर्णयेत् पश्चात् सर्वगुल्मनिवारणम् ।
गुञ्जाचतुष्टयं खादेद्धरीतक्यनुपानतः ॥१०॥
वातिकं पैत्तिकं गुल्मं तथा चैव त्रिदोषजम् ।
द्वन्द्वजं श्लैष्मिकं हन्ति वातगुल्मं विशेषतः ।
गुल्मकालानलो नाम सर्वगुल्मकुलान्तकृत् ॥११॥

गुल्मकालानलो रसः ।

---

पञ्चाननरसे वज्रीचोरैः सुहीदुग्धैः चिञ्चाफलरसञ्चानु इति तिन्तिड़ीफलरसञ्चानुपानम् ॥२॥३॥

गुल्मकालानलरसे यवक्षारञ्च तत्सममिति सर्वद्रव्यसमम् । हरीतक्यनुपानत इति क्वाथं चूर्णं वा अनुपानम् ॥४—११॥

पारदं गन्धकं ताप्यं यवक्षारार्कमभ्रकम्।
अग्न्यम्बुना हि पत्रेण संमर्द्याथ द्विगुञ्जकम् ॥१२॥
भक्षयेत् पर्णखण्डेन हिङ्गु सिन्धुसुवर्चलैः।
दाड़िमञ्च तथा विल्वं कार्षिकं शृङ्गजैर्द्रवैः ॥१३॥
पिष्ट्वा तु सुरया युक्तं देयं स्यादनुपानकम्।
सर्वगुल्मं निहन्त्याशु शूलञ्च परिणामजम् ॥१४॥ वड़वानलोरसः
सूतटङ्कनतुल्यांशं मरिचं सूततुल्यकम्।
गन्धकं पिप्पलीशुण्ठी द्वौ द्वौ भागौ विमिश्रयेत् ॥१५॥
सर्वतुल्यं क्षिपेत् दन्तीवीजं निस्तुषमेव च।
द्विगुञ्जं रेचनं सिद्धं नाराचाख्यो महारसः॥१६॥महानाराचरसः
पारदं गन्धकं तालं ताप्यं स्वर्णं मनःशिलाम्।
कृष्णाक्काथैः स्नुहीक्षीरैर्दिनैकं मर्दयेत् सुधीः ॥१७॥
निष्कार्द्धं श्लैष्मिकं गुल्मं हन्ति मूत्रानुपानतः।
रसो विद्याधरो नाम गोदुग्धञ्च पिवेदनु ॥१८॥ विद्याधररसः।
गन्धकं तालकं ताम्रं तथैव तीक्ष्णलौहकम्।
समांशं मर्दयेत् गाढ़ं कन्यानीरेण यत्नतः ॥१९॥
सम्पुटं कारयेत् पश्चात् सन्धिलेपञ्च कारयेत्।
ततो गजपुटं दत्त्वा स्वाङ्गशीतं समुद्धरेत् ॥२०॥
द्विगुञ्जां भक्षयेत् गुल्मी शृङ्गवेरानुपानतः।
सर्वगुल्मं निहन्त्याशु भास्करस्तिमिरं यथा ॥२१॥

महागुल्मकालानलोरसः।

अभया मरिचं कृष्णा टङ्कनञ्च समांशिकम्।
सर्वचूर्णसमञ्चैव दद्यात् कानकजं फलम् ॥२२॥

---

वड़वानलरसे ताप्यं स्वर्णमाक्षिकम् अर्कस्ताम्रम् अग्न्यम्बुना चित्रकक्काथेन संमर्द्य पर्णखण्डेन भक्षयेत्। हिङ्ग्वादिचूर्णं त्वनुयोज्यम् ॥ १२—१४ ॥
महानाराचरसे सूतादिद्रव्यचयं प्रत्येकमेकभागसमम् ॥ १५—२१ ॥

स्नुहीचीरैर्वटी कार्य्या यथा स्विन्नकलायवत् ।
वटीद्वयं शिवामेकां पिष्ट्वाचोष्णाम्बुना पिबेत् ॥२३॥
उष्णाद्विरेचयेदेषा शीते स्वास्थ्यमुपैति च ।
जीर्णज्वरं पाण्डुरोगं प्लीहाष्ठीलोदराणि च
रक्तपित्ताम्लपित्तादि सर्वाजीर्णं विनाशयेत् ॥२४॥ अभयावटी।

जैपालाष्टौ द्विकोगन्धः शुण्ठीमरिचचित्रकम् ।
एकः सूतः ससौभाग्यो गोपीजल इति स्मुतः ॥२५॥
शूलव्याध्याश्रयान् गुल्मान् कोष्ठादौ दशपैत्तिकान् ।
भगन्दरादिहृद्रोगान् नाशयेदेव भक्षणात्॥२६॥गोपीजलः।

शठीं पुष्करमूलञ्च दन्तीं चित्रकमाढ़कीम् ।
शृङ्गवेरं वचाञ्चैव पलिकानि समाहरेत् ॥२७॥
त्रिवृतायाः पलञ्चैकं कुर्य्यात् त्रीणि च हिङ्गुनः ।
यवक्षारात् पले द्वे च द्वे पले चाम्लवेतसात् ॥२८॥
यमान्यजाजीमरिचं धान्यकञ्च त्रिकार्षिकम् ।
उपकुञ्चाजमोदाभ्यां पृथगर्द्धपलं भवेत् ॥२९॥
मातुलुङ्गरसेनैव गुड़िकां कारयेद्भिषक् ।
तासामेकां पिबेत् द्वेवा तिस्रो वाथ सुखाम्बुना ॥३०॥
अम्लैर्मद्यैश्च यूषैश्च घृतेन पयसाऽथवा ।
एषा काङ्कायनेनोक्ता गुड़िका गुल्मनाशिनी ॥३१॥
अर्शोहृद्रोगशमनी क्रिमीणाञ्च विनाशिनी ।
गोमूत्रयुक्ता शमयेत् कफगुल्मं चिरोत्थितम् ॥३२॥
क्षीरेण पित्तरोगञ्च मद्यैरम्लैश्च वातिकम् ।

---

अभयावटिकायां कानकजं फलं जैपालफलम् । शिवामिति हरीतकीम् । तप्ताम्बुना उष्णजलेन १२॥ —२४ ॥

गोपीजले जैपालाष्टाविति जैपालवीजस्य चाष्टौ भागा एवमन्यत्र ॥२५·२६॥

त्रिफलारसमूलैश्च नियच्छेत् सान्निपातिकम् ।
रक्तगुल्मेषु नारीणा सुष्ठीक्षीरेण पाययेत् ॥ ३३ ॥

काङ्कायनगुड़िका ।

रसं गन्धं मृतलौहं गुग्गुलोः पिप्पलं पलम् ।
त्रिवृता पिप्पली शुण्ठी शठी धान्यकजीरकम् ॥३४॥
प्रत्येकं पलिकं ग्राह्यं पलार्द्धं कानकं फलम् ।
संचूर्ण्य वटिका कार्य्या घृतेन वल्लमानतः ॥३५॥
वटीद्वयं भक्षयेच्चार्द्रकोष्णाम्बु पिबेदनु ।
हन्ति प्लीह यकृत् गुल्म कामलोदरशोथकम् ॥३६॥
वातिकं पैत्तिकं गुल्मं श्लैष्मिकं रौधिरं तथा ।
गहनानन्दनाथोक्तो रसोऽयं गुल्मशार्दूलः ॥ ३७ ॥

गुल्मशार्दूलो रसः ।

लौहं ताम्रं वराटञ्च तुल्यं हिङ्गु फलत्रिकम् ।
स्नुहीमूलं यवक्षारं जैपालं टङ्कनं त्रिवृत् ॥३८॥
प्रत्येकं पलिकं ग्राह्यं छागीदुग्धेन पेषयेत् ।
चतुर्गुञ्जां वटीं खादेत् वारिणा मधुनापि वा ॥३९॥
प्राणवल्लभनामायं गहनानन्दभाषितः ।
निहन्ति कामलां पाण्डुं मेहं हिक्कां विशेषतः ॥४०॥
असाध्यं सन्निपातञ्च गुल्मं रुधिरसम्भवम् ।
वातरक्तञ्च कुष्ठञ्च कण्डूविस्फोटकापचीम् ॥४१॥ प्राणवल्लभोरसः

ताम्रं दशगुणं स्वर्णात् स्वर्णपादं कटुत्रिकम् ।
त्रिकटु त्रिफला तुल्या त्रिफलार्द्धमयो रजः ॥४२॥

---

काङ्कायनगुड़िकायाम् आढ़की तुवरी, उपकुञ्चा कृष्णजीरकम् । अजमोदा मानी = २७—३२ ॥

गुल्मशार्दूलरसे कानकफलं जैपालफलम् ॥ ३४—३७

अयसोऽर्द्धं विषञ्चैव सर्वं संमर्द्य यत्नतः ।
सर्वेश्वररसो नाम रौधिरगुल्मनाशनः ॥ ४३ ॥ सर्वेश्वरो रसः ।

इति गुल्मरोगचिकित्सा ।

---

## अथ हृद्रोगाधिकारः ।

शुद्धसूतं समं गन्धं मृतताम्रं तयोः समम् ।
मर्दयेत् त्रिफलाक्काथैः काकमाचीद्रवैर्दिनम् ॥१॥
चणमात्रां वटीं खादेत् रसोऽयं हृदयार्णवः ।
काकमाचीफलं कर्षं त्रिफलाफलसंयुतम् ॥२॥
द्वात्रिंशत्तोलकं तोयं क्काथमष्टावशेषितम् ।
अनुपानं पिबेच्चात्र हृद्रोगे च कफोत्थिते ॥३॥ हृदयार्णवो रसः ।
सहस्रपुटनैः शुद्धं वज्राभ्रमर्जुनत्वचः ।
सत्वैर्विमर्दितं सप्तदिनं खल्ले विशोषितम् ॥४॥
छायाशुष्का वटी कार्य्या नाम्नेदमर्जुनाह्वयम् ।
हृद्रोगं सर्वशूलार्शोहृल्लासच्छर्द्यरोचकान् ॥५॥
अतीसारमग्निमान्द्यं रक्तपित्तं क्षतक्षयम् ।
शोथोदराम्लपित्तञ्च विषमज्वरमेव च ।
हन्त्यन्यान्यपि रोगाणि बल्यं वृष्यं रसायनम्॥६॥ नागार्जुनाभ्रम् ।
सूतगन्धौ द्रवैर्धात्र्या मर्दयेत् गोस्तनीद्रवैः ।
यष्टिखर्जूरसलिलैर्दिनञ्च परिमर्दयेत् ।
धात्रीचूर्णं सिताञ्चानु पिबेत् हृद्रोगशान्तये ॥७॥ पञ्चाननरसः ।

इति हृद्रोगाधिकारः ।

---

प्राणवल्लभरसे स्नुहीमूलमिति स्नुहीमूलक्षारम् । चित्रत् चित्रकमूलम् ॥३८-४३॥

इति गुल्मरोगचिकित्सा ।

---

गुल्मस्य हृदयं स्थानमुक्तम् अतः स्थानसाम्यात् हृद्रोग उच्यते । शुद्धसूतमित्यादि । नागार्जुनाभ्रे अर्जुनत्वचः सत्वैरिति अर्जुनवल्कलक्काथैरित्यर्थः ॥१—७॥

इति हृद्रोगचिकित्सा ।

## अथ मूत्रकृच्छ्राधिकारः।

वङ्गं सूतं गन्धकं भावयित्वा लोहेपात्रे मर्दयेदेकघस्रम्।
दूर्वायष्टीगोक्षुरैः शाल्मलीभिः मूषामध्ये भूधरे पाचयित्वा ॥१॥
तत्तद्द्रावैर्भावयित्वाऽस्य वल्लं दद्यात् शीतं पायसं वक्ष्यमाणम्।
दूर्वायष्टीशाल्मलीतोयदुग्धैः स्तुल्यैः कुर्य्यात् पायसं तद्ददीत।
प्रातःकाले शीतपानीयपानात् मूत्रे जाते स्यात् सुखी वङ्गमेण॥२

त्रिनेत्राख्योरसः।

द्विपलं वरुणं धात्र्यास्तदर्द्धं धातीपुष्पकम्।
हरीतक्याः पलार्द्धञ्च पृश्निपर्णं तदर्द्धकम् ॥३॥
कर्षमानञ्च लौहाभ्रं चूर्णमेकत्र कारयेत्।
भक्षयेत् प्रातरुत्थाय शाणमानं विधानवित् ॥४॥
मूत्राघातं तथा घोरं मूत्रकृच्छ्रञ्च दारुणम्।
अश्मरीं विनिहन्त्याशु प्रमेहं विषमज्वरम् ॥५॥
बलपुष्टिकरञ्चैव वृष्यमायुष्यमेव च।
वरुणाद्यमिदं लौहं चरकेण विनिर्मितम् ॥ ६ ॥

वरुणाद्यं लौहम्।

अयो रजः श्लक्ष्णपिष्टं मधुना सह योजयेत्।
मूत्राघातं निहन्त्याशु मूत्रकृच्छ्रं सुदारुणम् ॥७॥
रसगन्धयवक्षारं सितातक्रयुतं पिबेत्।
मूत्रकृच्छ्राण्यशेषाणि निहन्ति नियतं नृणाम् ॥८॥
भैषज्यैरश्मरीप्रोक्तैर्मूत्रकृच्छ्रमुपाचरेत्।
योगवाहिरसैर्वापि चानुपानविशेषतः ॥९॥

---

सप्तोत्तरे मर्मशते त्रीणि मर्माणि शिरोहृदयवस्तयश्च प्रधानानि। तत्र हृदयगतविकारचिकित्सामभिधाय वस्तिगतरोगचिकित्सामाह वङ्गमित्यादि। वरुणादिलौहे कर्षमानञ्च लौहाभ्रमिति प्रत्येकं कर्षमानम् ॥ १—६ ॥

शतावरीरसैः पिष्ट्वा मृतसूतञ्च तालकम् ।
शिखितुत्थञ्च तुल्यांशं दिनैकं मर्दयेत् दृढ़म् ॥१०॥
तद्गोलं सार्षपे तैले पाच्यं यामञ्च चूर्णयेत् ।
मूत्रकृच्छ्रान्तकश्चास्य चौद्रैर्गुञ्जाचतुष्टयम् ॥११॥
भक्षणात् नात्र सन्देहो मूत्रकृच्छ्रं निहन्त्यलम् ।
तुलसीतिलपिण्याकं विल्वमूलं तुषाम्बुना ।
कर्षैकं वानुपानेन सुरया वा सुवर्चलैः॥१२॥मूत्रकृच्छ्रान्तकोरसः

इति मूत्रकृच्छ्राधिकारः ।

---

## अथ मूत्राघाताधिकारः ।

मृतसूताभ्रगन्धञ्च मर्दयेत् मधुना दिनम् ।
तारकेश्वरनामायं गहनानन्दभाषितः ॥१॥
माषमात्रं भजेत् चौद्रैर्बहुमूत्रप्रशान्तये ।
उडुम्बरफलं पक्वं चूर्णितं कर्षमात्रकम् ।
संलिह्यात् मधुना सार्द्धमनुपानं सुखावहम्॥२॥तारकेश्वरोरसः।
शुद्धसूतस्य भागैकं चत्वारः शुद्धगन्धकात् ।
पिष्ट्वा वराटिका पूर्य्या रसपादेन टङ्कनम् ॥३॥
चीरैः पिष्ट्वा मुखं लिप्त्वा भाण्डे रुद्ध्वा पुटे पचेत् ।
स्वाङ्गशीतं विचूर्ण्याथ लघुलोकेश्वरो मतः ॥४॥
चतुर्गुञ्जाप्रमाणन्तु मरिचेन तथैव च ।
जातीमूलफलैर्युक्तमजाक्षीरेण पाययेत् ।
शर्कराभावितञ्चानु पीत्वा कृच्छ्रहरः परः॥५॥लघुलोकेश्वरो रसः

---

सूत्रकृच्छ्रान्तके । शिखितुण्डकं तुल्यकमेव ॥ ७—१२ ॥

---

मूत्रगतविकारसाधर्म्यादनन्तरं मूत्राघातचिकित्सा । तारकेश्वररसे उडुम्बरफलं पक्वमिति पक्वयज्ञडुम्बरफलम् ॥ १—२ ॥

येनौषधेन मतिमान् मूत्रकृच्छ्रमुपाचरेत्।
तेनौषधेन श्रेष्ठेन मूत्राघातानुपाचरेत् ॥६॥
लवणाम्लवरायुक्तं घृतञ्चापि पिबेन्नरः।
तस्य नश्यन्ति वेगेन मूत्राघातास्त्रयोदश ॥७॥
पक्वैर्वारुकबीजानामक्षमात्रं ससैन्धवम्।
धान्याम्लयुक्तं पीत्वैव मूत्राघातात् विमुच्यते ॥८॥
त्रिकण्टकैरण्डशतावरीभिः सिद्धं पयो वा तृणपञ्चमूलैः।
गुड़प्रगाढ़ं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्तमेतत् ॥९॥

इति मूत्राघाताधिकारः।

---

## अथ अश्मर्य्यधिकारः।

शुद्धसूतं द्विधा गन्धं रसैः श्वेतपुनर्नवैः।
मर्दयित्वा दिनं खल्ले रुद्ध्वा तत् भूधरे पचेत् ॥१॥
दिनान्ते तत् समुद्धृत्य मर्दयेद्गुड़संयुतम्।
अश्मरीं वस्तिशूलञ्च हन्ति पाषाणवज्रकः ॥२॥
गोरक्षकर्कटीमूलक्काथं कौलत्थकं तथा।
अनुपानं प्रयोक्तव्यं बुद्ध्वा दोषबलाबलम् ॥३॥ पाषाणवज्रोरसः।
मृतताम्रमजाक्षीरैः पाच्यं तुल्यं गते द्रवे।
तत्ताम्रं शुद्धसूतञ्च गन्धकञ्च समं समम् ॥४॥

---

लघुलोकेश्वरे मृतसूतस्य रससिन्दूरस्य समूतं गन्धकं पिष्ट्वा तेन वराटिका पूरणीया ततो रसपादेन टङ्कनं दुग्धैः पिष्ट्वा वराटिकामुखं लिप्त्वा पुटपाके शोषयेदिति भावः ॥ ३—५ ॥

मूत्रकृच्छ्रचिकित्सां मूत्राघातेऽप्यतिदिशति येनौषधेनेति॥ ६—९ ॥

इति मूत्राघातचिकित्सा।

---

निर्गुण्डीस्वरसैर्मर्द्यं दिनं तद्गोलकीकृतम् ।
यामैकं बालुकायन्त्रे पक्वा योज्यं द्विगुञ्जकम् ॥५॥
वीजपूरस्य मूलञ्च सजलञ्चानुपाययेत् ।
रस स्त्रिविक्रमो नाम शर्करा मश्मरीं जयेत्॥६॥ त्रिविक्रमोरसः
अश्मरीरजः श्लक्ष्णपिष्टं मधुना सह योजितम् ।
अश्मरीं विनिहन्त्याशु मूत्रकृच्छ्रञ्च दारुणम् ॥७॥ लौहप्रयोगः।
इन्द्रवारुणिकामूलं मरिचं क्षीरपाचितम् ।
पर्पटीरससंयुक्तं सप्ताहात् अश्मरीं जयेत् ॥ ८ ॥
गन्धकं जीरकं क्षुद्राफलं टङ्कद्वयं सदा ।
अश्मरीं शर्करां मूत्रकृच्छ्रं क्षपयति ध्रुवम् ॥९॥

इति अश्मर्य्यधिकारः ।

---

## अथ प्रमेहाधिकारः ।

मृतसूताभ्रकं तुल्यं धात्रीफलनिशाद्रवैः ।
सप्ताहं भावयेत् खल्ले योगोऽयं हरिशङ्करः ।
माषामात्रां वटीं खादेत् सर्वमेहप्रशान्तये ॥१॥ हरिशङ्करोरसः
मृतं सूतं मृतं वङ्गमर्जुनस्य त्वचान्वितम् ।
तुल्यांशं मर्दयेत् खल्ले शाल्मल्या मूलजैः द्रवैः ॥ २ ॥

---

मूत्रविरोधित्वसामान्यात्तदनन्तरमश्मरीचिकित्सितमुच्यते । त्रिविक्रमरसे ताम्रतुल्यं छागीदुग्धं दत्त्वा पाच्यं, दुग्धे निःशेषिते ताम्रतुल्यं रसगन्धकं निर्दिष्ट निर्गुण्डीरसैर्दिनैकं संमर्द्य बालुकायन्त्रे दिनैकं पचेत् । मात्राचास्य गुञ्जाद्वय परिमिता ॥ ५—६ ॥

गन्धकमित्यादौ क्षुद्राफलं बृहतीफलम् ॥ ७—९ ॥

---

बस्तिविकृतिसाम्यादश्मर्य्यनन्तरं प्रमेहचिकित्सितमुच्यते। हरिशङ्कररसे धात्री जलैरिति आमलकीरसैस्तदभावे क्वाथैः ॥ १ ॥

दिनान्ते वटिका कार्य्या माषमात्रा प्रमेहहा।
एषा इन्द्रवटीनाम्ना मधुमेहप्रशान्तिकृत् ॥ ३ ॥ इन्द्रवटी।
वङ्गभस्म द्विवल्लञ्च लेहयेत् मधुना सह।
ततो गुड़समं गन्धं भक्षयेत् कर्षमात्रकम् ॥ ४ ॥
गुडूचीसत्वमथवा शर्करासहितं तथा।
सर्वमेहहरो ज्ञेयो वङ्गावलेह उत्तमः ॥ ५ ॥ वङ्गावलेहः।
सूताभ्रञ्च वटक्षीरैर्मर्दयेत् प्रहरद्वयम्।
विशोष्य पक्वमूषायां सर्वरोगे प्रयोजयेत् ॥ ६ ॥
विशेषात् मेहरोगेषु त्रिफलामधुसंयुतम्।
युञ्जीत वल्लमेकन्तु रसेन्द्रस्यास्य वैद्यराट् ॥७॥ प्रमेहसेतुः।
विड़ङ्गत्रिफलामुस्तैः कणया नागरेण च।
जीरकाभ्यां युतं हन्ति प्रमेहानतिदारुणान्।
लौहं मूत्रविकारांश्च सर्वानेव विनाशयेत्॥८॥विड़ङ्गाद्यं लौहम्।
रसगन्धकलौहञ्च स्वर्णं वङ्गञ्च माक्षिकम्।
समभागन्तु संपिष्य वटिकां कारयेद्भिषक् ॥ ९ ॥
सप्ताहमामलाद्रावैर्भावितोऽयं रसेश्वरः।
हरिशङ्करनामायं गहनानन्दभाषितः।
प्रमेहान् विंशतिं हन्ति सत्यं सत्यं न संशयः ॥ १० ॥
बृहत् हरिशङ्करो रसः।
वङ्गभस्म मृतं स्वर्णं रसं क्षौद्रैर्विमर्दयेत्।
द्विगुञ्जं भक्षयेन्नित्यं हन्ति मेहं चिरोद्भवम्।
गुञ्जामूलं तथा क्षौद्रैरनुपानं प्रशस्यते॥११॥आनन्दभैरवो रसः।

---

प्रमेहसेतुरसे सूतमिति भस्मसूतम् ॥ २—७ ॥
विड़ङ्गादिलौहे लौहं सर्वतुल्यम् ॥ ८ ॥
आनन्दभैरवरसे रसमिति पारदभस्म ॥ ९—११ ॥

मृतसूताभ्रनागञ्च स्वर्णं तुल्यं प्रकल्पयेत्।
महानिम्बस्य चूर्णन्तु चतुर्भिः सममाहरेत्॥ १२॥
मधुना लेहयेत् माषं लालामेहप्रशान्तये।
सक्षौद्रं रजनीचूर्णं लेह्यं निष्कद्वयं तथा।
असाध्यं नाशयेत् मेहं विद्यावागीशको रसः॥१३॥

विद्यावागीशको रसः

रसाञ्जनं विड़ं दारुविल्वगोक्षुरदाड़िमम्।
भूनिम्बं पिप्पलीमूलं त्रिकटु त्रिफला त्रिवृत्॥ १४॥
प्रत्येकं तोलकं देयं लौहचूर्णन्तु तत्समम्।
पलैकं गुग्गुलुं दत्त्वा घृतेन वटिकां कुरु॥ १५॥
माषैका निर्मिता चेयं मेहमुद्गरसंज्ञिनी।
श्रीमद्गहननाथेन लोकनिस्तारकारिणा॥ १६॥
अनुपानं प्रकर्त्तव्यं छागीदुग्धं जलञ्च वा।
विंशं मेहं निहन्त्याशु मूत्रकृच्छ्रं हलीमकम्॥ १७॥
अश्मरीं कामलां पाण्डुं मूत्राघातमरोचकम्।
अर्शांसि व्रणकुष्ठञ्च वातरक्तं भगन्दरम्॥१८॥ मेहमुद्गरो रसः।

भस्मसूतं समं कान्तमभ्रकन्तु शिलाजतु।
शुद्धताप्यं शिलाव्योष त्रिफलाङ्कोठजीरकम्॥ १९॥
कार्पासवीजं रजनीचूर्णं भाव्यञ्च वह्निना।
विंशद्वारं विशोष्याथ लिह्याच्च मधुना सह।
माषमात्रं हरेत् मेहं मेघनादरसो महान्॥२०॥मेघनादो रसः।

---

विद्यावागीशरसे सक्षौद्रं हरिद्राचूर्णमनुलेह्यम्॥ १२—१३॥

मेहमुद्गररसे विड़ं विड़लवणं दारु दारुहरिद्रा। लौहचूर्णन्तु तत्सममिति सर्वचूर्णसमांसत्वम्: ॥ १४—१८॥

मेघनादरसे कान्त कान्तलौहं ताप्यं स्वर्णमाक्षिकम्। भाव्यञ्च वह्निनेति चित्रकरसेन भाव्य॥ १९—२०॥

मृतसूताभ्रकं लौहं नागं वङ्गं समं समम्।
एलावीजं लवङ्गञ्च जातीकोषफलं तथा ॥ २१ ॥
मधुकं मधुयष्टि च धात्री च समशर्करा।
कर्पूरं खादिरं सारं शतावा कण्टकारिका ॥२२॥
अम्लवेतसकं तुल्यं दिनैकं लाङ्गलीद्रवैः।
भावयेत् भिषदुग्धेन नागवल्या रसैर्दिनम् ॥ २३ ॥
वटिका वदराख्याभा कार्य्या चन्द्रप्रभा परा।
भक्षयेत् वटिकामेकां सर्वमेहकुलान्तिकाम् ॥ २४ ॥
धात्री पटोलपत्रं वा कषायं वा सृतायुतम्।
क्षौद्रं भक्षयेच्चानु सर्वमेहप्रशान्तये ॥२५॥ चन्द्रप्रभा वटिका।

रसभस्मसमायुक्तं वङ्गभस्म प्रकल्पयेत्।
अस्य माषद्वयं हन्ति मेहान् क्षौद्रसमन्वितम् ॥ २६ ॥
इक्षुमेहे वङ्गेश्वरो रसः।

वङ्गभस्मं रसं गन्धं रौप्यं कर्पूरमभ्रकम्।
कर्षं कर्षं मानमेषां सूताङ्घ्रि हेममौक्तिकम् ॥ २७ ॥
केशराजरसैर्भाव्यं द्विगुञ्जाफलमानतः।
प्रमेहान् विंशतिञ्चैव साध्यासाध्यमथापि वा ॥ २८ ॥
मूत्रकृच्छ्रं तथा पाण्डुं धातुस्थञ्च ज्वरं जयेत्।
हलीमकं रक्तपित्तं वातपित्तकफोद्भवम् ॥ २९ ॥
ग्रहणीमामदोषञ्च मन्दाग्नित्वमरोचकम्।
एतान् सर्वान् निहन्त्याशु वृक्षमिन्द्राशनिर्यथा ॥३०॥
वृहद्वङ्गेश्वरो नाम सोमरोगं निहन्त्यलम्।
बहुमूत्रं बहुविधं मूत्रमेहं सुदारुणम् ॥ ३१ ॥

---

चन्द्रप्रभावटिकायां जातीकोषफलं तथेति जातीकोषं जातीफलञ्च ॥२१-२५॥
वङ्गेश्वरे रससिन्दूरं वङ्गभस्म च समभागं ग्राह्यम् ॥ २६ ॥

मूत्रातिसारं कृच्छ्रञ्च क्षीणानां पुष्टिवर्द्धनः।
ओजस्तेजस्करो नित्यं स्त्रीषु सम्यक् वृषायते ॥ ३२ ॥
बलवर्णकरो रुच्यः शुक्रसञ्जननः परः।
छागं वा यदि वा गव्यं पयो वा दधि निर्मलम् ॥३३॥
अनुपानं प्रयोक्तव्यं बुद्ध्वा दोषगतिं भिषक्।
दद्याच्च बाले प्रौढ़े च सेवनार्थं रसायनम् ॥३४॥ वृहद्वङ्गेश्वरो रसः

वङ्गाभ्रमथ नागाभ्रं नागं वङ्गञ्च केवलम्।
मेहरोगे प्रयोक्तव्यं शिलाजतुसमन्वितम् ॥३५॥
कस्तूरी वनिता क्षुद्रा त्रिफला जीरकद्वयम्।
एलावीजं त्वचं यष्टिमधुकं मिषि बालकम् ॥ ३६ ॥
शतपुष्पोत्पलं धात्री मुस्तकं भद्रसंज्ञकम्।
कदलीनां फलं पक्वं खर्जूरं कृष्णतिलकम् ॥ ३७ ॥
कोकिलाख्यस्य वीजञ्च माषमात्रं समं समम्।
यावन्त्येतानि चूर्णानि द्विगुणा सितशर्करा ॥ ३८ ॥
धात्रीरसेन पयसा कुष्माण्डस्वरसेन च।
विपचेत् पाकविद्वैद्यो मन्दमन्देन वह्निना ॥ ३९ ॥
अवतार्य्य सुशीते च यथालाभं विनिक्षिपेत्।
अक्षमात्रं प्रयुञ्जीत सर्वमेहप्रशान्तये ॥ ४० ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्।
सोमरोगं बहुविधं मूत्रातीसारमुल्वणम् ॥ ४१ ॥

---

वृहद्वङ्गेश्वरे सूताङ्घ्रि हेममौक्तिकमिति स्वर्णं मुक्ता च प्रत्येकं पारदात् चतुर्थभागम् ॥२७—३४॥

वङ्गाभ्रेत्यादि वङ्गभस्मसममभ्रं धात्रीरसेन रक्तिकादिक्रमेण सेव्यम् अथवा नागं सीसकं तच्च अभ्रसमम्। अथवा केवलं वङ्गं सीसकं वा धात्रीरसेन। अथवा केवलं शिलाजतु मधुना लेह्यम् ॥३५॥

मूत्रकृच्छ्रं निहन्त्याशु मूत्राघातं तथाश्मरीम्।
ग्रहणीं पाण्डुरोगञ्च कामलां कुम्भकामलाम्॥ ४२॥
वृष्यो बलकरो हृद्यः शुक्रवृद्धिकरः परः।
कस्तूरीमोदकश्चायं चरकेण च भाषितः॥४३॥

कस्तूरीमोदकः।

भस्मसूतं मृतं कान्तलौहभस्म शिलाजतु।
शुद्धताप्यं शिलाव्योषं त्रिफला विल्वजीरकम्॥ ४४॥
कपित्थं रजनीचूर्णं भृङ्गराजेन भावयेत्।
त्रिंशद्वारं विशोष्याथ लिह्याच्च मधुना सह॥ ४५॥
निष्कमात्रं हरेत् मेहान् मूत्रकृच्छ्रं सुदारुणम्।
महानिम्बस्य वीजञ्च षड्निष्कं पेषितञ्च यत्॥ ४६॥
पलं तण्डुलतोयेन घृतनिष्कद्वयेन च।
एकीकृत्य पिवेच्चानु हन्ति मेहं चिरोत्थितम्॥४७॥ मेहवज्रः।

कुमारी केवला देया चौषल्लवणसंयुता।
प्रमेहं हन्ति सकलं सप्ताहात् परतो नृणाम्॥ ४८॥
मृतवङ्गं सुवर्णञ्च कान्तलौहञ्च पारदम्।
मुक्ता गुड़त्वचञ्चैव सूक्ष्मैला नागकेशरम्॥ ४९॥
समभागं विचूर्ण्याथ कन्यानीरेण भावयेत्।
द्विमाषां वटिकां खादेत् दुग्धान्नं प्रपिबेत् ततः॥५०॥
प्रमेहं नाशयत्याशु केशरी करिणं यथा।
शुक्रप्रवाहं शमयेत् त्रिरात्रान्नात्र संशयः।
चिरजातं प्रवाहञ्च मधुमेहञ्च नाशयेत्॥५१॥ मेहकेशरी।

---

कस्तूरीमोदके वनिता प्रियङ्गुः चुद्रा कण्टकारी जीरकद्वयं जीरकं कृष्णजीरकञ्च। उत्पलं कुष्ठं। सर्वचूर्णात् चतुर्गुणेन धात्र्यादिरसेन पाचयेत्॥३६—४३॥
मेहवज्रे ताप्यं स्वर्णमाक्षिकं शिला मनःशिला॥४४—४७॥

सूतकं गन्धकं लौहं नागञ्चापि वराटिकाम् ।
ताम्रकं वङ्गभस्मापि व्योमकञ्च समांशिकम् ॥ ५२ ॥
सूक्ष्मैलापत्रमुस्तञ्च विड़ङ्गं नागकेशरम् ।
रेणुकामलकञ्चैव पिप्पलीमूलमेव च ॥ ५३ ॥
एषाञ्च द्विगुणं भागं मर्दयित्वा प्रयत्नतः ।
भावना तत्र दातव्या धात्रीफलरसेन च ॥ ५४ ॥
मात्रा चणकतुल्या च गुड़िकेयं प्रकीर्त्तिता ।
प्रमेहं बहुमूत्रञ्च अश्मरीं मूत्रकृच्छ्रकम् ॥ ५५ ॥
व्रणं हन्ति महाकुष्ठं अर्शांसि च भगन्दरम् ।
योगेश्वरो रसो नाम महादेवेन भाषितः॥५६॥ योगेश्वरो रसः ।

इति रसेन्द्रसारसंग्रहे प्रमेहाधिकारः ।

---

## अथ सोमरोगचिकित्सा ।

तालं सूतं समं गन्धं मृतलौहाभ्रवङ्गकम् ।
मर्दयेत् मधुना चैव रसोऽयं तालकेश्वरः ॥ १ ॥
माषमात्रं भजेत् क्षौद्रैर्बहुमूत्रप्रशान्तये ।
उडुम्बरफलं पक्वं चूर्णितं कर्षमानतः ।
संलेह्यं मधुना सार्द्धमनुपानं सुखावहम् ॥२॥ तालकेश्वरो रसः ।
गगनं त्रिफला लौहं कुटजं कटुकत्रयम् ।
पारदं गन्धकञ्चैव विषटङ्गनसर्जिकाः ॥ ३ ॥
त्वगेला तेजपत्रञ्च वङ्गं जीरकयुग्मकम् ।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥ ४ ॥

---

योगेश्वररसे समांशिकामित्येकभागसमं बोध्यम् ॥४८—५६॥

---

मूत्रगतविकारसाधर्म्यात् तथा प्रमेहान्तरस्य प्रायस्तुल्यत्वात् प्रमेहाधिकारे

तदर्द्धं चित्रकं चूर्णं कर्षकं मधुना लिहेत्।
अवश्यं विनिहन्त्याशु मूत्रातिसारसोमकम्॥५॥ गगनादि लौहम्
कर्षं जारितलौहञ्च तदर्द्धं रसगन्धकम्।
एलापत्रं निशायुग्मं जम्बुवीरणगोक्षुरकम् ॥ ६ ॥
विड़ङ्गं जीरकं पाठा धात्री दाड़िमटङ्कनम्।
चन्दनं गुग्गुलु लोध्र शालार्जुनरसाञ्जनम् ॥ ७ ॥
छागीदुग्धेन वटिकां कारयेत् दशरक्तिकाम्।
निर्मितो नित्यनाथेन सोमनाथरसस्त्वयम् ॥ ८ ॥
सोमरोगं बहुविधं प्रदरं हन्ति दुर्जयम्।
योनिशूलं मेढ्रशूलं सर्वजं चिरकालजम्।
बहुमूत्रं विशेषेण दुर्जयं हन्त्यसंशयः ॥९॥ सोमनाथरसः।
हिङ्गुलसम्भवं सूतं पालिधारसमर्दितम्।
रङ्गाशोधितगन्धञ्च तेनैव कज्जलीकृतम् ॥ १० ॥
तद्द्वयोर्द्विगुणं लौहं कन्यारसविमर्दितम्।
अभ्रकं वङ्गकं रौप्यं खर्परं माक्षिकं तथा ॥ ११ ॥
सुवर्णञ्च समं सर्वं प्रत्येकञ्च रसार्द्धकम्।
तत् सर्वं कन्यकाद्रावैर्मर्दयेत् भावयेत् ततः ॥१२॥
मेकपर्णीरसेनैव गुञ्जाद्वयवटीं ततः।
मधुना भक्षयेच्चापि सोमरोगनिवृत्तये ॥ १३ ॥
प्रमेहान् विंशतिं हन्ति बहुमूत्रञ्च सोमकम्।
मूत्रातिसारं कृच्छ्रञ्च मूत्राघातं सुदारुणम् ॥ १४ ॥
बहुदोषं बहुविधं प्रमेहं मधुसंज्ञकम्।
हस्तिमेहमिक्षुमेहं लालामेहं विनाशयेत् ॥ १५ ॥

---

एव प्रमेहविशेषस्य सोमरोगस्य चिकित्सामाह तालमित्यादि। गगनादिलौहे गगनमभ्रं सोमकं सोमरोगम् ॥१—५॥
सोमनाथरसे रसगन्धादीनां प्रत्येकं लौहार्द्धमानम् ॥६—८॥

वातिकं पैत्तिकञ्चैव श्लैष्मिकं सोमसंज्ञकम्।
नाशयेत् बहुमूत्रञ्च प्रमेहमविकल्पत:॥१६॥बृहत् सोमनाथरसः।
शालार्जुनं लोध्रञ्च कदम्बागुरुचन्दनम्।
अग्निमन्थं निशायुग्मं धात्रीदाड़िमगोक्षुरम् ॥१७॥
जम्बुवीरणमूलञ्च भागमेषां पलार्द्धकम्।
रसगन्धकधान्याब्दमेलापत्रं तथाभ्रकम् ॥ १८ ॥
लौहं रसाञ्जनं पाठा विड़ङ्गं टङ्गजीरकम्।
प्रत्येकं पलिकं भागं पलार्द्धं गुग्गुलोरपि ॥ १९ ॥
घृतेन वटिकां कृत्वा खादेत् षोड़शरक्तिकाम्।
गहनानन्दनाथेन रसो यत्नेन निर्मित: ॥ २० ॥
सोमेश्वरो महातेजा सोमरोगं निहन्त्यलम्।
एकजं द्वन्द्वजञ्चैव सन्निपातसमुद्भवम्।
मूत्राघातं मूत्रकृच्छ्रं कामलाञ्च हलीमकम् ॥ २१ ॥
भगन्दरोपदंशौ च विविधान् पीड़काव्रणान्।
विस्फोटार्बुदकण्डूञ्च सर्वमेहं विनाशयेत् ॥ २२ ॥
सोमेश्वरो रस: ।

इति रसेन्द्रसारसंग्रहे सोमरोगाधिकार: ।

---

## अथ स्थौल्याधिकार: ।

त्र्यूषणं विजया चव्यं चित्रकं विड़मौद्भिदम्।
वागुजी सैन्धवञ्चैव सौवर्चलसमन्वितम् ॥ १ ॥

---

बृहत् सोमनाथरसे रम्भा मूषिकपर्णी ॥१०—१६॥
सोमेश्वरलौहे शालं शालसारम्। अर्जुनमिति अर्जुनवल्कलम्। निशायुग्ममिति हरिद्राद्वयम् ॥१७—२२॥

अयश्चूर्णेन संयुक्तं भक्षयेत् मधुसर्पिषा।
स्थौल्यापकर्षणं श्रेष्ठं बलवर्णाग्निवर्द्धनम्॥ २॥
मेहघ्नं कुष्ठशमनं सर्वव्याधिहरं परम्।
नाहारे यन्त्रणा कार्य्या न विहारे तथैव च।
त्र्यूषणाद्यमिदं लौहं रसायनवरोत्तमम्॥३॥ त्र्यूषणाद्यं लौहम्।
सूतभस्म सतालञ्च लौहं ताम्रं समं समम्।
मर्दयेत् सूर्य्यपत्रेण चास्य वल्लं प्रयोजयेत्॥ ४॥
मधुना स्थूलरोगे च शोथे शूले तथैव च।
मध्वाज्यमनुपानञ्च देयं वापि कफोल्वणे॥५॥ वड़ाग्निलौहम्।
शुद्धसूतं समं गन्धं ताम्रं तालं समं समम्।
अर्कक्षीरैर्दिनं मर्द्यं क्षौद्रैर्लेह्यं त्रिगुञ्जकम्।
वड़वाग्निरसो नाम्ना स्थौल्यमाशु नियच्छति॥६॥ वड़वाग्निरसः

इति रसेन्द्रसारसंग्रहे स्थौल्याधिकारः

---

## अथ उदररोगाधिकारः।

शुद्धसूतं द्विधा गन्धं ताम्राभ्रं सैन्धवं विषम्।
कृष्णजीरं विड़ङ्गञ्च गुडूचीसत्वचित्रकम्॥ १॥
उग्रगन्धा यवक्षारं प्रत्येकं कर्षमात्रकम्।
निर्गुण्डिकाद्रवैरग्निवीजपूरद्रवैर्दिनम्॥ २॥
मर्दयेत् शोषयेत् सोऽयं रसस्त्रैलोक्यसुन्दरः।
गुञ्जाद्वयं घृतैर्लेह्यं वातोदरकुलान्तकम्॥ ३॥

---

प्रमेहवत् स्थौल्यस्यापि व्यायामसाध्यत्वात् तथा दुष्टमेदोजन्यत्वाच्च प्रमेहानन्तरं स्थौल्यचिकित्सामाह। त्र्यूषणादिलौहे त्र्यूषणं त्रिकटु, विजया मकाफलम्। वागुजी सोमराजी, लौहमत्र सर्वचूर्णसमम्॥१—३॥
वड़वाग्निलौहे सूर्य्याम्बु अर्करसः॥४—६॥

वह्निचूर्णं यवक्षारं प्रत्येकञ्च पलद्वयम् ।
घृतप्रस्थं विपक्तव्यं गोमूत्रैश्च चतुर्गुणैः ।
घृतावशेषं कर्त्तव्यं कर्षमात्रं पिबेदनु॥४॥ त्रैलोक्यसुन्दरो रसः ।

शुद्धसूतं द्विधा गन्धं मृताभ्राय: शिलाजतु ।
रससमानं प्रदातव्यं रसस्य द्विगुणं विषम् ॥५॥
त्रिकटु चित्रकं जीरा निर्गुण्डी मूषलीरजः ।
अजमोदा विषांशेन प्रत्येकञ्च नियोजयेत् ॥ ६ ॥
निम्बपञ्चाङ्गुलक्वाथैर्भावना चैकविंशतिः ।
भृङ्गराजरसैः सप्त दत्त्वा क्षौद्रैर्विलोड़येत् ॥ ७ ॥
भक्षयेद्बदराख्याभां वटिकां तां दिवानिशि ।
श्लेष्मोदरं निहन्त्याशु नाम्ना वैश्वानरी वटी ॥८॥
देवदारु वह्निमूलकल्कं क्षीरेण पाययेत् ।
भोजनं मेषदुग्धेन कुलत्थानां रसेन तु॥९॥ वैश्वानरी वटी ।

पिप्पली मरिचं ताम्रं रजनीचूर्णसंयुतम् ।
स्नुहीक्षीरैर्दिनं मर्द्यं तुल्यं जैपालवीजकम् ॥१०॥
निष्कं खादेद्विरेकं स्यात् सद्यो हन्ति जलोदरम् ।
रेचनानाञ्च सर्वेषां दध्यन्नं स्तम्भने हितम् ।
दिनान्ते च प्रदातव्यमन्नं वा मुद्गयूषकम्॥११॥ जलोदरारि रसः ।

सूतस्य गन्धकस्याष्टौ रजनी त्रिफला शिलाः ।
प्रत्येकञ्च द्विभागं स्यात् त्रिवृत् जैपालचित्रकम् ॥१२॥

---

उदरोक्तिधसाधर्म्यात् स्थौल्यानन्तरम् उदरचिकित्सितम् उच्यते, शुद्धसूत मित्यादि। वैश्वानरीवटिकायां अर्कक्षारं, अयो लौहं, मूषलीरजः तालमूली चूर्णं, विषांशेनेति विषार्द्धभागेन पञ्चाङ्गुलक्वाथैः एरण्डमूलक्वाथैः ॥१—९॥

जलोदरारिरसे तुल्यं जैपालवीजकमिति सर्वं चूर्णसमं जैपालचूर्णम् ॥१०—११॥

प्रत्येकञ्च त्रिभागञ्च व्योषं दन्तिकजीरकम्।
प्रत्येकं सप्तभागं स्यादेकीकृत्य विचूर्णयेत्॥ १३॥
जयन्ती स्नुक्पयोभृङ्गवह्निवातारितैलकैः।
प्रत्येकेन क्रमाद्भाव्यं सप्तवारं पृथक् पृथक्॥ १४॥
महावह्निरसो नाम्ना निष्कमुष्णजलैः पिबेत्।
विरेचनं भवेत्तेन तक्रभुक्तं ससैन्धवम्॥ १५॥
दिनान्ते दापयेत् पथ्यं वर्जयेच्छीतलं जलम्।
सर्वोदरहरः प्रोक्तः श्लेष्मवातहरः परः॥ १६॥ महावह्निरसः।
द्वौ भागौ शिववीजस्य गन्धकस्य चतुष्टयम्।
अभ्रवह्निविड़ङ्गानां गुडूचीसत्वनागयोः॥१७॥
कृष्णजीरकटूनाञ्च लवणक्षारयोरपि।
प्रत्येकं भागमादाय मर्दयेत् सुरसाद्रवैः॥ १८॥
वीजपूररसैर्भूयो मर्दयित्वा विशोषयेत्।
त्रैलोक्यडुम्बरो नाम वातोदरकुलान्तकः॥ १९॥
गुञ्जाद्वयं ततश्चास्य दद्दीत घृतसंयुतम्।
भोजयेत् स्निग्धमुष्णञ्च पायसञ्च विवर्जयेत्॥ २०॥
त्रैलोक्यडुम्बरो रसः।
शुण्ठी मरिचसंयुक्तं रसगन्धकटङ्कनम्।
जैपालो द्विगुणः प्रोक्तः सर्वमेकत्र चूर्णयेत्॥ २१॥
इच्छाभेदी द्विगुञ्जः स्यात् सितया सह दापयेत्।
पिबेत्तु चुल्लकान् यावत्तावद्वारान् विरेचयेत्॥ २२॥
इच्छाभेदी रसः।

---

महावह्निरसे चतुःसूतेति चतुर्भागः सूतस्य हरिद्रादि हरीतक्यान्तं प्रत्येकं द्विभागः तेन प्रत्येकं सूतार्द्धम। चित्रतादिचित्रकान्तानां प्रत्यकं त्रिभागः दन्त्यादि जीरकान्तानां प्रत्येकं चाष्टौ भागाः तेन गन्धकसमत्वम्॥१२—१६॥

त्रैलोक्यडुम्बुररसे शिववीजं पारदः नाग सीसकम्। अभ्रादिक्षारान्तानां च एकादशद्रव्याणां प्रत्येकम् एको भागः॥१७—२०॥

पिप्पलीमूलचित्राभ्र त्रिकत्रयेन्दु सैन्धवम् ।
सर्वचूर्णसमं लौहं हन्ति सर्वोदरामयम् ॥२३॥ पिप्पल्याद्यं लौहम्
पारदं शुक्तितुल्यञ्च जैपालं पिप्पलीसमम् ।
आरग्वधफलात् मज्जा वज्रीक्षीरेण मर्दयेत् ॥ २४ ॥
माषमात्रां वटीं खादेत् स्त्रीणां जलोदरं जयेत् ।
चिञ्चाफलरसञ्चानु पथ्यं दध्योदनं हितम् ।
दकोदरहरञ्चैव तीव्रेण रेचनेन च ॥ २५ ॥ उदरारिरसः ।
सूतभस्म वङ्गभस्म भागैकं सम्प्रकल्पयेत् ।
गन्धकं मृतताम्रञ्च प्रत्येकञ्च चतुःपलम् ॥२६॥
अर्कक्षीरैर्दिनं मर्द्यं सर्वं तद्गोलकीकृतम् ।
रुद्ध्वा तत् भूधरे पक्वा पुटकेन समुद्धरेत् ॥२७॥
एष वङ्गेश्वरो नाम पीतो गुल्मोदरं जयेत् ।
घृतैर्गुञ्जाद्वयं लेह्यं निष्कां श्वेतपुनर्नवाम् ॥२८॥
गवां मूत्रैः पिबेच्चानु रजनीं वा गवां जलैः ॥२९॥ वङ्गेश्वरो रसः

इति उदराधिकारः ।

---

## अथ प्लीहरोगचिकित्सा ।

रोहितकसमायुक्तं त्रिकत्रययुतं ततः ।
प्लीहानमग्रमांसञ्च यकृतञ्च विनाशयेत् ॥१॥ रोहितक लौहम् ।

---

उदरारिरसे वज्रीक्षीरेण स्नुहीक्षीरेण ॥२१—२५॥

वङ्गेश्वरे भागैकं सम्प्रकल्पयेदिति प्रत्येकं पलमित्यर्थः ॥२६—२८॥

---

प्लीहवृद्धौ उदरसम्भवादनन्तरं प्लीहचिकित्सामाह ।—

रोहितकलौहे रोहितको रोहरेति ख्यातो वृक्षः, अस्य वल्कलं ग्राह्यम् । अत्र
सर्वचूर्णसमं लौहं मधुना लौहपात्रे विमर्द्य रक्तिकादिक्रमेण लिह्यात् ॥१॥

पारदं गन्धकञ्चैव समभागं विमर्दयेत्।
मृताभ्रं रसतुल्यञ्च यत्नतः परिमर्दयेत् ॥२॥
रसात् द्विगुणलौहञ्च लौहतुल्यञ्च ताम्रकम्।
भस्म वराटिकायाश्च ताम्रतस्त्रिगुणं कुरु ॥३॥
नागवल्लीदलेनैव मर्दयेत् यत्नतो भिषक्।
पुटेत् गजपुटे विद्वान् स्वाङ्गशीतं समुद्धरेत् ॥४॥
यकृत् प्लीहोदरं गुल्मं क्षयथुञ्च विनाशयेत्।
पिप्पलीमधुसंयुक्तां सगुड़ां वा हरीतकीम्।
मूत्रञ्च पिबेच्चानु गुड़ं वा जीरकान्वितम् ॥५॥ लोकनाथरसः
शुद्धसूतं द्विधा गन्धं खल्ले कृत्वातु कज्जलम्।
सूततुल्यं जारिताभ्रं मर्दयेत् कन्यकाम्बुना ॥६॥
ततो द्विगुणितं दद्यात् ताम्रं लौहं प्रयत्नतः।
काकमाचीरसेनैव सर्वं तत् परिमर्दयेत् ॥७॥
सूताच्च द्विगुणं गन्धं वराटीसम्भवं रजः।
पिष्ट्वा जम्बीरनीरेण मूषायुग्मं प्रकल्पयेत् ॥८॥
तन्मध्ये गोलकं क्षिप्त्वा यत्नेन छादयेत् भिषक्।
शरावसम्पुटं कृत्वा मृद्भस्मलवणाम्बुभिः ॥९॥
शरावसन्धिमालिप्य चातपे शोषयेत् क्षणम्।
ततो गजपुटं दत्त्वा स्वाङ्गशीतं समुद्धरेत् ॥१०॥
पिष्ट्वातु सर्वमेकत्र स्थापयेत् भाजने शुभे।
खादेत् वल्लद्वयञ्चास्य मूत्रञ्चानुपिबेन्नरः ॥११॥
मधुना पिप्पलीचूर्णं सगुड़ां वा हरीतकीम्।
अजाजीं वा गुड़ेनैव भक्षयेत् तुल्ययोगतः ॥१२॥
यकृत्प्लीहोदरोऽग्रञ्च क्षयथुञ्च विनाशयेत्।
वाताष्ठीलाञ्च कमठीं प्रत्यष्ठीलां तथैव च ॥१३॥
कांस्यक्रोड़ाग्रमांसञ्च शूलञ्चैव भगन्दरम्।

वह्निमान्द्यञ्च कासञ्च लोकनाथरसोत्तमः ॥ १४ ॥

बृहल्लोकनाथोरसः ।

हिङ्गुत्रिकटुकञ्चैवापामार्गस्य च पत्रकम् ।
अर्कपत्रं तथा स्नुहीपत्रञ्च समभागिकम् ॥१५॥
सैन्धवं तत्समं ग्राह्यं लौहं ताम्रञ्च तत्समम् ।
प्लीहानं यकृतं गुल्ममामवातं सुदारुणम् ॥१६॥
अर्शांसि घोरमुदरं मूर्च्छां पाण्डुं हलीमकम् ।
ग्रहणीमतीसारञ्च यक्ष्माणं शोथमेव च ॥१७॥

ताम्रेश्वरवटी ।

तुत्थरामठटङ्गानि सैन्धवं धान्यजीरकम् ।
यमानी मरिचं शुण्ठी लवङ्गैलाविड़ङ्गकम् ॥ १८ ॥
प्रत्येकं तोलकं चूर्णं लौहचूर्णन्तु तत्समम् ।
रसस्य गन्धकस्यापि पलैकं कज्जलीकृतम् ॥ १९ ॥
घृतेन मधुना खाद्यं लौहमग्निकुमारकम् ।
यकृत् प्लीहोदरहरं गुल्मञ्चापि हलीमकम् ॥ २० ॥
बलवर्णाग्निजननं कान्तिपुष्टिविवर्द्धनम् ।
श्रीमद्गहननाथेन निर्मितं विश्वसम्पदे॥२१॥अग्निकुमारलौहम्।

लौहं ताम्रं वराटञ्च तुत्थं हिङ्गु फलत्रिकम् ।
स्नुहीमूलं यवक्षारं जैपालं टङ्कनं त्रिवृत् ॥ २२ ॥
प्रत्येकञ्च पलं ग्राह्यं छागीदुग्धेन पेषितम् ।
चतुर्गुञ्जां वटीं खादेद्वारिणा मधुनापि वा ॥ २३ ॥
प्राणवल्लभनामायं गहनानन्दभाषितः ।

---

ताम्रेश्वरे अपामार्गपत्रस्य तथा अर्कपत्रस्य तथा स्नुहीपत्रस्य च क्षारम् इति उपदिशन्ति वृद्धाः ॥२—१७॥

अग्निकुमारलौहे रामठं हिङ्गु ॥१९—२१॥

दोषं रोगञ्च संवीक्ष्य युक्त्या वा त्रुटीवर्द्धनम् ॥ २४ ॥
निहन्ति कामलां पाण्डुमानाहं श्लीपदार्वुदम्।
गलगण्डं गण्डमालां व्रणानि च हलीमकम् ॥ २५ ॥
अपचीं वातरक्तञ्च कण्डूं विस्फोटकुष्ठकम्।
नातःपरतरः श्रेष्ठः कामलार्त्तिभयेष्वपि ॥२६॥ प्राणवल्लभोरसः।
द्विकर्षं लौहचूर्णस्य चाभ्रकस्य पलार्द्धकम्।
कर्षं शुद्धं मृतं ताम्रं लिम्पाकाङ्घ्रि त्वचं पलम् ॥ २७ ॥
मृगाजिनभस्मपलं सर्वमेकत्र कारयेत्।
नवगुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् ॥ २८ ॥
यावत् प्लीहोदरञ्चैव कामलाञ्च हलीमकम्।
कासं श्वासं ज्वरं हन्यात् बलवर्णाग्निकारकम्।
यकृदरिरिदं लौहं वातगुल्मविनाशनम्॥२९॥ यकृदरिलौहम्।
शुद्धसूतं समं गन्धं जारिताभ्रं समं समम्।
गन्धकाद्द्विगुणं लौहं मृतताम्रं चतुर्गुणम् ॥ ३० ॥
द्विक्षारं टङ्गनं विड़ं वराटमथ शङ्खकम्।
चित्रकं कुनटीं तालं कटुकीं रामठं तथा ॥३१॥
रोहितकं त्रिवृच्चिञ्चां विशालाधवमङ्कठम्।
अपामार्गंताललण्डं मल्लिका च निशायुगम् ॥ ३२ ॥
कानकं तुत्थकञ्चैव यकृन्मर्दं रसाञ्जनम्।
एतानि समभागानि चूर्णयित्वा विभावयेत् ॥ ३३ ॥
आर्द्रकस्वरसेनैव गुडूच्याः स्वरसेन च।
मधुनः कुड़वैर्भाव्य वटिका माषमात्रतः ॥३४॥

---

प्राणवल्लभरसे फलत्रिकं त्रिफला ॥२२—२६॥
यकृदरिलौहे लिम्पाकाङ्घ्रित्वचं लिम्पाकमूलवल्कलम् ॥२७—२९॥
मृत्युञ्जयलौहे जारिताभ्रमिति मृताभ्रम्। मृतताम्रं चतुर्गुणमिति भस्मवास

अनुपानं प्रदातव्यं बुद्धा दोषानुसारतः ।
भक्षयेत् प्रातरुत्थाय सर्वरोगकुलान्तकम् ॥ ३५ ॥
प्लीहानं ज्वरमुग्रञ्च कासञ्च विषमज्वरम् ।
चिरजं कुलजञ्चैव श्लीपदं हन्ति दारुणम् ॥ ३६ ॥
रोगानीकविनाशाय धन्वन्तरिकृतं पुरा ।
मृत्युञ्जयमिदं लौहं सिद्धिदं शुभदं नृणाम् ॥ ३७ ॥ मृत्युञ्जयलौहम्

हिङ्गुलं गन्धकं टङ्गमभ्रकं विषमेव च ।
प्रत्येकं पलिकं भागं चूर्णयेदतिचिक्कणम् ॥ ३८ ॥
पिप्पली मरिचञ्चैव प्रत्येकञ्च पलार्द्धकम् ।
मर्दयित्वा वटीं कुर्य्यात् बल्लमात्रां प्रयत्नतः ॥ ३९ ॥
सेव्या शेफालिदलजैर्वटी माक्षिकसंयुता ।
प्लीहानं षट्प्रकारञ्च हन्ति शीघ्रं न संशयः ॥ ४० ॥
ज्वरं मन्दानलञ्चैव कासं श्वासं वमिं भ्रमिम् ।
प्लीहार्णव इति ख्यातो गहनानन्दभाषितः ॥ ४१ ॥ प्लीहार्णवोरसः ।

सूतकं गन्धकं व्योषं समभागं पृथक् पृथक् ।
एभिः समं ताम्रभस्म योजयेच्चैव बुद्धिमान् ॥ ४२ ॥
मनःशिला वराटञ्च तुल्यं रामठलौहकम् ।
जयन्ती रोहितञ्चैव क्षारटङ्गनसैन्धवम् ॥ ४३ ॥
विड़ं चित्रं काननञ्च रसतुल्यं पृथक् पृथक् ।
भावयेत् त्रिदिनं यावत् त्रिवृच्चित्रकणार्द्रकैः ॥ ४४ ॥
गुञ्जामात्रां वटीं खादेत् सद्यः प्लीहविनाशनम् ।

---

गन्धकात् चतुर्गुणमित्यर्थः । कुनटी मनःशिला चिञ्चा तिन्तिड़ीत्वग्भस्म । ध्रवः खदिरः ॥३०—३७॥

प्लीहार्णवे जम्बीररसेन शोधितं हिङ्गुलं ग्राह्यम् । विषञ्चात्र गोमूत्रशोधितम् । शेफालिदलजैरित्यत्र रसैरिति शेषः ॥ ३८ ॥ ४० ॥

मधुपिप्पलीसंयुक्तां द्विगुञ्जां वा प्रयोजयेत् ॥ ४५ ॥
प्लीहानमग्रमांसञ्च यकृद्गुल्मं सुदुस्तरम्।
आमाशयेषु सर्वेषु चोदरे शोथविद्रधौ ॥ ४६ ॥
अग्निमान्द्ये ज्वरे चैव प्लीह्नि सर्वज्वरेषु च।
श्रीमद्गहननाथेन भाषितः प्लीहशार्दूलः॥४७॥ प्लीहशार्दूलोरसः।
द्विकर्षं लौहभस्मापि कर्षं ताम्रं प्रदापयेत्।
शुद्धसूतं तथा गन्धं कर्षमानं भिषग्वरः ॥४८॥
मृगाजिनं पलं भस्म लिम्पाकाङ्घ्रि त्वचः पलम्।
एवं भागक्रमेणैव कुर्य्यात् प्लीहारिकां वटीम् ॥४९॥
नवगुञ्जमितां खादेच्चाथ नित्यं हि पूतवान्।
प्लीहानं यकृतं गुल्मं हन्त्यवश्यं न संशयः ॥५०॥ प्लीहारिरसः।
कर्षकं तालचूर्णस्य तत्पादांशं सुवर्णकम्।
पलार्द्धं मृतताम्रञ्च तत्समं शुद्धमभ्रकम् ॥ ५१ ॥
मृगजिनस्य भस्मापि कर्षमत्र प्रदापयेत्।
लिम्पाकाङ्घ्रित्वचस्तद्वत् सर्वमेकत्र कारयेत् ॥५२॥
रसगुञ्जाप्रमाणेन वटिकां कारयेत्ततः।
मधुना वह्निचूर्णेन खादेन्नित्यं यथाबलम् ॥५३॥
असाध्यमपि प्लीहानं हन्त्यवश्यं न संशयः।
यकृतं पाण्डुरोगञ्च गुल्मादिकभगन्दरान् ॥५४॥ प्लीहारिरसः।
रसगन्धकलौहाभ्रं कुनटीमृतताम्रकम्।
विषमुष्टिवराटञ्च तुल्यं शङ्खं रसाञ्जनम् ॥५५॥
जातीफलञ्च कटुकी द्विक्षारं कानकं तथा।

---

प्लीहशार्दूलरसे क्षारं यवक्षारं कानकं जैपालम् ॥ ४२ ॥ ४७ ॥
प्लीहारिरसे शुद्धसूतं तथा गन्धं कर्षमानमित्यत्र प्रत्येकमिति शेषः ॥४८॥५०॥
प्लीहारिरसे रसगुञ्जा षट्गुञ्जेत्यर्थः ॥ ५१ ॥ ५४ ॥

व्योषं हिङ्गु सैन्धवञ्च प्रत्येकं सूततुल्यकम् ॥५६॥
श्लक्ष्णचूर्णीकृतं सर्वमेकत्र भावयेत्ततः।
सूर्य्यावर्त्तरसेनैव विल्वपत्ररसेन च ॥५७॥
सूर्य्यावर्त्तेन मतिमान् वटिकां कारयेत्ततः।
प्लीहानं यकृतं गुल्ममष्ठीलाञ्च विनाशयेत् ॥५८॥
अग्रमांसं तथा शोथं तथा सर्वोदराणि च।
वातरक्तञ्च कमठं चान्तर्विद्रधिमेव च ॥५९॥ लौहमृत्युञ्जयोरसः

रसगन्धकलौहाभ्रं कुनटीतुल्यताम्रकम्।
सैन्धवञ्च वराटञ्च वागुजीविड़शङ्खकम् ॥६०॥
चित्रकं हिङ्ग कटुको द्विक्षारं कट्फलं तथा।
रसाञ्जनं जयन्ती च टङ्गनं समभागिकम् ॥६१॥
एतत्सर्वं विचूर्ण्याथ दिनमेकं विभावयेत्।
आर्द्रकस्वरसेनैव गुडूचीस्वरसेन च ॥६२॥
गुञ्जामात्रां वटीं कृत्वा भक्षयेत् मधुना सह।
नानारोगप्रशमनो यकृद्गुल्मोदराणि च ॥६३॥
अग्रमांसं तथा प्लीहमग्निमान्द्यमरोचकम्।
एतान् सर्वान् निहन्त्याशु भास्करस्तिमिरं यथा।
महामृत्युञ्जयो नाम महेशेन प्रकाशितः ॥६४॥ महामृत्युञ्जयोरसः

विड़ङ्गं त्र्यूषणं हिङ्गु कुष्ठं लवणपञ्चकम्।
त्रिक्षारं फेनकं चव्यं श्रेयसी कृष्णजीरकम् ॥६५॥
तालपुष्पोद्भवं क्षारं नाड्याः कुष्माण्डकस्य च।
अपामार्गोद्भवं क्षारं चिञ्चायाः चित्रकं तथा ॥६६॥

---

लौहमृत्युञ्जयरसे कानकं नैपालफलम् ॥ ५५ ॥ ५९ ॥
महामृत्युञ्जये वागुजी हाकुचीति ख्याता केचित्तु सोमराजीत्याहुः ॥६०॥६४॥

एतानि समभागानि पुराणो द्विगुणो गुड़ः।
गुड़तुल्यं प्रदातव्यं चूर्णञ्चैव कणोद्भवम् ॥६७॥
मर्दयित्वा दृढ़े पात्रे मोदकानुपकल्पयेत्।
भक्षयेत् वर्द्धयेन्नित्यं प्लीहानं हन्ति दुस्तरम् ॥६८॥
प्रमेहं पाण्डुरोगञ्च कामलं वह्निमान्द्यकम्।
यकृतं पञ्चगुल्मञ्च तूदरं सर्वरूपकम् ॥६९॥
जीर्णज्वरं तथा शोथं कासं पञ्चविधं तथा।
अश्विभ्यां निर्मिता ह्येषा सुवृहद्गुड़पिप्पली ॥७०॥ वृहद्गुड़पिप्पली

अभ्रपारदगन्धञ्च कर्षद्वयमितं पृथक्।
सर्वैः समं भवेत् ताम्रं जम्बीराम्लेन मर्दयेत् ॥७१॥
सूर्य्यावर्त्तरसैः पश्चात् कणामोचरसेन च।
योजयेत् तीव्रघर्मे तु यावत् सर्वन्तु जीर्य्यति ॥७२॥
जम्बीरस्य रसैर्भूयो रसं दण्डेन चालयेत्।
दृढ़े शिलामये पात्रे चूर्णयेदतिशोभनम् ॥७३॥
रक्तिद्वयक्रमेणैव योज्यं माषद्वयावधि।
ह्रासयेच्च क्रमेणैव तथा चैव विवर्द्धयेत् ॥७४॥
जीर्णे भुञ्जीत शाल्यन्नं क्षीरं घृतसमन्वितम्।
हन्त्यम्लपित्तं विविधं ग्रहणीं विषमज्वरम् ॥७५॥
चिरज्वरं प्लीहगदं यकृद्रोगं सुदुस्तरम्।
अग्रमांसं तथा शोथं कांस्यक्रोड़ं सुदुर्जयम् ॥७६॥
कमठञ्च तथा शोथमुदरञ्च सुदारुणम्।
धातुवृद्धिकरं वृष्यं बलवर्णकरं शुभम् ॥७७॥
सद्यो वह्निकरञ्चैव सर्वरोगहरं परम्।

---

गुड़पिप्पलिकायां वूषणं त्रिकटुकं फेनकं समुद्रफेनं तालपुष्पोद्भवक्षार-मिति तालखण्डक्षारमित्यर्थः ॥ ६५ ॥ ७० ॥

सुखशुद्धिर्विधातव्या पर्णैश्चूर्णसमन्वितैः ।
ताम्रकल्पमिदं नाम्ना सर्वरोगप्रशान्तये ॥७८॥ ताम्रकल्पम्

दारु सैन्धवगन्धञ्च भस्मीकृत्य प्रयत्नतः ।
प्लीहानमग्रमांसञ्च यकृतञ्च विनाशयेत् ॥७९॥

सामुद्रं सैन्धवं काचं यवक्षारं सुवर्चलम् ।
टङ्कनं सर्जिकाक्षारं तुल्यं सर्वं विचूर्णयेत् ॥८०॥

अर्कक्षीरैः स्नुहीक्षीरैरातपे भावयेत् त्र्यहम् ।
तेन लिप्तार्कपत्रञ्च रुद्ध्वा चान्तःपुटे पचेत् ॥८१॥

तत् क्षारं चूर्णयेत् पश्चात् त्रूषणं त्रिफलारजः ।
जीरकं रजनीवह्निनवभागं समं समम् ॥८२॥

क्षारार्द्धमेव सर्वञ्च एकीकृत्य प्रयोजयेत् ।
वज्रक्षारमिदं सिद्धं स्वयं प्रोक्तं पिनाकिना ॥८३॥

सर्वोदरेषु गुल्मेषु शूलदोषेषु योजयेत् ।
अग्निमान्द्येऽप्यजीर्णेऽपि भक्ष्यं निष्कद्वयं द्वयम् ॥८४॥

वाताधिके जलं कोष्णं घृतं वा पैत्तिके हितम् ।
कफे गोमूत्रसंयुक्तमारनालं त्रिदोषजे ॥८५॥ वज्रक्षारम् ।

रसगन्धकभस्मताम्रकं कटुक्षारयुगं सटङ्कनम् ।
कणमूलकचव्यचित्रकं लवणानि यमानिरामठम् ।
समभागमिदं विभावयेत् खरतापेत्वथ जम्बुवारिणा ।
उदरामयकुम्भिकेशरी रस एष प्रथितोऽस्य माषकः
सुरवार्य्यनुपाययेत् भिषक् प्रसभं हन्ति गदव्रजं रसः ॥८७॥

---

ताम्रकल्पे दारु दारुभूषम् ॥ ७१—७९ ॥

वज्रक्षारे सामुद्रादि सर्वं स्नुहीक्षीरैः आतपे भावयेत् ततस्तेन कल्केन अर्कपत्रं ताम्रपात्रं लिप्त्वा अन्तर्दग्धव्यं यथा भस्मीभवति । ततस्तत्क्षारसहितं ताम्रं विचूर्ण्य त्रूषणादिचूर्णञ्च यथोक्तं गृहीत्वा मर्दयेदिति ॥ ८० ॥ ८५ ॥

यकृतं क्रिमिमग्रमांसकं कमठं प्लीहजलोदराद्वयम्।
जठरानलसादगुल्मकं पवनं साममयाम्लपित्तकम् ॥८८॥
उदरामयकुम्भिकेशरी।

चतुर्विंशतिभागाः स्युर्गन्धाद्वङ्गं तदर्द्धकम्।
वङ्गभागात् भवेदर्द्धः पारदः कृष्णमभ्रकम् ॥८६॥
चतुर्दशविभागं स्यात् मृतं तत् दीयते पुनः।
मृतलौहमष्टभागं मृतताम्रं नवात्र तत् ॥९०॥
मृतं हेमद्वयं तेषां मृतरूप्यञ्च सप्तकम्।
अतिशुद्धमतिस्थूलं मृतं हीरं त्रयोदश ॥९१॥
भागा ग्राह्या माक्षिकस्य विशुद्धस्यात्र षोड़श।
अष्टादशमितं ग्राह्यं नवकाशीशकं पुनः ॥९२॥
तुत्थकञ्च षड़ेवात्र नवीनं ग्राह्यमेव च।
तालकञ्च चतुर्भागं शिला योज्यास्त्रयो बुधैः ॥९३॥
शैलेयं पञ्च दातव्यं सर्वमेकत्र नूतनम्।
मृतमौक्तिकभागैकं सौभाग्यं द्वयमेव च ॥९४॥
कुट्टयित्वा विचूर्ण्याथ जम्बीरस्य रसेन वै।
भावयेत् सप्तधा गाढ़ं गुड़िकां तस्य कारयेत् ॥९५॥
पानकद्वितये कृत्वा मुद्रयेत् पानकद्वयम्।
घटमध्ये निवेश्याथ दत्त्वा पूर्वञ्च बालुकाम् ॥९६॥
ऊर्द्धञ्च तां पुनर्दत्त्वा बालुकां मुद्रयेत् मुखम्।
अहोरात्रं दहेदग्नौ स्वाङ्गशीतं समुद्धरेत् ॥९७॥
वकुलस्य च बीजेन कण्टकारीद्वयेन च।
गुड़ूची त्रिफला वारा भावयेत् सप्तसप्ततः ॥ ९८ ॥
वृद्धदाररसेनापि तथा देयास्तु भावनाः।

---

उदरामयकुम्भीकेशरीरसे शुल्वं ताम्रं कटुका त्रिकटुकं लवणानि पञ्चलव-

गिरिकर्ण्या रसेनापि रोहितमत्स्यपित्ततः ॥९९॥
एवं सिद्धो भवेत् सम्यक् रसोऽसौ वारिशोषणः।
देवान् गुरून् समभ्यर्च्य यतिनो गुरवस्तथा ॥१००॥
रक्तिकाद्वितयं देयं सन्निपाते समुच्छ्रये।
मरिचेन समं देयं तेन जागर्त्ति मानवः ॥१०१॥
श्लैष्मिके च गदे देयं ग्रहण्यामग्निमान्द्यके।
प्लीह्नि पाण्डौ प्रयोक्तव्यं त्रिकटु त्रिफलाम्भसा ॥ १०२ ॥
शूलरोगे प्रयोक्तव्यमुदावर्त्ते विशेषतः।
कुष्ठे सुदुष्टे देयोऽयं काकोडुम्बरिकाम्भसा ॥१०३॥
अतिवह्निकरः शोदो बलवर्णाग्निवर्द्धनः।
धन्वन्तरिकृतः सद्यो रसः परमदुर्लभः।
सर्वरोगे प्रयोक्तव्यो निःसन्देहं भिषग्वरैः॥१०४॥वारिशोषणोरसः

गन्धं सूतं तपनगगनं कान्तलौहस्य चूर्णम्
कृत्वैकस्मिन् दृशदि मथितं शृङ्गवेरस्य सारैः।
गुञ्जाद्रोगे यकृति गुदजे प्लीह्नि सर्वज्वरेषु
शोथे पाण्डौ क्रिमिकृतगदे सर्वतः कामलायाम् ॥ १०५ ॥
कासे श्वासे च मेहे जठरजलगदे सर्वदोषप्रभूते।
ख्यातो योगः सुरमणिकृतः सर्वरोगैकहन्ता ॥१०६॥ सर्वतोभद्रः

इति प्लीहाधिकारः।

---

यानि अत्र चर्व्यं,चित्रकचूर्णञ्च न प्रयच्छन्ति वृद्धाः। कणमूलं पिप्पलीमूलं कान्दसत्वात् रूक्षः एवं सुर इत्यत्रापि ॥८६—१०६॥

इति प्लीहाधिकारः।

## अथ शोथरोगचिकित्सा।

त्रिकटु त्रिफलादन्ती मार्गत्रिमदशुण्ठकैः।
पुनर्नवासमायुक्तं शोथं हन्ति सुदुस्तरम्।
लौहं शोथोदरस्थौल्यं जलोदरनिवारणम् ॥१॥ त्रिकट्वाद्यं लौहम्
कटुकी त्र्यूषणं दन्ती विड़ङ्गं त्रिफला तथा।
चित्रको देवकाष्ठञ्च त्रिवृद्दारणपिप्पली ॥ २ ॥
तुल्यान्येतानि चूर्णानि द्विगुणं स्यादयोरजः।
क्षीरेण पीतमेतत्तु श्रेष्ठं श्वयथुनाशनम् ॥३॥ कटुकाद्यं लौहम्।
अयोरजस्त्र्यूषण यावशूकं चूर्णञ्च पीतं त्रिफलारसेन।
शोथं निहन्यात् सहसा नरस्य यथाशनिर्वृक्षमुदीर्णवेगम्॥४
त्र्यूषणाद्यं लौहम्।
सुवर्चला व्याघ्रनखं चित्रकं कटुरोहिणी।
चव्यञ्च देवकाष्ठञ्च दीप्यकं लौहमेव च।
शोथं पाण्डुं तथा कासमुदराणि निहन्ति च ॥ ५ ॥
सुवर्चलाद्यं लौहम्।
क्षारद्वयं स्यात् लवणानि पञ्च चत्वार्य्ययो व्योषफलत्रिकं च।
सपिप्पलीमूलविड़ङ्गसारं मुस्ताजमोदामरदारु विल्वम् ॥६॥
कलिङ्गकश्चित्रकमूलपाठा यष्ट्याह्वयं सातिविषं पलाशम्।
सहिङ्गु कर्षं त्वतिसूक्ष्मचूर्णं द्रोणं तथा मूलकशुण्ठकानाम् ॥७॥
...स्मनस्तत् सलिलेन सिद्धमालोड्य यावद् घनमप्रदग्धम्।
...नं ततः कोलसमाञ्च मात्रां कृत्वा तु शुष्कां विधिना प्रयुञ्ज्यात्८

---

...त्सेधसाधर्म्यादनन्तरं शोथचिकित्सामाह। त्रिकट्वादिलौहे मार्गः अपामार्गः। ...ण्ठकैरिति शुष्कमूलकैः। लौहमत्र सर्वचूर्णसमम् ॥ १ ॥
कटुकादिलौहे त्र्यूषणं त्रिकटु। वारणपिप्पली गजपिप्पली ॥२—३॥
त्र्यूषणादिलौहे सर्वचूर्णसमं लौहम् ॥ ५ ॥

प्लीहोदरं श्वित्रहलीमकार्शः पाण्ड्वामयारोचकशोथशोषान्।
विसूचिकागुल्मगराश्मरीश्च सश्वासकासान् प्रणुदेत् सकुष्ठान्॥
सौवर्चलं सैन्धवञ्च विड़मौद्भिदमेव च
सामुद्रलवणाश्चात्र जलमष्टगुणं भवेत् ॥१०॥ क्षारगुड़िका
सूतभस्म भङ्गभस्म भागैकैकं प्रकल्पयेत्।
गन्धकं मृतताम्रञ्च प्रत्येकञ्च चतुर्गुणम् ॥ ११ ॥
अर्कक्षीरैर्दिनं मर्द्यं सर्वं तद्गोलकीकृतम्।
रुद्ध्वा तु भूधरे पक्त्वा पुटकेन समुद्धरेत् ॥ १२ ॥
एष वङ्गेश्वरो नाम्ना प्लीहगुल्मोदरान् जयेत्।
घृतैर्गुञ्जाद्वयं लिह्यात् निष्कां श्वेतपुनर्नवाम्।
गवां मूत्रैः पिबेच्चानु रजनीं वा गवां जलैः ॥१३॥ वङ्गेश्वर

इति शोथाधिकारः।

## अथ अर्बुदरोगचिकित्सा।

शुद्धसूतं समं गन्धं मर्द्यं यामचतुष्टयम्।
नागवल्लीरसैर्युक्तं मेघनादपुनर्नवैः ॥१॥
गोमूत्रपिप्पलीयुक्तं मर्द्यं रुद्ध्वा पुटेत् लघु।
लिह्यात् क्षौद्रैः रसो रौद्रो गुञ्जामात्रोऽर्बुदं जयेत् ॥२॥रौद्रो रस
रामबाणादिकान् योगवाहिनोऽत्र प्रयोजयेत्।

इति अर्बुदाधिकारः।

---

क्षारगुड़िकायां लवणानि पञ्चेति पञ्चलवणानि अयश्चतुष्कमिति चतुर्विध लौहं ग्राह्यम्। विड़ङ्गसारं विड़ङ्गतण्डुलम्। मूलकभस्मनः सलिलं पु पाकात् घनतामुपगते यवक्षारादि सर्वं प्रक्षेपणीयम् ॥९—१३॥

इति शोथाधिकारः।

## अथ श्लीपदरोगचिकित्सा।

हिङ्गुलात् सम्भवं सूतं गन्धकं मृततास्त्रकम्।
वङ्गं तालञ्च तुत्थञ्च शङ्खं कांस्यं वराटकम् ॥२॥
त्रिकटु त्रिफलालौहं विड़ङ्गं पटुपञ्चकम्।
चविकापिप्पलीमूलं हवुषा च वचा तथा ॥२॥
शटी पाठा देवदारु एला च वृद्धदारकम्।
एतानि समभागानि वटिकां कुरु यत्नतः ॥३॥
हरीतकीरसं दत्त्वा पञ्चगुञ्जामितां शुभाम्।
एकैकां भक्षयेत् नित्यं शीतं वारि पिबेदनु ॥४॥
श्लीपदं कफवातोत्थं रक्तमांसगतञ्च यत्।
मेदोगतं धातुगतं हन्त्यवश्यं न संशयः ॥५॥
श्रीमद्गहननाथेन निर्मितो विश्वसम्पदे।
नित्यानन्दकरश्चायं यत्नतः श्लीपदे गदे ॥६॥ नित्यानन्दो रसः।
कणा वचा दारु पुनर्नवानां चूर्णं सविल्वं समवृद्धदारकम्।
संमर्द्य चैतस्य निहन्ति वल्लः सकाञ्जिकः श्लीपदमुग्रवेगम् ॥७॥
कणादि वटी।

इति श्लीपदाधिकारः।

---

उत्सेधसाधर्म्यादनन्तरमर्वुदचिकित्सामाह। रौद्ररसे मेघनादे मारिषः ॥१॥२॥

इति अर्वुदाधिकारः।

---

उत्सेधसाधर्म्यात् तथार्वुदेन सह कफसम्बन्धव्यभिचारसाम्यात् च अनन्तरं श्लीपदचिकित्सामाह। नित्यानन्दरसे शङ्खं वराटञ्च दग्धव्यम्। हवुषेति स्वनामख्याता शुष्काम्रमुकुलमिति टीका। तदभावे धान्यकम्। सूतादिवृद्धदारकान्तानि च एकविंशतिद्रव्याणि समभागानि संचूर्ण्य हरीतकीक्काथेन संपिष्य पञ्चगुञ्जाप्रमाणां गुड़िकां कुर्य्यादित्यर्थः ॥ १—७॥

इति श्लीपदाधिकारः।

---

## अथ भगन्दररोगचिकित्सा।

शुद्धसूतं द्विधा गन्धं कुमारीरसमर्दितम्।
त्र्यहान्ते गोलकं कृत्वा ततस्तेन प्रलेपयेत् ॥१॥
तयोः समं ताम्रपत्रं हण्डिकान्तर्निवेशयेत्।
तद्भाण्डं भस्मनापूर्य्य चुल्यां तीव्राग्निना पचेत् ॥२॥
द्वियामान्ते समुद्धृत्य चूर्णयेत् स्वाङ्गशीतलम्।
जम्बीरस्य रसैः पिष्ट्वा रुद्ध्वा सप्तपुटे पचेत् ॥३॥
गुञ्जैकं मधुनाज्येन लिहेद्धन्ति भगन्दरम्।
मूषलीलवणञ्चानु आरनालयुतं पिबेत् ॥४॥
भुञ्जीत मधुराहारं दिवास्वप्नञ्च मैथुनम्।
वर्जयेच्छीतलाहारं रसेऽस्मिन् वारिताण्डवे॥५॥वारिताण्डवोरसः
सूतस्य द्विगुणेन शुद्धबलिना कन्यापयोभिस्त्र्यहम्।
शुद्धं ताम्रमयः समस्ततुलितं पात्रे निधायोपरि ॥६॥
स्वेद्यं यामयुगञ्च भस्म पिठरेनिम्बुजलैः सप्तधा।
पाकं तत् पुटयेत् भगन्दरहरो गुञ्जोन्मितः स्यादिति ॥७॥
भगन्दरहरोरसः।

इतिभगन्दराधिकारः।

---

उत्सेधसाधर्म्यादनन्तरं भगन्दरचिकित्सामाह। वारिताण्डवे रसस्य द्विगुणं गन्धं कुमार्य्या रसे त्रिदिनं विमर्द्य हण्डिकामध्ये निक्षिप्य ताम्रकोठरिकया आच्छाद्य कोठरिकां स्वल्पशरावेण आच्छाद्य च सन्धिं लिप्त्वा तद्भाण्डं भस्मना आःपूर्य्य कपट्यां पचेत्। तत उद्धृत्य चूर्णयेत् ततः जम्बीररसेन पिष्ट्वा सप्तवारं प्रपुटेत् ॥ १—५ ॥

भगन्दरहररसे बलिना गन्धकेन ॥६—७॥

इति भगन्दराधिकारः।

## अथ उपदंशचिकित्सा।

योगवाहिरसान् सर्वान् सर्वरोगोदितानपि।
उपदंशे प्रयुञ्जीत ध्वजमध्ये शिराव्यधः ॥१॥

इति उपदंशाधिकारः।

---

## अथ कुष्ठरोगचिकित्सा।

कन्याकोटिप्रदानेन गङ्गायां पितृतर्पणे।
विश्वेश्वरपुरीवासे तत्फलं कुष्ठनाशनात् ॥ १ ॥
गवां कोटिप्रदानेन चाश्वमेधशतेन च।
वृषोत्सर्गे च यत् पुण्यं तत् पुण्यं कुष्ठनाशनात् ॥ २ ॥
रसो बलिस्ताम्रमयः पुरोऽग्निःशिलाजतु स्याद्विषतिन्दुकञ्च।
सर्वञ्च तुल्यं गगनं करञ्जवीजं तथा भागचतुष्टयञ्च ॥ ३ ॥
संमर्द्य गाढ़ं मधुना घृतस्य पात्रे समस्तं निहितं प्रयत्नात्
कर्षं भजेत् प्रत्यहमस्य पथ्यं शाल्योदनं दुग्धमधुत्रयं च।
वत्सद्वयं चास्य निहन्त्यवश्यं कुष्ठं किलासमपि वातरक्तम्
विशीर्णकर्णाङ्गुलिनासिकोऽपि भवेत्प्रसादात् स्मरतुल्यमूर्त्तिः॥४॥
गलत्कुष्ठारिरसः प्रसिद्धो जलोदरे वाथ निबद्धमूले ॥५॥

गलत्कुष्ठारिरसः।

---

स्थानप्रत्यासत्तेरुपदंशचिकित्सामाह योगवाहि इत्यादि। योगवाहिरसान् रामवाणवारिशोषणादीन् ॥ १ ॥

इति उपदंशाधिकारः।

---

लगतरक्तदुष्टिसाधर्म्यादनन्तरं कुष्ठचिकित्सितमुच्यते। गलत्कुष्ठारिरसे बलिर्गन्धकम् अग्निश्चित्रकं गगनमभ्रं विषतिन्दुकं कुचिला इति ख्याता रसादिवचान्तानि समभागानि गगनं करञ्जवीजञ्च रसापेक्षया चतुर्गुणं, मधुघृते वटीकरणयोग्ये देये ॥ १—५ ॥

गन्धकेन मृतं ताम्रं दशभागं समुद्धरेत् ।
ऊषणं पञ्चभागं स्यादमृतञ्च द्विभागिकम् ॥ ६ ॥
श्लक्ष्णचूर्णीकृतं सर्वं रक्तिकैकप्रमाणतः ।
दातव्यं कुष्ठिने सम्यगनुपानस्य योगतः ॥ ७ ॥
गलिते स्फुटिते चैव विसूच्यां मण्डले तथा ।
विचर्चिकादद्रुपामाकुष्ठरोगप्रशान्तये ॥ ८॥ उदयभास्करः ।
धात्रीटङ्कनतालानां दशभागं समुद्धरेत् ।
धात्र्या रसैर्मर्दयित्वा शिखरीमूलवारिणा ।
सर्वकुष्ठहरः सेव्यः सर्वदा भोजनप्रियः ॥९॥ तालकेश्वरो रसः ।
भागैकं मूर्च्छितं सूतं गन्धकं त्वग्निवागुजी ।
चूर्णन्तु ब्रह्मबीजानां प्रति द्वादशभागिकम् ॥१०॥
त्रिंशद्भागं गुड़स्यापि रौद्रेण गुड़िकाकृता ।
अयं ब्रह्मरसो नाम्ना ब्रह्महत्यादिनाशनः ॥ ११ ॥
द्विनिष्कं भक्षणाद्धन्ति प्रसुप्तिकुष्ठमण्डलम् ।
पातालगरुड़ीमूलं जलैः पिष्ट्वा पिबेदनु ॥ १२ ॥ ब्रह्मरसः ।
सूतव्योमाग्नयस्तुल्यास्त्रिभागो गन्धकस्य च ।
काकोडुम्बरिकाक्षीरैः सर्वमेकत्र मर्दयेत् ॥ १३ ॥
माषमात्रां गुटीं कृत्वा कुष्ठरोगे प्रयोजयेत् ।
देहशुद्धिं पुरा कृत्वा सर्वकुष्ठानि नाशयेत् ।
एष चन्द्राननो नाम साक्षात् श्रीभैरवोदितः॥१४॥चन्द्राननोरसः
गन्धं रसं टङ्कनताम्रलौहं भस्मीकृतं मागधिकासमेतम् ।
पञ्चाङ्गनिम्बेन फलत्रिकेण विभावितं राजतरोस्तथैव ।

---

उदयभास्करे केवलं गन्धकेन मृतं ताम्रं दशभागं, अमृतं विषं तस्य द्विभागम् ।
सर्वं दिनैकं समर्द्य रक्तिप्रमाणा वटिका कार्य्या ॥ ६ ॥ ८ ॥

ब्रह्मरसे अग्निश्चित्रकः पातालगरुड़ी तिक्तालाबुः ॥ ९ ॥ १२ ॥

चन्द्राननरसे व्योम अभ्रम् ॥ १३ ॥ १४ ॥

नियोजयेद्वल्लकयुग्ममानं कुष्ठेषु सर्वेषु च रोगसङ्घे ॥१५॥

कुष्ठकालानलोरसः ।

शुद्धसूताग्निमरिचं सूताद्द्विगुणगन्धकम् ।
काकोडुम्बरिकाक्षीरैर्दिनं मर्द्यं प्रयत्नतः ॥ १६ ॥
वराव्योषकषायेण वटीश्चास्य समाचरेत् ।
लिह्यात् वज्रवटी ह्येषा पामारोगविनाशिनी ॥१७॥ वज्रवटी ।
पलत्रयं मृतं ताम्रं सूतमेकं द्विगन्धकम् ।
त्रिकटु त्रिफलाचूर्णं प्रत्येकञ्च पलं पलम् ॥१८॥
निर्गुण्ड्याश्चार्द्रकद्रावैर्वह्निद्रावैर्विमर्दयेत् ।
दिनैकं तद्विशोष्याथ तुषाग्नौ स्वेदयेद्दिनम् ॥ १९ ॥
समुद्धृत्य विचूर्ण्याथ वागुजीतैलमर्दितम् ।
त्रिदिनं भावयेत्तेन निष्कैकं भक्षयेत् सदा ॥ २० ॥
चन्द्रकान्तिरसो नाम्ना कुष्ठं हन्ति न संशयः ।
तैलं करञ्जवीजोत्थं वह्निगन्धकसैन्धवैः ।
अनुपानं प्रकर्त्तव्यं कल्कं वा वागुजीभवम्॥२१॥ चन्द्रकान्तिरसः
मृतताम्राभ्रकं तुल्यं तयोः सूतं चतुर्गुणम् ।
शुद्धं तत् मर्दयेत् खल्ले गोलकं कारयेत्ततः ॥ २२ ॥
त्रिभिस्तुल्यं शुद्धगन्धं लौहपात्रे क्षणं पचेत् ।
तन्मध्ये गोलकं पाच्यं यावज्जीर्णन्तु गन्धकम् ॥ २३ ॥
एतत् मृद्वग्निना तावत् समुद्धृत्य विचूर्णयेत् ।
गुग्गुलुः निम्बपञ्चाङ्गं त्रिफला चामृता विषम् ॥२४॥
पटोलं खादिरं सारं व्याधिघातं समं समम् ।

---

कुष्ठकालानले वलिर्गन्धकं मागधिका पिप्पली पञ्चाङ्गनिम्बैरिति निम्बस्य पत्रपुष्पफलवल्कलमूलैः ॥ १५ ॥

वज्रवटिकायाम् अग्निश्चित्रकः वरा त्रिफला ॥ १६ ॥ १७ ॥

चूर्णितं मधुना लेह्यं निष्कमौडुम्बरापहम् ।
रसः सङ्कोचनामाऽयं कुष्ठे परमदुर्लभः ॥२५॥ सङ्कोचरसः ।
हुताशमुखसंशुद्धं पलमेकं रसस्य वै ।
पलं लौहस्य ताम्रस्य पलं भल्लातकस्य च ॥ २६ ॥
अभ्रकस्य पलञ्चैकं गन्धकस्य चतुःपलम् ।
हरीतकीविभीतक्योश्चूर्णं कर्षद्वयं द्वयोः ॥ २७ ॥
अष्टमाषाधिकं तत्र धात्र्याः पाणितलानि षट् ।
घृतञ्चाष्टगुणं लौहात् द्वात्रिंशत् त्रिफलाजलम् ॥ २८ ॥
एकीकृत्य पचेत् पात्रे लौहे च विधिपूर्वकम् ।
पाकमेवास्य जानीयात् शास्त्रज्ञो लौहपाकवित् ॥२९॥
भक्षयेत् प्रातरुत्थाय गुरुदेवद्विजार्चकः ।
रक्तिकादिक्रमेणैव घृतभ्रामरमर्दितम् ॥ ३० ॥
लौहे च लौहदण्डेन कुर्य्यादेतत् रसायनम् ।
अनुपानञ्च कुर्वीत नारिकेलजलं पयः ॥ ३१ ॥
सर्वकुष्ठहरं श्रेष्ठं वलीपलितनाशनम् ।
अग्निदीप्तिकरं हृद्यं कान्त्यायुर्बलवर्द्धनम् ॥ ३२ ॥
सेव्यो रसो जाङ्गललावकानां वर्ज्यं हि शाकाम्लमपि स्त्रियश्च ।
शाल्योदनं षष्टिकमाज्यमुद्गं क्षौद्रं गुड़ं क्षीरमिह क्रियायाम् ॥३३॥
अमृताङ्कुरलौहम् ।

---

सङ्कोचरसे व्याधिघातं समं सममिति गुग्गुलादीनां प्रत्येकमेकभागसमम् ॥१८—२५॥

अमृताङ्कुरलौहे हुताशमुखसंशुद्धं पलमेकं रसस्य वै इति हुताशमुखेत्यादि विशेषणेन रससिन्दूरं गृह्णन्तीति केचित् । अपरे तु हिङ्गुलोद्भवं पारदं पातनायन्त्रयोगात् गृह्णन्ति । वृद्धास्तु प्रायः रससिन्दूरं व्यवहरन्ति । रसादिसर्वमेकीकृत्य लौहपात्रे त्रिफलाक्वाथेन पचनीयं पाकशेषे तु त्रिफलाचूर्णं प्रक्षिपेत् । अभ्रकस्य पलञ्चैव गन्धकस्य चतुःपलमित्यत्र गन्धकस्य पलञ्चैकमभ्रकस्य च गुग्गुलोरिति केचित् पठन्ति स च न भट्टादि सम्मतः पाठः नापि वृद्धवैद्यव्यवहारसिद्धः ॥२६—३३॥

पलं तालं पलं गन्धं शिलायाश्च पलार्द्धकम्।
चपलं शुद्धसीसञ्च ताम्रमभ्रमयो रजः॥ ३४॥
एतेषां कोलभागञ्च वटक्षीरेण मर्दयेत्।
ततो दिनत्रयं घर्मे निम्बक्वाथेन भावयेत्॥ ३५॥
गुडूचीबालहिन्तालवानरीनीलझिण्टिकाः।
शोभाञ्जनसुराजाजीनिर्गुण्डीहयमारकम्॥ ३६॥
एषां शाणमितं चूर्णमेकीकृत्य सरित्तटे।
मृत्पात्रे कठिने कृत्वा मृदम्बरयुते दृढ़े॥ ३७॥
एकाकी पाकविद्वैद्यो नग्नः शिथिलकुन्तलः।
पचेदवहितो रात्रौ यत्नात् संयतमानसः॥ ३८॥
शनैर्मध्यमवेगेन वह्निना प्रहरद्वयम्।
प्रातःसम्पूज्य मार्त्तण्डं स्वाङ्गशीतं समुद्धरेत्॥ ३९॥
यदि भाग्यवशात् एतत् माणिक्याभं शुभं भवेत्।
तद्धि जानीहि भैषज्यं सर्वकुष्ठविनाशनम्।
सर्पिषा मधुना लौहपात्रे तद्दण्डमर्दितम्॥ ४०॥
द्विगुञ्जं सर्वकुष्ठानां नाशनं बलवर्द्धनम्।
शीतलं सारसं तोयं दुग्धं वा पाकशीतलम्॥ ४१॥
आनीतं तत्क्षणादाजमनुपानं सुखावहम्।
वातरक्तं शीतपित्तं हिक्काञ्च दारुणां जयेत्॥ ४२॥
ज्वरान् सर्वान् वातरोगान् पाण्डुं कण्डूञ्च कामलाम्।
श्रीमद्गहननाथेन निर्मितो बहुयत्नतः॥४३॥ माणिक्योरसः
भस्मसूतसमो गन्धो मृतायास्ताभ्रगुग्गुलुः।
त्रिफला च महानिम्बश्चित्रकश्च शिलाजतु॥ ४४॥
इत्येतच्चूर्णितं कुर्य्यात् प्रत्येकं शाणषोड़श।

माणिक्यरसे चपलः पारदः कोलभागान् कर्षभागान् इत्यर्थः। वानरी शूकशिम्बा अजाजी जीरकम्। हयमारः करवीरः॥३४—४३॥

चतुःषष्टि करञ्जस्य वीजचूर्णं प्रकल्पयेत् ॥ ४५ ॥
चतुःषष्टि मृतञ्चाभ्रं मध्वाज्याभ्यां विलोड़येत् ।
स्निग्धभाण्डे स्थितं खादेत् द्विनिष्कं सर्वकुष्ठनुत् ।
रसः कुष्ठकुठारोऽयं गलत्कुष्ठविनाशनः ॥४६॥ कुष्ठकुठारो रसः

गुञ्जाशङ्खकरञ्जचूर्णरजनीभल्लातकाग्निशिखा
कन्यासूर्य्यपयः पुनर्नवरजो गन्धं तथा सूतकम् ।
गोमूत्रे पचितं विड़ङ्गमरिचैः चौद्रञ्च तत्तुल्यकम
हन्यादाशु विचर्चिकारुजमिदं कण्डूं तथा कीटमम् ॥४७॥

तालेश्वररसः ।

नागस्य भस्म शाणैकं तोलकं पारदस्य च ।
द्विनिष्कं शुद्धतालस्य समभूतं गवां जलैः ॥ ४८ ॥
विपचेत् षोड़शगुणैः पात्रे ताम्रमये शनैः ।
मूषे त्रिघस्रं जम्बीरकुमारीवज्रकन्दजैः ॥ ४९ ॥
रसैर्भृङ्गस्य चाम्भोभिर्युतं बल्लत्रयं भजेत् ।
कुष्ठे चास्थिगते चापि शाखानासाविभुग्नके ।
स्वरभङ्गे चतचीणे मण्डलेषु महत्स्वपि ॥ ५० ॥

औडुम्बरं हन्ति शिवामधुभ्यां कृच्छ्रञ्च कुष्ठं त्रिफलाजलेन ।
गुड़ार्द्रकाभ्यां गजचर्मसिध्मविचर्चिकास्फोटविसर्पकण्डूः ॥ ५१ ॥
निहन्ति पाण्डुं विविधां विपादीं सरक्तपित्तां कटुकासिताभ्याम् ।
खादेत् द्विजीरं त्वमृतायुतञ्च समुद्गयूषं सघृतञ्च दद्यात् ॥५२॥
रोहितकजटाक्वाथमनुपानं प्रयच्छति ।
चतुर्दशदिनस्यान्ते कुष्ठं शुष्यति यत्नतः ॥ ५३ ॥
चुद्बोधो जायतेऽत्यर्थमत्यर्थं सुभगं वपुः ।
अत्यर्थं पच्यते भुक्तमत्यर्थं सुखमाप्नुयात् ॥ ५४ ॥

---

तालकेश्वरे शङ्खः शङ्खभस्म । सूर्य्यपयः अर्कदुग्धं गोमूत्रे पचितमिति क्वार्द्रत्वात् कृसः । सर्वचूर्णापेचया अष्टगुणेन गोमूत्रेण पाचितमित्यर्थः ॥४४—४७॥

अरुणोडुम्बुरं कुष्ठमृष्यजिह्वां कपालिकाम्।
पुण्डरीकं काकणञ्च दद्रुकुष्ठं सुदुस्तरम्॥ ५५॥
स्फुटरूपं सर्वकुष्ठं महाकुष्ठं सुदारुणम्।
तथा चर्मदलं हन्यात् विसर्पं परिसर्पकम्॥ ५६॥
सिध्मां विचर्चिकां गाढ़ां किटिमञ्च विशेषतः।
पामाञ्चालसकाञ्चैव किलासञ्च विनाशयेत्।
वर्जयेत् सततं कुष्ठी मत्स्यमांसादिभोजनम्॥५७॥राजतालेश्वरः
हरितालं भवेद्भागं द्वादशात्र विशुद्धमत्।
गन्धकोऽपि तथा ग्राह्यो रसः सप्तोऽत्र दीयते॥५८॥
कृष्णाभ्रकमपि श्लक्ष्णं खल्ले कृत्वा विमर्दयेत्।
अङ्कोठमूलनीरेण सेहुण्डीपयसाऽथवा॥ ५९॥
अर्कदुग्धेन संपिष्य करवीरजलेन च।
काकोऽडुम्बरनीरेण पेषणीयो रसो भृशम्॥ ६०॥
शुद्धताम्रकोठरे च क्षेपणीयो रसेश्वरः।
पूर्ववत् पच्यते यामं षट्पश्चात्र रसेश्वरः॥ ६१॥
पञ्चगुञ्जाप्रमाणेन काकोडुम्बरवारिणा।
कुष्ठाष्टादशसंख्येषु देय एष भिषग्वरैः॥ ६२॥
अचिरेणैव कालेन विनाशं यान्ति निश्चयः।
पथ्यसेवा विधातव्या प्रणतिः सूर्य्यपादयोः॥ ६३॥
साधकेन तथा सेव्यो रसो रोगौघनाशनः।
पिप्पलीभिः समं दद्यात् कुष्ठरोगे रसेश्वरम्॥ ६४॥

कुष्ठहरितालेश्वरः।

आतपे मर्दयेत् सूतं गन्धकं सृतताम्रकम्।
स्वहस्तमर्दितं तालं यावत् तत्र विलीयते॥६५॥

---

कुष्ठहरितालेश्वरे सेहुण्डी स्नुही पूर्ववत् पच्यते इति ताम्रकोठरे कृत्वा पुटपाकविधिना षड्यामं पाचनीयम्॥४८—६४॥

भृङ्गराजद्रवं दत्त्वा दिनमात्रं विमर्दयेत् ।
त्रिफला खादिरं सारमम्रता वागुजीफलम् ॥ ६६ ॥
प्रत्येकं सूततुल्यं स्यात् चूर्णीकृत्य विमर्दयेत् ।
मध्वाज्याभ्यां लौहपात्रे कार्षिकं मर्दयेत् ततः ॥६७॥
दद्रुकिटिमकुष्ठानि मण्डलानि विनाशयेत् ।
द्विगुञ्जेन निहन्त्याशु राजराजेश्वरो रसः ॥६८॥ राजराजेश्वरः ।
मूर्च्छितं सूतकं धात्रीफलं निम्बस्य चाहरेत् ।
तुल्यांशं खदिरक्वाथैर्दिनं मर्द्यञ्च भक्षयेत् ।
निष्कैकं दद्रुकुष्ठघ्नः पारिभद्राह्वयो रसः ॥६९॥ पारिभद्ररसः ।
गन्धकं मूलकक्षारमार्द्रकस्य रसैर्दिनम् ।
मर्दितं हन्ति लेपेन सिध्मन्तु दिनमेकतः ॥७०॥
कृष्णधूस्तूरजं मूलं गन्धतुल्यं विचूर्णयेत् ।
मर्द्यं जम्बीरनीरेण लेपनं सिध्मनाशनम् ॥७१॥
अपामार्गस्य पञ्चाङ्गं कदलीद्रवसंयुतम् ।
पुटदग्धञ्च गोमूत्रैर्लेपनं दद्रुनाशनम् ॥७२॥
चक्रमर्दस्य वीजञ्च दुग्धे पिष्ट्वा विमर्दयेत् ।
गन्धर्वतैलसंयुक्तं मर्दनात् सर्वकुष्ठजित् ॥७३॥ इति प्रलेपः
भस्मसूताभ्रशुल्वानि गन्धं तालं शिलाजतु ।
अम्लवेतसतुल्यांशं त्र्यहं दत्त्वा विमर्दयेत् ॥७४॥
मध्वाज्याभ्यां वटीं कुर्य्यात् द्विगुञ्जां भक्षयेत् सदा ।
कुष्ठं हन्ति गजं सिंहो रसो लङ्केश्वरो महान् ॥७५॥
त्रिफला निम्बमञ्जिष्ठा वचा पाटलमूलकम् ।
कटुका रजनीक्वाथं चानुपानं प्रयोजयेत् ॥७६॥ लङ्केश्वरो रसः ।

---

पारिभद्ररसे फलं निम्बस्येत्यन्वयः अपामार्गस्य पञ्चाङ्गमिति मूलपत्रपुष्पफल-वल्कलरूपं पञ्चाङ्गम् ॥६५—६९॥

लङ्केश्वररसे रोहितकजटारसेनेति रोहितकमूलरसेन इत्यर्थः ॥७०—७६॥

शुद्धं पञ्चदशात्र तालकमितं शुद्धस्य षड्गन्धकः
सप्ताष्टौ नवतिन्तिड़ीयकफलात् काठिल्लकानां दश।
सिहुण्डार्कपयोभिरेव सततं संचूर्ण्य तद्भाव्यते
रोहीतस्य जटारसेन मृदितं श्लक्ष्णं ततः खल्लितम् ॥७७॥
एकीकृत्य समस्तमेतदपि तत् टङ्कैकमेतज्जयेत्
पश्चाद्दासविशुद्धवारिसहितं किञ्चिच्च तत् पीयते।
ताम्बूलं शशिखण्डमण्डितवटी मिश्रं ततः स्वापयेत्
शय्यायां मृगलोचनापरिभृतौ कर्माणि सम्पादयेत् ॥७८॥
देहं वीक्ष्य सुखं मुखं न विरसं विज्ञाय सम्यक् सुधी
छागीदुग्धमिहापि तं ननु दिनं सुप्तञ्च तत् पाययेत्।
नित्यं नित्यमिदं करोति नियतं सर्वौषधैर्वर्जितं
सामग्रायसमग्रमग्रिमतरं नीलञ्च पीतारुणम् ॥७९॥
श्वेतं स्फीतमनल्पकं भृशमतिप्रायः क्रिमिव्याकुलम्
गन्धालिप्रसितं खटीकसदृशं कुष्ठञ्च चोत्साधनम्।
अष्टाष्टादशभूतभैरव इति ख्यातः चितौ हन्ति च
वातव्याधिनिकृन्तनः कफकृतान् कुष्ठान् विशेषानयम्॥८०॥
हन्तीति ज्वरमुग्ररूपमधिकं दाहाभिधानामयम्।
कुर्य्यात् रूपमनङ्गरङ्गगुणभृद्भृङ्गास्पदं विग्रहम् ॥८१॥
एवं समासात् कुरुते समानं पथ्यञ्च तथ्यं सकलं करोति
भुञ्जीत भक्तं सततं प्रयुक्तं घृतं श्रुतं वा विकृतं तदेव।
सच्छन्ददुग्धेन सुखेन जग्धं पथ्यं तदेतत् प्रवदन्ति सन्तः
कुष्ठस्य दुष्टस्य निराकरोति गात्रञ्च कुर्य्यात् शुभगन्धयुक्तम् ॥८२॥

भूतभैरवो रसः।

पलानीशस्य चत्वारि बलेर्द्वादश तावती।
ताम्रस्य च त्रिका देया रसस्योर्द्ध्वं शरावकम् ॥८३॥
दत्त्वा विवद्धभाण्डस्य पूरयेत् भस्मना दृढ़म्।

अग्निं प्रज्ज्वालयेत् यामद्वयं शीतं विचूर्णयेत् ॥८४॥
पुटे द्वादशधा सूर्य्यदुग्धेनालोड़ितं पुनः।
वरापावकभृङ्गाणां द्रवैस्त्रिभिर्विभावयेत्।
अयमर्केश्वरो नाम्ना रक्तमण्डलकुष्ठजित् ॥८५॥ अर्केश्वरः।
तालताप्यशिलासूतं शुद्धं टङ्कनसैन्धवम्।
समं संचूर्णयेत् खल्ले सूतात् द्विगुणगन्धकम् ॥८६॥
गन्धात् द्विगुणलौहञ्च जम्बीराम्लेन मर्दयेत्।
ततो लघुपुटे पाच्यं स्वाङ्गशीतं समुद्धरेत् ॥८७॥
त्रिंशदंशं विषञ्चात्र चिप्ता सर्वं विचूर्णयेत्।
माहिषाज्येन संमिश्र्य निष्कार्द्धं भक्षयेत् सदा ॥८८॥
मध्वाज्यैर्वागुजीचूर्णं कर्षमात्रं लिहेदनु।
सर्वान् कुष्ठान् निहन्त्याशु महातालेश्वरो रसः ॥८९॥

महातालेश्वरो रसः।

सप्तकञ्चुकनिर्मुक्तमूर्द्धलग्नं रसेन्द्रकम्।
मृत्कटाहान्तरे तत्र स्थापयेच्च समन्त्रकम् ॥९०॥
सूतात् द्विगुणितं तालं कूष्माण्डद्रवशोधितम्।
दोलायन्त्रेण तैलादौ सप्तधा परिशोधितम् ॥ ९१ ॥
दत्त्वा प्लवैर्द्रवैर्झिण्ट्याः किञ्चिदाप्लाव्य युक्तितः।
तयोर्द्विगुणितं भस्म पलाशस्योपरि चिपेत् ॥९२॥
पुनर्झिण्टीद्रवेणैव सर्वमाप्लाव्य यत्नतः।
चारवशाकरसैर्भूयः परिप्लाव्य च पाकवित् ॥९३॥
पचेदवहितो वैद्यः शालाङ्गारेण यत्नतः।
चतुर्विंशतियामन्तु पक्ता शीतलतां नयेत् ॥९४॥
अवतार्य्य काचपात्रे विधाय तदनन्तरम्।

---

अर्केश्वरे ईशस्य पारदस्य चत्वारि पलानि वलिगन्धकस्य द्वादशपलानि॥७१ ८५॥
महातालेश्वरे त्रिंशदंशं विषमिति सर्वचूर्णापेक्षया त्रिंशदंशं विषम् ॥८६—८९॥

प्रयत्नेन कृतप्रायश्चित्तः शोधितदेहकः ॥९५॥
सिताहरीतकीयुक्तः खादेत् रक्तिचतुष्टयम्।
रक्त्यैकैकक्रमेणैव वर्द्धयेत् दिनसप्तकम् ॥९६॥
मधूदकं पिबेच्चानु नारिकेलजलञ्च वा।
जिङ्गिनीसम्भवं क्वाथमथवा क्षौद्रनागरम् ॥९७॥
अभ्यङ्गं सुरभितैलैः कुर्य्यात् ताम्बूलचर्वणम्।
पवनानलसूर्य्यांशु मत्स्यमांसदधीनि च ॥९८॥
शाकं ककारपूर्वञ्च वर्जयेत् मतिमान् नरः।
वातरक्तमाममिश्रमामञ्चापि सुदारुणम् ॥९९॥
सर्वकुष्ठञ्चाम्लपित्तं विस्फोटञ्च मसूरिकाम्।
...ाख्यो रसो नाम हन्ति दोषानसृग्दरान्॥१००॥ विजयभैरवः
काकोडुम्बरिकाचूर्णं ब्रह्मदन्तीबलात्रयम्।
प्रत्यहं मधुना लीढं वातरक्तं निहन्ति च ॥१०१॥
खरद्रक्तञ्च मांसं च मासमात्रेण सर्वथा।
...त् पूयं पतत्कीटं त्रिटङ्कं सेव्यमीरितम् ॥१०२॥ कुष्ठारिरसः
...षणं टङ्कनपारदञ्च सगन्धचूर्णञ्च समांशयुक्तम्।
...तचूर्णं द्विगुणं गुड़ान्वितं संमर्द्य सर्वं गुड़िका विधेया॥१०३
...चनी सर्वविकारनाशिनी लघ्वी हिता दीपनपाचनीयम्।
...हिता तीव्रतरे हि शूले चामाशये चाश्मगते विकारे।
...वनी शीतजलेन सम्यक् संग्राहिणी चोष्णजलेन युक्ता॥१०४

षड़ाननगुड़िका।

...चिरिविल्वपलपथ्या शिरीषञ्च विभीतकम्।
काकोडुम्बरिकामूलं मूत्रैरालोड्य फेनितम् ॥१०५॥
कर्षमात्रं पिबेद्रोगी गोस्तन्या सह टङ्कनम्।

---

...ष्ठारिरसे बलात्रयमिति पीतपुष्पाबला श्वेतबला नागबला भेदात॥९०—१०२
षड़ाननगुड़िकायां ऊषणं मरिचं द्विगुणं गुड़ान्वितमिति सर्वचूर्णापेक्षया
...द्विगुणम् ॥१०३—१०४॥

सप्त सप्तकपर्य्यन्तं सर्वकुष्ठविनाशनम् ॥१०६॥ कुष्ठनाशनः।
अथ श्वित्रस्य वक्ष्यामि नाशनोपायमुत्तमम् ॥ १०७॥
शुद्धसूतस्य भागैकं द्विभागं शुद्धतालकम्।
मृत्कटाहान्तरे पूर्वं स्थापयेच्च समन्त्रकम् ॥ १०८ ॥
द्वयोःसमं पलाशस्य भस्म तस्योपरि क्षिपेत्।
वक्त्रं मृत्कर्पटैर्लिप्त्वा शोषयेच्च खरातपे ॥ १०९ ॥
चतुर्विंशतियामन्तु पक्त्वा शीतलतां नयेत्।
अवतार्य्य काचपात्रे स्थापयेदतियत्नतः ॥ ११० ॥
विधिवत् सेवितश्चाऽसौ हन्ति श्वित्रं चिरन्तनम्।
सर्वकुष्ठं निहन्त्याशु भास्करस्तिमिरं यथा ॥ १११ ॥
रसोऽयं श्वित्रनाशाय ब्रह्मणा निर्मितः पुरा।
विजयानन्दनाम्नायं प्रसिद्धः क्षितिमण्डले ॥११२॥ विजयानन्दः
अश्वहा रजनीहेम प्रत्यक्पुष्पी प्रदिह्य च।
चूर्णञ्च स्वर्जिकाक्षारं नीरं दत्त्वा प्रपेषयेत् ॥ ११३ ॥
प्रच्छयित्वा ततः स्थानं मण्डलाग्रेण लिम्पति।
पाटला निष्पतन्त्यङ्गे विस्फोटाश्चातिदारुणाः ॥ ११४ ॥
संहरन्ति तिलारक्ताः कृष्णवर्णा भवन्ति ते।
मिलन्ति स्वशरीरे च दिव्यरूपो भवेन्नरः ॥ ११५ ॥
श्वित्रदद्रुपाटलालेपः।
सैन्धवं रविदुग्धेन पेषयित्वाथ मण्डलम्।
प्रच्छयित्वा प्रलेपोऽयं श्वित्रकुष्ठविनाशनः॥११६॥श्वित्रहरोलेपः
मुखे श्वेते च सञ्जाते कुर्य्यादिमां प्रतिक्रियाम्।
गन्धकं चित्रकाशीशं हरितालं फलत्रयम्।

---

कुष्ठविशेषत्वात् कुष्ठाधिकारे एव श्वित्रचिकित्सामाह श्वित्रेत्यादि ॥१०५-११२
श्वित्रदद्रुपाटलालेपे अश्वहा करवीरः हेम धूस्तूरः। एषां करवीरादी
क्षारं ग्राह्यम् ॥११३—११५॥

मुखे लिम्पेद्दिनैकेन वर्णनाशो भविष्यति ॥ ११७ ॥

ओष्ठश्वित्रनाशनो लेपः।

गुञ्जाफलाग्निचूर्णञ्च लेपनं श्वेतकुष्ठजित्।
शिलापामार्गभस्मापि लिप्ता श्वित्रं विनाशयेत् ॥११८॥ लेपः।
तालकं वंशपत्राख्यं कुष्माण्डसलिले क्षिपेत्।
सप्तधा वा त्रिधा वापि दध्नाम्लेन च वा पुनः ॥ ११९ ॥
शोधयित्वा पुनः शुष्कं चूर्णयेत् तण्डुलाकृति।
ततः शरावके पात्रे स्थापयेत् कुशलो भिषक् ॥ १२० ॥
वदरीपत्रकल्केन सन्धिलेपञ्च कारयेत्।
अरुणाभे ह्यधःपात्रे तावज्ज्वाला प्रदीयते ॥ १२१ ॥
स्वाङ्गशीतं समुद्धृत्य माणिक्याभो भवेद्रसः।
तद्रक्तिद्वितयं खादेत् घृतभ्रामरमर्दितम् ॥ १२२ ॥
संपूज्य देवदेवेशं कुष्ठरोगाद्विमुच्यते।
स्फुटितं गलितं कुष्ठं वातरक्तं भगन्दरम् ॥ १२३ ॥
नाड़ीव्रणं व्रणं दुष्टमुपदंशं विचर्चिकाम्।
नासास्यसम्भवान् रोगान् क्षतान् हन्ति सुदारुणान्।
पुण्डरीकं चर्मदलं विस्फोटं मण्डलं तथा॥१२४॥रसमाणिक्यम्।

इति कुष्ठाधिकारः।

---

## अथ शीतपित्तोदर्दकोठाधिकारः।

यमानीगुड़संमिश्रो सूतभस्मद्विवल्लकः।
शीतपित्तं निहन्त्याशु कटुतैलविलेपनम् ॥ १ ॥

---

गुञ्जेति अग्निश्चित्रकः। शिला मनःशिला ॥११२—१२०॥

इति कुष्ठाधिकारः।

---

प्रागुक्तसङ्ख्यैव अम्लपित्त मुच्यते। अम्लपित्तान्तकरसे तुल्यां पथ्यामिति सर्वचूर्णतुल्यां हरीतकीम् ॥ १ ॥

सिद्धार्थरजनीकल्कं प्रपुन्नाड़तिलैः सह ।
कटुतैलेन संमिश्रमेतदुद्वर्त्तनं हितम् ॥ २ ॥
दूर्वानिशायुतो लेपः कण्डूपामाविनाशनः ।
क्रिमिदद्रुहरश्चैव शीतपित्तहरः परः ॥ ३ ॥
कुष्ठोक्ताञ्च क्रियां कुर्य्यात् सर्वां युक्त्या चिकित्सकः ।
शीतपित्ते तथोदर्दे कोठे चैव समासतः ॥ ४ ॥

इति शीतपित्तोदर्दकोठाधिकारः ।

---

## अथ अम्लपित्तचिकित्सा ।

मृतसूताभ्रलौहानां तुल्यां पथ्यां विमर्दयेत् ।
माषमात्रं लिहेत् क्षौद्रैरम्लपित्तप्रशान्तये ॥ १ ॥

अम्लपित्तान्तको रसः ।

रसो बलिर्व्योमरविश्च लौहं धात्रग्रक्षनीरैस्त्रिदिनं विमर्द्य
तदल्पघृष्टं मृदुमार्कवेण संमर्दयेदस्य च वल्लयुग्मम् ।
हन्त्यम्लपित्तं मधुनाऽवलीढ़ं लीलाविलासो रसराज एषः
छर्दिं सशूलां हृदयस्य दाहं निवारयेदेष न संशयोऽस्ति ॥३॥

लीलाविलासो रसः ।

त्रिवृता मुस्तकञ्चैव त्रिफला त्र्यूषणं तथा ।
प्रत्येकन्तु पलं भागं तदर्द्धौ रसगन्धकौ ॥४॥
लौहाभ्रकविड़ङ्गानां प्रत्येकञ्च पलद्वयम् ।
एतत् सकलमादाय चूर्णयित्वा विचक्षणः ॥५॥
त्रिफलायाः कषायेण वटिकां कारयेत् भिषक् ।

---

लीलाविलासरसे धात्रग्रक्षनीरैरिति आमलकीविभीतकयोः क्वाथैः ॥२—३
सुधावतीगुड़िकायां अभ्रकम् कृष्णाभ्रकं ग्राह्यं श्रेष्ठत्वात् तच्च संचूर्ण्य काञ्जिके
अहोरात्र स्थापयित्वा तेनैव पेषणीयम् । ततः कन्दादिव्यस्तसमस्तानां स्वरसेन

एकैकां भक्षयेत् प्रातस्तक्रञ्चापि पिबेदनु ॥६॥
हन्ति शूलं पार्श्वशूलं कुक्षिवस्तिगुदे रुजम् ।
श्वासं कासं तथा कुष्ठं ग्रहणीदोषनाशिनी ॥७॥

पानीयभक्तवटिका ।

आशुभक्तोदकैः पिष्टमभ्रकं तत्र संस्थितम् ।
कन्दमाणास्थिसंहारखण्डकर्णरसैरथ ॥८॥
तण्डुलीयञ्च शालिञ्च कालमारिषजेन च ।
वृश्चीरवृहतीभृङ्गलक्ष्मणाकेशराजकैः ॥९॥
पेषणं भावनं कुर्य्यात् पुटञ्चानेकशो भिषक् ।
यावन्निश्चन्द्रकं तत् स्याच्छुद्धिरेवं विहायसः ॥१०॥

स्वर्णमाक्षिकशालिञ्च ध्मातं निर्वापितं जले ।
त्रैफलेऽथ विचूर्ण्यैवं लौहं कान्तादिकं पुनः ॥११॥
वृहत्पत्रकरिकर्णत्रिफलावृद्धदारकैः ।
माणकन्दास्थिसंहारशृङ्गवेरभवैः रसैः ॥१२॥
दशमूलीमुण्डतिकातालमूलीसमुद्भवैः ।
पुटितं साधुयत्नेन शुद्धिमेवमयो व्रजेत् ॥१३॥
वशिरं श्वेतवाट्यालं मधुपर्णी मयूरकम् ।
तण्डुलीयञ्च वर्षाह्वं दत्त्वाधश्चोर्द्ध्वमेव च ॥१४॥
पाक्यं सुजीर्णमण्डूरं गोमूत्रेण दिनत्रयम् ।
अन्तर्वाष्पमदग्धञ्च तथा स्थाप्यं दिनत्रयम् ॥१५॥
विचूर्णितं शुद्धिरियं लौहकिट्टस्य दर्शिता ।
जयन्त्या वर्द्धमानस्य आर्द्रकस्य रसेन तु ॥१६॥

---

...नः पेषणं भावनं पुटनञ्च बहुधा कुर्वीत यावन्निश्चन्द्रकत्वमभ्रस्य । खण्डकर्णः
...आडकीन इति ख्यातः । तण्डुलीयकालमारिषयोरिति स्वल्पपत्रवृहत्पत्रभेदेन
...द्विविधमारिषयोः । वृश्चीरः श्वेतपुनर्नवा । भृङ्गी भृङ्गराजः लक्ष्मणा स्वनामख्याता ।

वायस्याश्चानुपूर्व्वं मर्दनं रसशोधनम्।
गन्धकं नवनीताख्यं चुद्रितं लौहभाजने ॥१७॥
त्रिधा चण्डातपे शुष्कं भृङ्गराजरसाप्लुतम्।
ततो वह्नौ द्रवीभूतं त्वरितं वस्त्रगालितम् ॥१८॥
यत्नाद् भृङ्गरसे क्षिप्तं पुनः शुष्कं विशुध्यति।
गगनात् द्विपलं चूर्णं लौहस्य पलमात्रकम् ॥ १९ ॥
लौहकिट्टपलार्द्धञ्च सर्वमेकत्र संस्थितम्।
मण्डूकपर्णीवशिरतालमूलीरसैः पुनः ॥२०॥
वरीभृङ्गकेशराजकालमारिषजैरथ।
त्रिफलाभद्रमुस्ताभिः स्थालीपाकाद्विचूर्णितम् ॥२१॥
रसगन्धकयोः कर्षं प्रत्येकं ग्राह्यमेकतः।
तन्मसृणशिलाखण्डे यत्नतः कज्जलीकृतम् ॥२२॥
वचाचव्यं यमानी च जीरके शतपुष्पिका।
व्योषं मुस्तं विड़ङ्गञ्च ग्रन्थिकं खरमञ्जरी ॥२३॥
त्रिवृता चित्रको दन्ती सूर्य्यावर्त्तः सितस्तथा।
भृङ्गमाणककन्दाश्च खण्डकर्णक एव च ॥२४॥
दण्डोत्पला केशराज कालावकरकोऽपि च।
एषामर्द्धपलं ग्राह्यं पटघृष्टं सुचूर्णितम् ॥२५॥
प्रत्येकं त्रिफलायाश्च पलार्द्धं पलमेव च।
एतत्सर्वं समालोड्य लौहपात्रे तु भावयेत् ॥२६॥
आतपे दण्डसङ्घृष्टमार्द्रकस्य रसैस्त्रिधा।
तद्रसेन शिलापिष्टं गुड़िकां कारयेद्भिषक् ॥२७॥

---

विहायस इति अभ्रस्य। लौहशुद्धिमाह स्वर्णमाक्षिकशालिञ्च भ्याभ्यां पिष्टाभ्यां कान्त-लौहं लिप्ता भस्त्राग्नौ ध्मातं ततः वक्ष्यमाणा मृतसारविधिना कथितत्रिफलाक्वाथे निर्वापितमित्यर्थः। तदेव निरुत्थमारितं लौहचूर्णं प्रक्षाल्य भानुपाकादिना

बदरास्थिनिभां शुष्कां स्वयंगुप्तां निधापयेत्।
तत् प्रातर्भोजनादौ तु सेवितं गुड़िकात्रयम् ॥२८॥
अम्लोदकानुपानञ्च हितं मधुरवर्जितम्।
दुग्धञ्च नारिकेलञ्च वर्जनीयं विशेषतः ॥२९॥
भोज्यं यथेष्टमिष्टञ्च वारिभक्ताम्लकाञ्जिकम्।
हन्त्यम्लपित्तं विविधं शूलञ्च परिणामजम् ॥३०॥
पाण्डुरोगञ्च गुल्मञ्च शोथोदरगुदामयान्।
यक्ष्माणं पञ्चकासांश्च मन्दाग्नित्वमरोचकम् ॥३१॥
प्लीहानं श्वासमानाहमामवातं सुदारुणम्।
गुड़ी क्षुधावती सेयं विख्याता रोगनाशिनी॥३२॥क्षुधावती वटी
त्रिकटु त्रिफला मुस्तं विड़ञ्चैव विड़ङ्गकम्।
एलापत्रञ्च सर्वञ्च समभागं विचूर्णयेत् ॥३३॥
यावन्त्येतानि चूर्णानि लवङ्गं तत्समं भवेत्।
सर्वचूर्णद्विगुणितं त्रिवृच्चूर्णञ्च दापयेत् ॥३४॥
सर्वमेकीकृतं यावत्तावच्छर्करयाऽन्वितम्।
सर्वमेकीकृतं पात्रे स्निग्धभाण्डे निधापयेत् ॥३५॥
भोजनादौ ततोऽन्ते च मध्वाज्याभ्यामिदं शुभम्।
शीततोयानुपानञ्च नारिकेलोदकं तथा।
ततो यथेष्टमाहारं कुर्य्यात् क्षीररसाशनः।
अम्लपित्तं निहन्त्याशु विवद्धमलमूत्रकम् ॥३७॥

---

[शो]धितं बृहत्पत्रकरिकर्णपलाशादिस्वरसैः पुटितं कुर्य्यादित्यर्थः। अत्र पुटन-[द्र]व्येषु मध्ये येषां स्वरसःप्राप्तिस्तेषां स्वरसो ग्राह्यः येषां तु स्वरसो न लभ्यते [ते]षां क्वाथो ग्राह्यः। मण्डूरशुद्धिमाह वशिरमित्यादि वशिरादीनां मूलत्वक्पल्लवान् [स्था]लीमध्ये पातयित्वा तदुपरि पुराणमण्डूरं दत्त्वा तैरेव पल्लवादिभिराच्छाद्य [ग]ोमूत्रं दत्त्वा दिवसत्रयं व्याप्य दग्ध यथा स्यात् तथा पाको विधेयः। रस-[शु]द्धिमाह नयन्त्या इत्यादि वर्द्धमानः एरण्डः। गन्धकशुद्धिमाह गन्धकमित्यादि

अग्निमान्द्यभवान् रोगान्नाशयेच्चाविकल्पतः ।
बलपुष्टिकरञ्चैव शूलदुर्नामनाशनम् ॥२८॥
प्रमेहान् विंशतिञ्चैव मूत्राघातान् तथाश्मरीम् ।
अविपत्तिकरं चूर्णमगस्त्यमुनिभाषितम् ॥२९॥ अविपत्तिकरं चूर्णम् ।

इति अम्लपित्ताधिकारः ।

---

## अथ विसर्पविस्फोटतन्तुकरोगचिकित्सा ।

सूताभ्रकान्तलौहानां भस्मगन्धकमाक्षिकम् ।
वन्यकर्कोटकद्रावैस्तुल्यं मर्द्यं दिनावधि ॥१॥
वन्यकर्कोटिकाकन्दे क्षिप्त्वा लिप्त्वा मृदा बहिः ।
भूधराख्ये पुटे पश्चाद्दिनैकं तद्विपाचयेत् ॥२॥
दशमांशं विषं योज्यं माषमात्रन्तु भक्षयेत् ।
रसः कालाग्निरुद्रोऽयं दशाहेन विसर्पनुत् ।
पिप्पलीमधुसंयुक्तमनुपानं प्रकल्पयेत् ॥३॥ कालाग्निरुद्रोरसः ।
पित्तनाशकभैषज्यं योगवाहि रसं सुधीः ।

---

क्षुद्रितमिति कुट्टितम् । तच्च गगनादिसर्वमेकीकृत्य मण्डूकपर्ण्यादि स्वरसेन एकस्थालीपाकः । ततः शतावर्य्या रसेन द्वितीयः स्थालीपाकः । ततस्त्रिफलादि क्वाथेन तृतीयः स्थालीपाकः । निश्चलस्तु मण्डूकपर्ण्यादितालमूल्यन्तररसेन पुटनमाह तत्तु न सम्यक् व्यवहारसिद्धम् । एतदनन्तरं यद्विधेयं तदाह रसगन्धकयोः कर्षमित्यादि । रसगन्धकयोः कर्षमितिच्छेदः तस्मात् मिलितरसगन्धकयोः कर्ष इत्यर्थः । वचाचव्यादीनि प्रक्षेपद्रव्यादीनि खरमञ्जरी इति अपामार्गः । प्रत्येकं त्रिफलायाश्चेति प्रत्येकमर्द्धपलं तेन मिलितत्रिफलायाः सार्द्धं पलं भवतीत्यर्थः ॥४—२९॥

इति अम्लपित्ताधिकारः ।

---

अम्लपित्तवत् विसर्पस्यापि पित्तसम्भवस्यावश्यम्भावात् तथा प्रायस्तुल्यचिकि-

कुष्ठोद्दिष्टक्रियां सर्वामपि कुर्य्याद्भिषग्वरः ॥४॥
गुडूचीनिम्बजक्वाथैः खदिरेन्द्रयवाम्बुना।
कर्पूरत्रिसुगन्धिभ्यां युक्तं सूतं द्विवल्लकम्।
विस्फोटं त्वरितं हन्याद्वायुर्जलधरानिव ॥५॥
गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम्।
विविधं स्नायुकमुग्रं हन्त्यवश्यं न संशयः ॥६॥
सप्तपर्णशिफाकल्कपानादालेपनात्तथा।
मूषलीमूलपानात्तु तन्तुकाख्यो विनश्यति ॥७॥

इति विसर्पविस्फोटतन्तुकरोगचिकित्सा।

---

## अथ मसूरिकाचिकित्सा।

अथ शुद्धस्य सूतस्य मूर्च्छितस्य मृतस्य च।
द्विबला पिप्पली धात्री रुद्राक्षघृतमाक्षिकैः।
पापरोगान्तको योगः पृथिव्यामिव दुर्लभः ॥१॥ दुर्लभोरसः।

इति मसूरिकाचिकित्सा।

---

## अथ क्षुद्ररोगचिकित्सा।

क्षुद्ररोगेषु मतिमान् तत्तदौषधयोगतः।
भस्मसूतं प्रयुञ्जीत तथात्र योगवाहिकम् ॥१॥

इति क्षुद्ररोगाधिकारः।

---

त्सितत्वाच्च तदनन्तरं विसर्पादिचिकित्सामाह सूताभ्रेत्यादि। गुडूचीत्यादौ सूतं भस्मसूतम्। सप्तपर्णेति। सप्तपर्णशिफा सप्तपर्णमूलम् ॥ १—७ ॥

विस्फोटप्रभेदत्वात्तथा प्रायस्तुल्यचिकित्सितत्वात्तदनन्तरं मसूरिकाचिकित्सितमाह। दुर्लभरसे द्विबलेति श्वेतपीतपुष्पभेदात् बलाद्वयं ग्राह्यम् ॥१॥

क्षुद्ररोगविशेषत्वात् मसूरिकानन्तरं क्षुद्ररोगचिकित्सामाह। क्षुद्ररोगेत्यादौ तत्तदौषधयोगत इति तत्तद्रोगनाशकौषधयोगत इत्यर्थः ॥ १ ॥

# अथ मुखरोगाधिकारः ।

मृतं सूतं मृतं स्वर्णं द्वाभ्यान्तुल्यां मनःशिलाम् ।
विमर्दयेच्च तैलेन चातसीसम्भवेन च ॥१॥
तद्गोलं वस्त्रतो वद्ध्वा लेपयेच्च समन्ततः ।
अतसीफलकल्केन दोलायन्त्रे त्र्यहं पचेत् ।
उद्धृत्य धारयेद्वक्त्रे जिह्वादन्तास्यरोगनुत् ॥२॥ चतुर्मुखोरसः ।
पार्वतीकाशीसम्भूतौ दरदो मधुपुष्पकम् ।
गुडूची शाल्मली द्राक्षा धान्यभूनिम्ब मार्कवम् ॥३॥
तिलमुद्गपटोलञ्च कुष्माण्ड लवणद्वयम् ।
यष्टिकाधान्यकं भस्म चान्तर्दग्धं समं समम् ॥४॥
मुखरोगं निहन्त्याशु पार्वतीरस उत्तमः ।
पित्तज्वरं चिरं हन्ति तिमिरञ्च तृषामपि ॥५॥ पार्वतीरसः ।
रसगन्धौ समौ ताभ्यां द्विगुणञ्च शिलाजतु ।
गोमूत्रेण विमर्द्याथ सप्तधार्द्रद्रवेण च ॥६॥
जातीनिम्बमहाराष्ट्रीरसैः सिध्यति पाकहा ।
कणामधुयुतं हन्ति मुखरोगं सुदारुणम् ॥७॥
गुञ्जाष्टकमिदं तालुगलौष्ठदन्तरोगनुत् ।
महाराष्ट्राभ्रगन्धाभ्यां मुखञ्च प्रतिसारयेत् ।
धारणात् सेवनाच्चैव हन्ति सर्वान् मुखामयान् ॥८॥ मुखरोगहरी
सर्वास्यामयजित् सेव्यो मधुना पर्पटीरसः ।
पथ्याबालककुष्ठञ्च गोमूत्रेण प्रसाधयेत् ।

---

रोगगणत्वसामान्यात् क्षुद्ररोगानन्तरं मुखरोगचिकित्सितमुच्यते । पार्वतीरसे पार्वतीसम्भूतः गन्धकः । काशीसम्भूतः पारदः । दरदो हिङ्गुलः । मार्कवं भृङ्गराजम् ॥ १—५ ॥

ऐषा च वटिका हन्ति मुखदौर्गन्ध्यसन्ततिम् ॥८॥ पथ्या वटी ।

इति मुखरोगाधिकारः ।

---

## अथ कर्णरोगाधिकारः ।

व्योषमिज्जलवीजञ्च शङ्खभस्म विषान्वितम् ।
मरिचसदृशं खादेत् कफकेतुमहारसम् ॥१॥ कफकेतुरसः ।

सूतं गन्धं विषञ्चैव टङ्कनं सकपर्दकम् ।
मरिचेन समायुक्तं आर्द्रतोयेन भावितम् ॥२॥
वह्निमान्द्यञ्चामरोगं श्लेष्माणं ग्रहणीगदम् ।
सन्निपातं तथा शोथं हन्ति श्रोत्रोद्भवं गदम् ॥३॥ भैरवोरसः ।

योगवाहिरसाःसर्वे प्रयोक्तव्या भिषग्वरैः ।
कर्णरोगेषु सर्वेषु पीनसादिषु नित्यशः ॥४॥

इति कर्णरोगाधिकारः ।

---

## अथ नासारोगाधिकारः ।

शुद्धसूतं समादाय गन्धभागद्वयं ततः ।
त्रिभागं टङ्कनञ्चापि विषं भागचतुष्टयम् ॥१॥
पञ्चभागं तथा देयं मरिचस्य प्रयत्नतः ।
शृङ्गवेररसैः पिष्ट्वा गुड़िका पञ्चरक्तिका ॥२॥
अनुपानं हितं योज्यं सर्वरोगप्रशान्तये ।
जलदोषोद्भवे रोगे महत्युग्रे जलोदरे ॥३॥

---

पथ्यावटिकायां सर्वचूर्णेपिच्छया अष्टगुणेन गोमूत्रेण पाचितम् ॥ ६—८ ॥

मुखरोगेषु जिह्वाश्रयरोगोऽभिहितः जिह्वाचेन्द्रियाधिष्ठानतम इन्द्रियाधिष्ठान-दृष्टिसाम्यात्तदनन्तरं कर्णरोगचिकित्सितमुच्यते । भैरवरसे कपर्दकं वराटकम् आर्द्रतोयेनेति आर्द्रकरसेन ॥ १—४ ॥

सन्निपातेषु रोगेषु नासाव्याधौ सपीनसे ।
व्रणशोथे व्रणे चैव उपदंशे भगन्दरे ॥४॥
नाड़ीव्रणे ज्वरे चैव नखदन्तविषातके ।
पञ्चामृतरसो योज्यः सर्वरोगप्रशान्तये ॥५॥ पञ्चामृतो रसः

इति नासारोगाधिकारः ।

---

## अथ नेत्ररोगचिकित्सा ।

अभ्रं ताम्रं तथा लौहं माक्षिकञ्च रसाञ्जनम् ।
पातनायन्त्रसंशुद्धं गन्धकं नवनीतकम् ॥१॥
पलप्रमाणं प्रत्येकं गृह्णीयाच्च विधानवित् ।
सर्वमेकीकृतं चूर्णं वैद्यैः कुशलकर्मभिः ॥ २ ॥
ततस्तु भावना कार्य्या त्रिफलाभृङ्गराजकैः ।
ततः प्रक्षेपचूर्णञ्च पिप्पलीमूलयष्टिका ॥ ३ ॥
एला पुनर्नवा दारु पाठा भृङ्गशठी वचा ।
नीलोत्पलं चन्दनञ्च श्लक्ष्णचूर्णञ्च दापयेत् ॥ ४ ॥
माषमेकं प्रदातव्यं घृतक्षौमधुमर्दितम् ।
मर्दनं लौहदण्डेन पात्रे लौहमये दृढ़े ॥ ५ ॥
अनुपानं प्रयोक्तव्यमुष्णेन वारिणा तथा ।
यावतो नेत्ररोगांश्च पानादेव विनाशयेत् ॥ ६ ॥
सरक्ते रक्तपित्ते च रक्ते चक्षुःस्रुतेऽपि च ।
नक्तान्ध्ये तिमिरे काचे नीलिकापटलार्बुदे ॥ ७ ॥

---

उक्तसङ्गत्यैव कर्णरोगचिकित्सानन्तरं नासारोगचिकित्सितमुच्यते । पञ्चामृतरसे गन्धभागद्वयमिति एकभागापेक्षया गन्धकस्य द्वैगुण्यम् एवं त्रिभागमित्यादि ॥ १—५ ॥

उक्तरसन्धादेव नेत्ररोगचिकित्सामाह । नेत्राशनिरसे गन्धकं नवनीताह्वयम्

अभिष्यन्देऽधिमन्थे च पिष्टेचैव चिरन्तने।
नेत्ररोगेषु सर्वेषु वातपित्तकफेषु च।
सर्वनेत्रामयं हन्यात् वृत्रमिन्द्राशनिर्यथा ॥८॥ नेत्राशनिरसः।

त्रिकटु त्रिफला शृङ्गी शटी रास्ना महौषधम्।
द्राक्षा नीलोत्पलञ्चैव काकोली मधुयष्टिकम् ॥ ९ ॥
वाघ्यालं केशराजञ्च कण्टकारीद्वयं पलम्।
लौहाभ्रयोः पलं दत्त्वा भावयेत् वक्ष्यमाणकैः ॥१०॥
त्रिफलायाश्च तोयेन भृङ्गराजरसेन वा।
भावयित्वा वटी कार्य्या बदरास्थिनिभा शुभा।
शावतो नेत्ररोगांश्च निहन्यान्नात्र संशयः॥११॥नयनामृतलौहम्।

अयःसयष्टित्रिफलाकणानां
चूर्णानि तुल्यानि पुरेण नित्यम्।
सर्पिर्मधुभ्यां सह भक्षितानि
शुक्लानि काचानि निहन्ति शीघ्रम् ॥ १२ ॥
क्षतशुक्लहरो गुग्गुलुः।

त्रिफला पञ्चयष्ट्याह्वयुक्तं सायं निषेवितम्।
लौहं तिमिरकं हन्ति सुधांशुस्तिमिरं यथा ॥ १३ ॥
तिमिरहरलौहम्।

इति नेत्ररोगचिकित्सा।

---

इति नवनीताह्वयमिति गन्धकविशेषणम्। आमलसाह्वी गन्धक इति ख्यातः।
त्रिफलाभृङ्गराजकैरिति त्रिफलारसैः भृङ्गराजरसैश्च ॥ १—८ ॥
नयनामृतलौहे शृङ्गी कर्कटशृङ्गी वाघ्यालं श्वेतवाघ्यालम्। कण्टकारीद्वयं कण्टकारी बृहती च ॥ ९—११ ॥
क्षतशुक्लहरगुग्गुलौ पुरेणेति गुग्गुलुना स च सर्वचूर्णसमः ॥ १२ ॥
तिमिरहरलौहे सर्वचूर्णसमं लौहं प्रदेयम् ॥ १३ ॥

## अथ शिरोरोगाधिकारः ।

त्रैलोक्यविजयाबीजं बीजमुन्मत्तकस्य च ।
कण्टकारीबीजकञ्च इज्जलबीजमेव च ॥१॥
बीजञ्च वृद्धदारस्य समौ गन्धकपारदौ ।
आर्द्रकैर्वटिका कार्य्या कलायपरिमाणतः ॥२॥
एषा तोयानुपानेन प्रातः खाद्या हिताशिना ।
शिरजं सर्वरोगञ्च सन्निपातं सुदारुणम् ॥३॥
आमवातं शिरोरोगं मन्यास्तम्भं गलग्रहम् ।
ग्रहणीं श्लीपदं हन्ति अन्त्रवृद्धिं भगन्दरम् ॥४॥
कामलां शोथपाण्डुत्वं पीनसार्शोगुदामयान् ।
वटिका चन्द्रिका नाम वासुदेवेन भाषिता॥५॥ रसचन्द्रिका वटी

पलं सूतं पलं गन्धं पलं लौहं पलं रवेः ।
गुग्गुलोः पलचत्वारि तदर्द्धं त्रिफला रजः ॥६॥
यष्टिमधु कणा शुण्ठी गोक्षुरं क्रिमिनाशनम् ।
तोलकं दशमूलञ्च प्रत्येकं परिकल्पयेत् ॥७॥
क्वाथेन दशमूल्याश्च यथास्वं परिभावयेत् ।
घृतयोगेन कर्त्तव्या माषैकप्रमिता वटी ॥८॥
छागीदुग्धेन वा सेव्या मधुना पयसाऽथवा ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥९॥
शिरोऽर्त्तिं नाशयत्याशु वज्रमुक्तमिवासुरम् ।
शिरोवज्ररसो नाम चन्द्रनाथेन भाषितः ॥१०॥ शिरोवज्ररसः ।

---

कर्णनासानेत्राणामधिष्ठानत्वेन शिरश्चतुरोगचिकित्सानन्तरं शिररोगचिकित्सितमुच्यते । रसचन्द्रिकायां त्रैलोक्यविजयाबीजमिति इन्द्राशनबीजम् उन्मत्तस्य च बीजमिति धुस्तूरबीजम् ॥ १—५ ॥

शिरोवज्ररसे रविस्ताम्रं तदर्द्धं त्रिफला रज इति गुग्गुलोरर्द्धं त्रिफलाचूर्णमित्यर्थः ॥ ६—१० ॥

मृतसूताभ्रकं तीक्ष्णं ताम्रं गन्धं समं समम् ।
स्नुहीक्षीरैर्दिनं मर्द्यं भक्षयेत् माषमात्रकम् ॥११॥
मधुना मर्दितं सेव्यं लौहपात्रे दिने दिने ।
सप्ताहात् सूर्य्यवर्त्तादीन् शिरोरोगान् विनाशयेत् ॥१२॥

चन्द्रकान्तरसः ।

लौहमभ्रं विषं मुस्तं फलत्रयकटुत्रयम् ।
धूस्तूरं वृद्धदारञ्च वीजमिन्द्राशनस्य च ॥१३॥
गोक्षुरकद्वयञ्चैव पिप्पलीमूलमेव च ।
एतत् सर्वं समं ग्राह्यं रसे धूस्तूरकस्य च ॥१४॥
भावयित्वा वटी कार्य्या द्विगुञ्जाफलमानतः ।
महालक्ष्मीविलासोऽयं सन्निपातनिवारकः ॥१५॥

महालक्ष्मीविलासः ।

इति शिरोरोगाधिकारः ।

---

## अथ प्रदरचिकित्सा ।

लौहं ताम्रं हरितालं वङ्गमभ्रं वराटिका ।
त्रिकटु त्रिफला चित्रं विड़ङ्गं पटुपञ्चकम् ॥१॥
चविका पिप्पली शङ्खं वचा हवुषपाकलम् ।
शठी पाठा देवदारु एला च वृद्धदारकम् ॥२॥
एतानि समभागानि संचूर्ण्य वटिकां कुरु ।
शर्करामधुसंयुक्तां घृतेन भक्षयेत् पुनः ॥३॥
रक्तं श्वेतं तथा पीतं नीलं प्रदरदुस्तरम् ।

---

महालक्ष्मीविलासे धूस्तूरं धूस्तूरवीजम् एवं वृद्धदारकवीजम् इन्द्राशनस्य च वीजं ग्राह्यम् । गोक्षुरद्वयमिति स्वल्पपत्र वृहत्पत्रभेदात् गोक्षुरद्वयं ग्राह्यम् ११—१५
स्त्रीपुंसां साधारणविकाराणां तथा पुरुषं प्रति नियतस्य उपदंशादेश्चिकित्सोक्ता

कुक्षिशूलं कटीशूलं योनिशूलञ्च सर्वगम् ॥४॥
मन्दाग्निमरुचिं पाण्डुं कृच्छ्रश्वासञ्च कासनुत् ।
आयुः पुष्टिकरं बल्यं बलवर्णप्रसादनम् ॥५॥ प्रदरान्तकलौहम्
शुद्धसूतं तथा गन्धं गन्धतुल्यञ्च रूप्यकम् ।
खर्परञ्च वराटश्च शाणमानं पृथक् पृथक् ॥६॥
तृतीयतोलकञ्चैव लौहचूर्णं क्षिपेत् सुधीः ।
कन्यानीरेण दिनैकं मर्दयेच्च भिषग्वरः ।
असाध्यं प्रदरं हन्ति भक्षणात् नात्र संशयः ॥७॥

प्रदरान्तको रसः ।

यष्टिमधु निशाचूर्णतोलकेन समन्वितम् ।
वङ्गभस्मार्कपत्रस्य रसेनाप्लाव्य पीयते ॥८॥
प्रातः प्रातः प्रतिदिनं प्रदरं हन्ति दुस्तरम् ।
रसाञ्जनं शुभाभृङ्गी चित्रकं मधुयष्टिकम् ॥९॥
धान्यतालीशगायत्री द्विजीरं त्रिवृता बला ।
दन्तीत्रूषणकञ्चापि पलार्द्धञ्च पृथक् पृथक् ॥१०॥
चतुःपलं माक्षिकस्यामलस्य च क्षिपेत्ततः ।
जातीकोषलवङ्गञ्च कक्कोलं मृद्वीकापि च ॥११॥
चातुर्जातकखर्जूरं कर्षमेकं पृथक् पृथक् ।
प्रक्षिप्य मर्दयित्वा च स्निग्धभाण्डे निधापयेत् ॥१२॥
एष लेहवरः श्रीदः सर्वरोगकुलान्तकः ।
यत्र यत्र प्रयोज्यः स्यात् तत्तदामयनाशनः ॥१३॥
अनुपानं प्रयोक्तव्यं देशकालानुसारतः ।
सर्वोपद्रवसंयुक्तं प्रदरं सर्वसम्भवम् ॥१४॥

---

इदानीं स्त्रीनियतरोगाणां चिकित्सा वक्तव्या तत्र च योनिव्याप्तिविशेषेऽप्यार्तव-प्रवृत्तिसम्भवात् प्रथमं दुष्टार्त्तवप्रवृत्तिस्वरूपस्य प्रदरस्य चिकित्सितमुच्यते ।

द्वन्द्वजं चिरजञ्चैव रक्तपित्तं विनाशयेत्।
कासश्वासाम्लपित्तञ्च क्षयरोगमथापि वा ॥१५॥
सर्वरोगप्रशमनो बलवर्णाग्निवर्द्धनः।
पुष्कराख्यो लेहवरः सर्वत्रैवोपयुज्यते ॥१६॥ पुष्करलेहः।
धात्री च पथ्या च रसाञ्जनञ्च सर्वं विचूर्ण्य सजलं निपीतम्।
अनन्तरक्तस्रवमुग्रवेगं निवारयेत् सेतुरिवाम्बुवेगम् ॥१७॥
रक्तपित्तहरं सर्वं प्रदरे नूतने तथा।
रक्तातिसारकथितं सर्वमत्र प्रयोजयेत् ॥१८॥

इति प्रदरचिकित्सा।

---

## अथ योनिव्यापच्चिकित्सा।

समस्तं वातजित् कर्म योनिव्यापत्सु शस्यते।
क्षालनस्वेदलेपांश्च वरानीरेण कारयेत् ॥ १ ॥
प्रक्षालयेद्भगं नित्यं पथ्यामलकवल्कलैः।
वृद्धापि कामिनी नित्यं बालावत् कुरुते रतिम् ॥ २ ॥

इति योनिव्यापच्चिकित्सा।

---

## अथ सूतिकारोगचिकित्सा।

रसगन्धककृष्णाभ्रं तदर्द्धं मृततास्रकम्।
चूर्णितं मर्दयेत् यत्नाद्भेकपर्णीरसेन च ॥ १ ॥

---

...रान्तकलौहे वराटिका कपर्दः। पटुपञ्चकं पञ्चलवणं शृङ्ग' शृङ्गनाभि पाकलं ...म ॥ १—१५ ॥

पुष्करलेहे शुभा वंशलोचना गायत्री खदिरः। द्विजीरमिति जीरकं ...जीरकम् ॥ ६—१८ ॥

...अधिकारानुवृत्तेः प्रदुष्टार्त्तवकार्य्यत्वाच्च तदनन्तरं योनिव्यापच्चिकित्सित...ते। समस्तमित्यादि ॥ १—२ ॥

छायाशुष्का वटी कार्य्या द्विगुञ्जाफलमानतः ।
क्षीरत्रिकटुना युक्ता सूतिकातङ्कनाशिनी ।
ज्वरं तृष्णां रुचिं श्वासं शोथं हन्ति न संशयः ॥ २ ॥
सूतिकारिरसः ।

रसगन्धकतुल्यञ्च त्र्यहं जम्बीरमर्दितम् ।
त्रिभावितं त्रिकटुना देयं गुञ्जाचतुष्टयम् ।
गर्भिण्याः शूलविष्टम्भज्वराजीर्णेषु योजयेत् ॥ ३ ॥
सूतिकाविनोदरसः ।

तुल्यस्थाने स्वर्णं देयं चिन्तामणिरसे तथा ॥ ४ ॥
गर्भचिन्तामणिरसः ।

शुण्ठ्या भागो भवेदेको द्वौ भागौ मरिचस्य च ।
पिप्पल्याश्च त्रिभागं स्यादर्द्धभागञ्च व्योमकम् ॥ ५ ॥
जातीकोषस्य भागौ द्वौ द्वौ भागौ तुत्थकस्य च ।
सिन्धुवारजलेनैव मर्दयेदेकयामतः ।
मधुना सह भोक्तव्यः सूतिकातङ्कनाशनः ॥ ६ ॥
बृहत्सूतिकाविनोदरसः ।

टङ्कनं मूर्च्छितं सूतं गन्धकं हेमतारकम् ।
जातीफलं तथा कोषं लवङ्गैला च धातकी ॥ ७ ॥
वत्सकेन्द्रयवं पाठा शृङ्गी विश्वाजमोदिका ।
गुड़ी प्रसारणीरसैश्चतुर्गुञ्जाप्रमाणतः ॥ ८ ॥
भक्षयेत्तद्रसैः प्रातः सूतिकातङ्कशान्तये ।
जीर्णज्वरं तथा शोथं ग्रहणीप्लीहकासनुत् ॥९॥ सूतिकारिरसः

---

क्रमप्राप्तत्वात् तथाविशिष्टस्त्रीरोगचिकित्साभिधानार्थं सूतिकारोगचिकित्सित मुच्यते। सूतिकारिरसे तदर्द्धं ताम्रभस्मकमिति एकभागापेक्षया ताम्रस्यार्द्धभागत्वम्। भेकपर्णी थानकुनी ॥१—२॥

सूतिकारिरसे तारकं रौप्यं कोष जातीकोषं वत्सकः कुटजः ॥३—९॥

रसगन्धकलौहाभ्रं जातीकोषं सुवर्णकम्।
समांशं मर्दयेत् खल्ले छागीदुग्धेन पेषयेत्॥ १०॥
गुञ्जाद्वयप्रमाणेन वटिकां कुरु यत्नतः।
ज्वरातीसाररोगघ्नः सूतिकातङ्कनाशनः।
सूतिकाघ्नो रसो नाम ब्रह्मणा परिकीर्त्तितः॥११॥

सूतिकाघ्नोरसः।

रसाभ्रगन्धकव्योषं सुवर्णमाक्षिकं विषम्।
सर्वमेकीकृतं चूर्णं खादेद्रक्तिचतुष्टयम्॥ १२॥
सूतिका ग्रहणीरोगं वह्निमान्द्यञ्च नाशयेत्।
अतिसारञ्च शमयेदपि वैद्यविवर्जितम्।
कासश्वासातिसारघ्नो वाजीकरण उत्तमः॥ १३॥

सूतिकान्तको रसः।

जातीफलं टङ्कनञ्च व्योषं दैत्येन्द्ररक्तकम्।
तच्चूर्णं समभागेन मर्दितं प्रहरद्वयम्॥ १४॥
जम्बीररसयोगेन वटीं कुर्य्याद्विचक्षणः।
गुञ्जाद्वयप्रमाणान्तु खलु वैद्यः प्रयत्नतः॥ १५॥
आर्द्रकस्य रसेनैव भक्षयेदुष्णवारिणा।
निहन्ति सर्वरोगञ्च भास्करस्तिमिरं यथा॥ १६॥

गर्भचिन्तामणिरसः।

रसं तारं तथा लौहं प्रत्येकं कर्षमानतः।
कर्षत्रयं तथा चाभ्रं कर्पूरं वङ्गताम्रकम्॥ १७॥
जातीफलं तथा कोषं गोक्षुरञ्च शतावरी।
बलातिबलयोर्मूलं प्रत्येकं तोलकं शुभम्॥ १८॥
वारिणा वटिका कार्य्या द्विगुञ्जाफलमानतः।
सन्निपातं निहन्त्याशु स्त्रीणाञ्चैव विशेषतः।

गर्भिण्या ज्वरदाहञ्च प्रदरं सूतिकामयम् ॥ १९ ॥

गर्भचिन्तामणिरसः ।

सूतं गन्धं तथा स्वर्णं लौहं रजतमाक्षिके ।
हरितालं वङ्गभस्माप्यभ्रकं समभागिकम् ॥ २० ॥
भावना खलु दातव्या रसैरेषां पृथक् पृथक् ।
ब्राह्मीवासाभृङ्गराजपर्पटीदशमूलकैः ॥ २१ ॥
सप्तधा भावयेद्वैद्यो गुञ्जामानां वटीं चरेत् ।
गर्भचिन्तामणिरयं पूर्ववद्गुणकारकः ॥ २२ ॥

बृहद्गर्भचिन्तामणिरसः ।

त्रिभागं त्रिकटु देयं चतुर्भागञ्च हिङ्गुलम् ।
जातीकोषं लवङ्गञ्च प्रत्येकञ्च त्रिकार्षिकम् ॥ २३ ॥
सुवर्णमाक्षिकस्यापि पलार्द्धं प्रक्षिपेद्बुधः ।
जलेन मर्दयित्वाऽथ चणमात्रा वटीकृता ।
निहन्ति गर्भिणीरोगं भास्करस्तिमिरं यथा ॥ २४ ॥

गर्भविनोदरसः ।

लवङ्गं रसगन्धौ च यवक्षारं तथाभ्रकम् ।
लौहं ताम्रं सीसकञ्च पलमानं समाहरेत् ॥ २५ ॥
जातीफलं केशराजं वराभृङ्गैलामुस्तकम् ।
धातकीन्द्रयवं पाठा शृङ्गी विल्वञ्च वालकम् ॥२६॥
कर्षमानञ्च संचूर्ण्य सर्वमेकत्र कारयेत् ।
वदरास्थिप्रमाणेन वटिकां कारयेद्भिषक् ॥ २७ ॥
गन्धालिकापत्ररसैरनुपानं प्रदापयेत् ।
सर्वातीसारशमनः सर्वशूलनिवारणः ॥ २८ ॥
सूतिकाशोथपाण्डुत्वसर्वज्वरविनाशनः ॥

---

गर्भचिन्तामणिरसे तारं रौप्यं कोषं जातीकोषं शतावरी शतमूली ॥१०—१९

सूतिकाहरनामाऽयं रसः परमदुर्लभः ॥२९॥ सूतिकाहररसः।

अभ्रकं पुटितं ताम्रं लौहं गन्धकपारदम्।
कुनटी टङ्गनं चारं त्रिफला च पलं पलम् ॥ ३० ॥
गरलञ्च तथा माषचतुष्कञ्चैव चूर्णितम्।
तत् सर्वं भावयेदेषां रसैः प्रत्येकशः पलैः ॥३०॥
ग्रीष्मसुन्दरकस्याटरूषकस्य क्रमेण तु।
रसैस्ताम्बूलवल्याश्च दलोत्थैर्भावितं पृथक् ॥३२॥
द्रवे किञ्चित् स्थिते चूर्णं मरिचस्य पलं चिपेत्।
सर्वातीसारशमनं सर्वशूलनिवारणम् ॥३३॥
सूतिकाशोथपाण्डुत्वसर्वज्वरविनाशनम्।
नाशयेत् सूतिकातङ्कं वृत्तमिन्द्राशनिर्यथा ॥३४॥ महाभ्रवटी।

मृतमभ्रञ्च लौहञ्च कुनटी ताम्रकं तथा।
रसगन्धकटङ्कञ्च यवचारफलत्रिकम् ॥३५॥
प्रत्येकं तोलकं ग्राह्य मूषणं पञ्चतोलकम्।
सर्वमेकीकृतं चूर्णं प्रत्येकेन विभावयेत् ॥३६॥
ग्रीष्मसुन्दरसिंहास्यनागवल्या रसेन च।
चतुर्गुञ्जाप्रमाणेन वटिकां कारयेत् भिषक्।
योजयेत् सर्वथा वैद्यः सूतिकारोगशान्तये ॥३७॥ महाभ्रवटी

अभ्रं ताम्रं तथा लौहं राजपट्टं रसं तथा।
गन्धटङ्कमरिचञ्च यवचारं समांशकम् ॥३८॥
तथात्र तालकञ्चैव त्रिफलायाश्च तोलकम्।
तोलकञ्चामृतञ्चैव षड्गुञ्जाप्रमिता वटी ॥३९॥
ग्रीष्मसुन्दरकस्यापि नागवल्लीरसेन च।

---

सूतिकाहररसे वरा त्रिफला गन्धालिकापत्ररसैः प्रसारणीपत्ररसैः ॥२०—२९

महाभ्रवटिकायां कुनटी मनःशिला चारं यवचारं गरलं विषं ग्रीष्मसुन्दरं गीमा इति ख्याता वृता अटरूषकस्य वासकस्य ॥३०—३४

भावयेत् सप्त धा हन्ति ज्वरं कासाङ्गसंग्रहम् ।
सूतिकातङ्कशोथादि स्त्रीरोगञ्च विनाशयेत् ॥४०॥ रसशार्दूलः ।
अभ्रकं पुटितं ताम्रं स्वर्णं गन्धञ्च पारदम् ।
शिला टङ्कं यवक्षारं त्रिफलायाः पलं पलम् ।
गरलस्य तथाशाम्रमर्द्धतोलकसम्मितम् ।
त्वगेला पत्रकञ्चैव जातीकोषलवङ्गकम् ॥४२॥
मांसी तालीशपत्रञ्च माक्षिकञ्च रसाञ्जनम् ।
एषां द्विकर्षिकं भागं देयञ्चापि विचक्षणैः ॥४३॥
द्रवे किञ्चित् स्थिते चूर्णं मरिचस्य पलं क्षिपेत् ।
भावना च प्रदातव्या पूर्वोक्तेन रसेन च ॥४४॥
निहन्ति विविधान् रोगान् ज्वरान् दाहान् वमिं भ्रमिम् ।
तथातिसारकञ्चैव वह्निमान्द्यमरोचकम् ।
विशेषाद् गर्भिणीरोगं नाशयेदचिरेण च ॥४५॥ महारसशार्दूलः
रसस्य द्विगुणं गन्धं शुद्धं संमर्दयेत् दिनम् ।
प्रतिलौहं सूततुल्यमष्टलौहं मृतं क्षिपेत् ॥४६॥
ब्राह्मी जयन्ती निर्गुण्डी यष्टिमधु पुनर्नवा ।
नलिका गिरिकर्णर्कक्षणधूर्त्त दुरालभा ॥४७॥
अटरूषं काकमाची द्रवैरेषां विमर्दयेत् ।
गुञ्जात्रयं चतुर्थं वा सर्वरोगेषु योजयेत् ।
रोगोक्तमनुपानं वा कवोष्णं वा जलं पिवेत् ॥४८॥
अष्टधातुमाह । सुवर्णं रजतं ताम्रं कांस्यं पित्तलमेव च ।

---

रसशार्दूलरसे राजपट्टं कान्तपाषाणं गन्धं गन्धकं अमृतं विषम् ॥३५—४०॥

महारसशार्दूले शिला मनःशिला पत्रं तेजपत्रं माक्षिक स्वर्णमाक्षिकम् ॥५१—४५॥

बृहद्रसशार्दूलरसे प्रतिलौहमिति वक्ष्यमाणाष्टलौहं गिरिकर्णी अपराजिता ।

नागं वङ्गं तथा लौहं धातवोऽष्टौ प्रकीर्त्तिताः॥४९॥वृहद्रसशार्दूलः

इति सूतिकारोगचिकित्सा ।

---

## अथ बालरोगचिकित्सा ।

पलं शुद्धस्य सूतस्य गन्धकस्य पलं तथा ।
सुवर्णमाक्षिकस्यापि भागार्द्धं संप्रकल्पयेत् ॥१॥
ततः कज्जलिकां कृत्वा लौहपात्रमये दृढ़े ।
केशराजस्य भृङ्गस्य निर्गुण्ड्याः स्वरसेन च ॥२॥
शुभे शिलामये पात्रे लौहदण्डेन मर्दयेत् ।
राजिकासदृशीश्चैव वटिकां कारयेद्भिषक् ॥३॥
एकैकां वटिकां खादेन्नागवल्लीदलद्रवैः ।
हन्ति त्रिदोषसम्भूतं ज्वरञ्चैव सुदारुणम् ॥४॥
चिरज्वरञ्च कासञ्च शूलं सर्वभवं तथा ।
शिशूनां रोगनाशाय शिवेन परिकीर्त्तितः ॥५॥ बालोरसः ।
पलं शुद्धस्य सूतस्य गन्धकस्य च तत्समम् ।
सुवर्णमाक्षिकस्यापि चार्द्धभागं नियोजयेत् ॥६॥
ततः कज्जलिकां कृत्वा लौहपात्रमये दृढ़ ।
केशराजस्य भृङ्गस्य निर्गुण्ड्याः पर्णसम्भवम् ॥७॥
स्वरसं काकमाच्याश्च ग्रीष्मसुन्दरकस्य च ।
सूर्य्यावर्त्तकवर्षाभूभेकपर्णीरसैस्तथा ॥८॥
श्वेतापराजितायाश्च रसं दद्याद्विचक्षणः ।
देयं रसार्द्धभागेन चूर्णं मरिचसम्भवम् ॥९॥
शुभे शिलामये पात्रे यामं दण्डेन मर्दयेत् ।
शुष्कमातपसंयोगाद् गुड़िकां कारयेद्भिषक् ।

---

कृष्णधूर्त्तः कृष्णधुस्तूरः द्रवैरेषां विमर्दयेदिति एषां प्रत्येकशः स्वरसैः सप्तवारं भावयेदित्यर्थः ॥४६-४९॥

प्रमाणं सर्षपाकारं बालानाञ्च प्रयोजयेत्।
हन्ति त्रिदोषसम्भूतं ज्वरञ्चैव सुदारुणम्।
कासञ्च विविधञ्चैव सर्वरोगं निहन्ति च ॥११॥ बालरसः।

इति बालरोगचिकित्सा।

---

## अथ विषाधिकारः।

निशां सटङ्गाञ्च सजातीकोषं तुल्यं समांशं कुरु देवदाल्याः।
रसेन पिष्ट्वा विषवज्रपाती रसो भवेत् सर्व विषापहन्ता ॥१॥
निष्कोऽस्य संजीवयति प्रयुक्तो नृमूत्रयोगेन च कालदष्टम्।
जटाविषेणाकुलितं तथान्यैर्विषैश्च यं हन्ति तथातुरञ्च ॥२॥
विषवज्रपातीरसः।

सूतराजस्य तोलैकं गन्धकस्य तथैव च।
अभ्रात् कर्षं ततो देयं तोलैकं कान्तलौहकम् ॥३॥
परोक्तेनौषधेनैव भावयेच्च पृथक् पृथक्।
विशाला वृहती ब्राह्मी सौगन्धिकसुदाड़िमैः ॥४॥
मर्कव्याश्चात्मगुप्तायाः स्वरसेन पृथक् पृथक्।
एकरक्तिकमानेन वटिकां कारयेत् भिषक् ॥५॥
वटीमिकां भक्षयित्वा पिवेच्छीतजलं ततः।
भीमरुद्रो रसो नाम चासाध्यमपि साधयेत्।
कुक्कुरस्य शृगालस्य विषं हन्ति सुदुस्तरम् ॥६॥ भीमरुद्रोरसः।

इति विषाधिकारः।

इति द्वितीयोऽध्यायः।

---

बालरोगाणां दुष्टस्तन्येन सम्भवादनन्तरं बालरोगचिकित्सितमुच्यते। बालरसे भागार्द्धं संकल्पयेदित्यर्द्धपलभागम् ॥१—११॥

इदानीं आतुरहितचिकित्सापारिशेष्यात् विषचिकित्सामाह। विषवज्रपातरसे देवदाल्याः हस्तिघोषकस्य ॥१—२॥

भीमरुद्ररसे—सूतराजस्य पारदस्य मर्कटी शूकशिम्बा ॥३—६॥

## अथ रसायनाधिकारो वाजीकरणाधिकारश्च।

स्वस्थस्यौजस्करं किञ्चित् किञ्चिदार्त्तस्य रोगनुत्।
यज्जराव्याधिविध्वंसि भेषजं तत् रसायनम् ॥१॥
रसगन्धकयोर्ग्राह्यं कर्षमेकं सुशोधितम्।
अभ्रं निश्चन्द्रकं दद्यात् पलार्द्धं सुविचक्षणः ॥२॥
कर्पूरं शाणकं दद्याद्वङ्गञ्च कोलसम्मितम्।
ताम्रं कोलार्द्धकं तत्र निःशेषमारितं क्षिपेत् ॥३॥
लौहं कर्षं सुजीर्णञ्च वृद्धदारकबीजकम्।
विदारी शतमूली च क्षुरबीजं बला तथा ॥४॥
मर्कट्यतिबला चैव जातीकोषफले तथा।
लवङ्गं विजयाबीजं श्वेतसर्जं यमानिका ॥५॥
एतेषां चूर्णमादाय प्रक्षिपेत् शाणसम्मितम्।
गुञ्जाद्वयञ्च भोक्तव्यं कोष्णं क्षीरं पिबेदनु ॥६॥
गृहे यस्य शतं स्त्रीणां विद्यतेऽतिव्यवायिनः।
न तस्य लिङ्गशैथिल्यमौषधस्यास्य सेवनात् ॥७॥
न च शुक्रं क्षयं याति न बलं ह्रासतां व्रजेत्।
कामरूपी भवेद्दिव्यो वृद्धः षोड़शवर्षवत् ॥ ८ ॥
रसायनवरो बल्यो वाजीकरण उत्तमः।
रसः श्रीमन्मथो नाम महेशेन प्रकाशितः ॥९॥ श्रीमन्मथोरसः।
रसभस्मीकृतं कोलं गन्धकं शोधितं समम्।
लौहं कर्षद्वयं ताम्रमर्द्धकोलकसम्मितम् ॥ १० ॥

---

भेषजं तावद्द्विविधं आतुरहितं सुस्थहितञ्च सुस्थहितमपि द्विविधं रसायन-वाजीकरणभेदात्। तत्र आतुरहितं तावदुक्तमेव सम्प्रति सुस्थहितं वाच्यं श्रीमन्मथरसे क्षुरबीजमिति कोकिलाक्षबीजं मर्कटी शूकशिम्बी जातीकोषफलेति जातीकोषं जातीफलञ्च। विजयाबीजं शक्राशनबीजम्। श्वेतसर्जः श्वेतधूनकः ॥१९

सुवर्णं जारितं दद्यात् शाणार्द्धं सुविचक्षणः।
अभ्रं कर्षद्वयं दद्यात् शाणार्द्धं चन्द्रचूर्णकम् ॥११॥
श्यामावीजं वरीञ्चैव बलामतिबलां तथा।
एलाञ्च शङ्खपुष्पञ्च शाणमानं विनिक्षिपेत् ॥१२॥
जलेन वटिकां कृत्वा गुञ्जामात्रां प्रदापयेत्।
सेवनादस्य कन्दर्परूपो भवति मानवः ॥ १३ ॥
सहस्रं याति नारीणामुत्साहो जायतेऽधिकः।
नित्यं स्त्रीसेवनाद्यस्तु क्षीणशुक्रो भवेन्नरः ॥१४॥
महाशुक्रो भवेत् सोऽपि सेवनादस्य नान्यथा।
महाबलो महाबुद्धिर्जायते नात्र संशयः ॥ १५ ॥
स्थूलानां कर्षकः श्रेष्ठः कृशानां पुष्टिकारकः।
रसो विनाशयेद्रोगान् सप्तसप्ताहभक्षणात् ॥१६॥ माहेश्वररसः।

सूताभ्रलौहं सशिलाजतु स्याद्विडङ्गताप्ये मधुना घृतेन।
संमर्द्य सर्वं खलु पूर्णचन्द्रो माषोऽस्य वृष्यो भवति प्रयुक्तः ॥१७॥
पूर्णचन्द्रो रसः।

श्वेता पुनर्नवा दन्ती वाजिगन्धात्रिकत्रयैः।
शतमूलीबलायुक्तैरेभिर्लौहं प्रसाधितम् ॥ १८ ॥
हिनस्ति नियतं कार्श्यमपि भृङ्गरसैः सह।
नास्त्यनेन समं लौहं सर्वरोगान्तकं मतम्।
दीपनं बलवर्णाग्निवृंष्यदञ्चोत्तमोत्तमम् ॥१९॥ कार्श्यहरं लौहम्

पलं कृष्णाभ्रचूर्णस्य तदर्द्धौ रसगन्धकौ।
कर्पूरस्य तदर्द्धञ्च जातीकोषफले तथा ॥ २० ॥

---

महेश्वररसे रसभस्म रससिन्दूरं चन्द्रचूर्णकं कर्पूरम्। श्यामावीजं वृद्धदारक-वीजं वरी शतमूली ॥१०—१६॥

पूर्णचन्द्ररसे ताप्यं मनःशिला ॥१७॥

कार्श्यहरलौहे वाजिगन्धा अश्वगन्धा। अत्र सर्वसमं लौहं प्रदेयम् ॥१८—१९॥

वृद्धदारकबीजञ्च बीजमुन्मत्तकस्य च।
त्रैलोक्यविजयाबीजं विदारीमूलमेव च ॥ २१ ॥
नारायणी तथा नागबला चातिबला तथा।
बीजं गोक्षुरकस्यापि नैचुलं बीजमेव च ॥ २२ ॥
एतेषां कार्षिकं चूर्णं पर्णपत्ररसेन च।
निष्पिष्य वटिका कार्य्या त्रिगुञ्जाफलमानतः ॥ २३ ॥
निहन्ति सन्निपातोत्थान् गदान् घोरान् सुदारुणान्।
वातोत्थानपि पित्तोत्थान् नास्यत्र नियमः क्वचित् ॥२४॥
कुष्ठमष्टादशाख्यञ्च प्रमेहान् विंशतिं तथा।
नाड़ीव्रणं व्रणं घोरं गुदामयभगन्दरम् ॥ २५ ॥
श्लीपदं कफवातोत्थं चिरजं कुलसम्भवम्।
गलशोथमन्त्रवृद्धिमतीसारं सुदारुणम् ॥ २६ ॥
कासपीनसयक्ष्मार्शः स्थौल्यं दौर्गन्ध्यमेव च।
आमवातं सर्वरूपं जिह्वास्तम्भं गलग्रहम् ॥ २७ ॥
अर्दितं गलगण्डञ्च वातशोणितमेव च।
उदरं कर्णनासाक्षिमुखवैरस्यमेव च ॥ २८ ॥
सर्वशूलं शिरःशूलं स्त्रीणां गदनिसूदनम्।
वटिकां प्रातरेकैकां खादेन्नित्यं यथाबलम् ॥ २९ ॥
अनुपानमिह प्रोक्तं मांसं पिष्टं पयो दधि।
वारिभक्तसुरासीधुसेवनात् कामरूपधृक् ॥ ३० ॥
वृद्धोऽपि तरुणस्पर्द्धी न च शुक्रस्य संक्षयः।
न च लिङ्गस्य शैथिल्यं न केशा यान्ति पक्वताम् ॥ ३१ ॥
नित्यं स्त्रीणां शतं गच्छेत् मत्तवारणविक्रमः।
द्विलक्षयोजनी दृष्टिर्जायते पौष्टिकः परः ॥ ३२ ॥
प्रोक्तः प्रयोगराजोऽयं नारदेन महात्मना।
रसो लक्ष्मीविलासोऽयं वासुदेवो जगत्पतिः।

अभ्यासादस्य भगवान् लक्ष्मनारीषु वल्लभः ॥ ३३ ॥

लक्ष्मीविलासो रसः।

कामदेवमथो सूतं कामिनां कामदं सदा।
यस्य प्रभावतो बल्यो रम्यश्च रमते स्त्रियम् ॥ ३४ ॥
पारदं पलमेकं स्यात् द्विपलं शुद्धगन्धकम्।
रक्तकार्पासतोयेन घृष्ट्वा काचस्य कुप्यतः ॥ ३५ ॥
निक्षिप्य टङ्कनेनैव मुखं तस्य निरोधयेत्।
बालुकायन्त्रमध्यस्थं कुप्यञ्च कुरु तत् दृढ़म् ॥ ३६ ॥
अहोरात्रं पचेदग्नौ शास्त्रवित् कुशलो भिषक्।
शीते चादाय पात्रस्थं कुपिकान्तरलम्बितम् ॥ ३७ ॥
दरदेन समं रक्तं सोज्ज्वलं भस्म यद्भवेत्।
भक्षयेत् माषमेकञ्च घृतेन मधुना सह ॥३८॥
पश्चात् दुग्धं गुड़ञ्चाज्यं कृष्णेक्षुमपि शर्कराम्।
द्राक्षाखर्जूरमधुकप्रभृतीनथ भक्षयेत् ॥ ३९ ॥
त्रिफलामधुना शान्तिं याति पित्तं चिरोत्थितम्।
निर्गुण्डिकारसेनात्र दुर्वारा वातवेदना ॥ ४० ॥
प्रशमं याति वेगेन नूतनञ्च वपुर्भवेत्।
अर्द्धावर्त्तितदुग्धेन गृह्यते यद्ययं रसः।
बन्ध्यापि च भवत्येव जीववत्सा सपुत्रिका ॥ ४१ ॥

श्रीकामदेवो रसः।

शुद्धसूतं समं गन्धं त्र्यहं कह्लारजैर्द्रवैः।
मर्दितं बालुकायन्त्रे यामं सम्पुटके पचेत् ॥ ४२ ॥

---

लक्ष्मीविलासे तदर्द्धं रसगन्धकमिति अष्टार्द्धमिलितरसगन्धकमित्यर्थः। कर्पूरञ्च तदर्द्धमिति मिलितरसगन्धकार्द्धं तेन रसगन्धककर्पूराणि तुल्यभागानि। उन्मत्तस्य बीजं धूस्तूरबीजम्। नारायणी शतमूली ॥२०—३३॥

श्रीकामदेवरसे रसः रससिन्दूरवत् बालुकायन्त्रे काचकुप्रिकायां पचनीयः॥३४ ४१

रक्तागस्त्यद्रवैर्भाव्यं दिनमेकं सिताम्बुजैः।
यथेष्टं भक्षयेच्चानु कामयेत् कामिनीशतम् ॥ ४३ ॥

अनङ्गसुन्दरो रसः।

मृतसूतस्य पादांशं हेमभस्म प्रकल्पयेत्।
क्षीराज्यदधिसंमिश्रं माषैकं कांस्यपात्रके ॥ ४४ ॥
लेहयेत् माषषट्कन्तु जरामरणनाशनम्।
वागुजीचूर्णकर्षैकं धात्रीफलरसाप्लुतम्।
अनुपानं पिबेन्नित्यं स्याद्रसो हेमसुन्दरः ॥४५॥ हेमसुन्दरो रसः

सूतभस्म चतुर्भागं लौहभस्म तथाष्टकम्।
अभ्रभस्म च षड्भागं गन्धकस्य च पञ्चमम् ॥४६॥
भावयेत् त्रिफलाक्वाथैस्तत्सवं भृङ्गजैर्द्रवैः।
शिग्रुवह्निकटुक्वाथैर्भावयेत् सप्तधा पृथक् ॥ ४७ ॥
सर्वतुल्या कणा योज्या गुड़ैर्मिश्रा पुरातनैः
निष्कमात्रं सदा खादेत् ज्वरामृत्युनिवारणम् ॥ ४८ ॥
ब्रह्मायुः स्यात् चतुर्मासि रसोऽयममृतार्णवः।
कौरण्टकस्य पत्राणि गुड़ेन भक्षयेदनु ॥४९॥ अमृतार्णवो रसः।

द्विकर्षं शुद्धसूतस्य गन्धकञ्च द्विकार्षिकम्।
लौहभस्म पलञ्चाभ्रं जारितञ्च पलांशिकम् ॥ ५० ॥
द्वितोलं रजतञ्चैव वङ्गभस्म द्विकार्षिकम्।
सुवर्णं तोलकञ्चैव ताम्रं कांस्यञ्च तत्समम् ॥ ५१ ॥
जातीफलञ्चेन्द्रपुष्पमेलाभृङ्गञ्च जीरकम्।
कर्पूरं वनिता मुस्तं कर्षं कर्षं पृथक् पृथक् ॥ ५२ ॥
सर्वं खल्लतले क्षिप्त्वा कन्यारसविमर्दितम्।
भावयित्वा वरातोयैः केवुकानां रसेन च ॥५३॥

---

अमृतार्णवे सूतभस्म इति रससिन्दूरम् ॥४२—४९॥

एरण्डपत्रैराविष्ट्य धान्ये रात्रिदिनोषितम् ।
उद्धृत्य मर्दयित्वा तु वटिकां चणसम्मिताम् ॥५४॥
खादेच्च पर्णखण्डेन संयुक्तां व्याधिनाशिनीम् ।
सर्वव्याधिविनाशाय काशीनाथेन भाषितः ॥५५॥
पूर्णचन्द्ररसो नाम सर्वरोगेषु योजयेत् ।
बल्यो रसायिनो वृष्यो वाजीकरण उत्तमः ॥५६॥
अयमष्ठीलिकां हन्ति कासश्वासमरोचकम् ।
आमशूलं कटीशूलं हृच्छूलं पित्तशूलकम् ॥५७॥
अग्निमान्द्यमजीर्णञ्च ग्रहणीं चिरजामपि ।
आमवाताम्लपित्तं च भगन्दरमपि द्रुतम् ॥५८॥
कामलां पाण्डुरोगञ्च प्रमेहं वातशोणितम् ।
नातः परतरः श्रेष्ठो विद्यते वाजिकर्मणि ॥५९॥
रसस्यास्य प्रसादेन नरो भवति निर्गदः ।
मेधाञ्च लभते वाग्मी सर्वशास्त्रसमन्वितः ॥६०॥
मदनस्य समां कान्तिं मदनस्य समं बलम् ।
गीयते मदनेनैव मदनस्य समं वपुः ॥६१॥
स्त्रीणां तथाऽनपत्यानां दुर्बलानाञ्च देहिनाम् ।
क्षीणानामल्पशुक्राणां वृद्धानां गतरेतसाम् ॥६२॥
ओजस्तेजस्करश्चायं स्त्रीषु कामविवर्द्धनः ॥६३॥
अभ्यासेन निहन्ति वृद्धपलितं सर्वामयध्वंसकः
वृद्धानां मदनोदयोदयकरः प्रौढाङ्गनासङ्गमे ।
नित्यानन्दकरः सुखातिसुखदो भूपैः सदा सेव्यते
दृष्टः सिद्धफलो रसायनवरः श्रीपूर्णचन्द्रो रसः ॥६४॥

वृहत्पूर्णचन्द्रो रसः ।

---

वृहत् पूर्णचन्द्ररसे इन्द्रपुष्पं लवङ्गं वनिता प्रियङ्गुः। वराती येरिति त्रिफला-क्वाथैः ५०—६४॥

पलं मृदुस्वर्णदलं रसेन्द्रात् पलाष्टकं षोड़श गन्धकस्य।
शोणैः सुकार्पासभवप्रसूनैः सर्वं विमर्द्याथ कुमारिकाद्भिः ॥६५॥
तत्काचकुम्भे निहितं प्रगाढ़ं मृत्कर्पटैस्तद्दिवसत्रयञ्च।
पचेत् क्रमाग्नौ सिकताख्ययन्त्रे ततो रजः पल्लवरागरम्यम् ॥६६
संगृह्य चैतस्य पलञ्च सम्यक् पलञ्च कर्पूररजस्तथैव।
जातीफलं शोषणमिन्द्रपुष्पं कस्तूरिकाया इह शाण एकः ॥६७
चन्द्रोदयोऽयं कथितोऽस्य वल्लो भुक्तो हि वल्लीदलमध्यवर्त्ती।
मदोन्मदानां प्रमदाशतानां गर्वाधिकत्वं श्लथयत्यवश्यम् ॥६८॥
घृतं घनीभूतमतीव दुग्धं गुरूणि मांसानि समण्डकानि।
माषान्नपिष्टानि भवन्ति पथ्यान्यानन्ददायीन्यपराणि चात्र॥६९

रतिकाले रतान्ते वा सेवितोऽयं रसेश्वरः।
मानहानिं करोत्येष प्रमदानां सुनिश्चितः ॥७०॥
कृत्रिमं स्थावरञ्चैव जङ्गमञ्चैव यद्विषम्।
न विकाराय भवति साधकेन्द्रस्य वत्सरात् ॥७१॥
यथा मृत्युञ्जयोऽभ्यासात् मृत्युं जयति देहिनाम्।
तथाऽयं साधकेन्द्रस्य जरामरणनाशनः ॥७२॥
इन्द्रपुष्पं लवङ्गं स्यात् कार्पासकुसुमद्रवैः।
तन्त्रान्तरे प्रसिद्धोऽयं मकरध्वजनामतः ॥७३॥ चन्द्रोदयरसः
स्वर्णभागो च वङ्गञ्च मौक्तिकं कान्तलौहकम्।
जातीकोषफले रूप्यं कांस्यकं रससिन्दूरम् ॥७४॥
प्रवालं कस्तूरी चन्द्रमभ्रकञ्चैकभागिकम्।
स्वर्णसिन्दूरतो भागाश्चत्वारः कल्पयेद्बुधः ॥७५॥
नातः परतरः श्रेष्ठः सर्वरोगनिसूदनः।
सर्वलोकहितार्थाय शिवेन परिकीर्त्तितः ॥७६॥ मकरध्वजः।

---

चन्द्रोदयरसे सुकार्पासभवप्रसूनैरिति रक्तकार्पासकुसुमैः ॥६५—७३॥
मकरध्वजे हाटकं स्वर्णं चन्द्रं कर्पूरम् ॥७४—७६॥

हेम्नो भस्मकतोलकं घनं द्विगुणितं लौहात् त्रयः पारदात्
चत्वारो नियतञ्च वङ्गयुगलञ्चैकीकृतं मर्दयेत्।
मुक्ताविद्रुमयोः रसेन समता गोक्षुरवासेक्षुणा
सर्वं वन्यकरीषकेण सुदृढ़ं तत्तत् पचेत् सप्तधा ॥७७॥
कस्तूरी घनसार मर्दितरसः पश्चात् सुसिद्धो भवेत्
कासश्वास क्षपित्तवात कफजित् पाण्डुक्षयादीन् हरेत्।
शूलादि ग्रहणीं विषादिहरणो मेहांस्तथा विंशतिम्
हृद्रोगादिहरो ज्वरादिशमनो वृष्यो वयोवर्द्धनः
श्रेष्ठः पुष्टिकरो वसन्ततिलको मृत्युञ्जयेनोदितः ॥७८॥

वसन्ततिलकोरसः।

द्विभागं हाटकं चन्द्रं त्रयो वङ्गाहिकान्तकाः।
चतुर्भागं शुद्धमभ्रं प्रवालं मौक्तिकं तथा ॥७९॥
भावयेत् गव्यदुग्धेन भावनेक्षुरसेन च।
वासालाक्षारसोदोच्चरम्भाकन्दप्रसूनकैः ॥८०॥
शतपत्ररसेनैव मालत्याः कुङ्कुमोदकैः।
पश्चात् मृगमदैर्भाव्यं सुगन्धिरससम्भवम् ॥८१॥
कुसुमाकरविख्यातो वसन्तपदपूर्वकः।
गुञ्जाद्वयेन संसेव्यः सितामध्वाज्यसंयुतः ॥८२॥
मेहघ्नः कान्तिदश्चैव कामदः पुष्टिदस्तथा।
वलीपलितनाशश्च स्मृतिभ्रंशं विनाशयेत् ॥८३॥
पुष्टिदौर्बल्यमायुषः पुत्रप्रसवकारणः।
प्रमेहान् विंशतिञ्चैव क्षयमेकादशं तथा।

---

वसन्ततिलके घनमभ्रं नियतं गन्धकं वृद्धास्तु रसगन्धकयोरभावे स्वर्णसिन्दूरं व्यवहरन्ति। घनसारं कर्पूरम् ॥७७—७८॥

वसन्तकुसुमाकरे हाटकं स्वर्णं अहिः सीसकम्। केचित्तु वङ्गाहिकान्तका इत्यत्र रसाहिकान्तकमिति पठन्ति। रम्भाकन्दप्रसूनकैरिति रम्भामूलरसैः

तथा सोमरुजं हन्ति साध्यासाध्यमथापिवा ॥८४॥

वसन्तकुसुमाकरो रसः।

सूतकं गन्धकं लौहं विषं चित्रकपञ्चकम्।
वराङ्गरेणुकामुस्तग्रन्थ्यैलानागकेशरम् ॥८५॥
त्रिकत्रयञ्च त्रिफला शुल्वभस्म तथैव च।
एतानि समभागानि द्विगुणो गुड़ उच्यते ॥८६॥
संमर्द्य वटकं कृत्वा भक्षयेत् चणकोन्मितम्।
कासे श्वासे क्षये गुल्मे प्रमेहे विषमज्वरे ॥८७॥
हिक्कायां ग्रहणीदोषे शोथे पाण्डामये तथा।
मूत्रकृच्छ्रे मूढगर्भे वातरोगे च दारुणे ॥८८॥
नीलकण्ठो रसो नाम ब्रह्मणा निर्मितः पुरा।
अनुपानविशेषेण सर्वरोगहरो भवेत् ॥८९॥ नीलकण्ठोरसः

पलैकं नागभस्माथ भावयेत्तिमिपित्ततः।
तन्नागं सुसृतं स्वर्णं तोलैकं वापि मिश्रयेत् ॥९०॥
द्विपलं भस्मसूतस्य त्रिपलं मृतमभ्रकम्।
त्रिपलं लौहभस्माथ सर्वमेकत्र कारयेत् ॥ ९१ ॥
भावयेच्च पृथक् कन्याब्रह्मीनिर्गुण्डिकाशमी।
मुण्डी शतावरी छिन्ना कोकिलाक्षस्य, वीजकैः ॥ ९२ ॥
मूषली वृद्धदारोऽग्निद्रवैरेभिर्भिषग्वरः।
ततः संचूर्णयेत् सर्वं तुल्यमेकादशाभिधम् ॥ ९३ ॥
वराव्योषाब्दवह्न्येला जातीफललवङ्गकम्।
पूजयेत् विल्वपत्राद्यैर्नीलकण्ठं महेश्वरम् ॥ ९४ ॥
द्विगुञ्जं भक्षयेदस्य मृत्युञ्जय मनुस्मरन्।

---

प्यरसैश्च। शतपत्ररसै नैत्यत्र शतपुष्पीरसैन इति केचित् पठन्ति अपर तु मालत्याः
कुङ्क मोदकैरित्यत्र मालत्याः कुसुमोदकैरिति पठन्ति एतत्तु न सम्यक् व्यवहार-
सिद्धम् ॥७९—८४॥

क्षयमेकादशविधं ग्रहणीं रक्तपित्तकम् ॥ ९५ ॥
विविधान् वातजान् रोगान् चत्वारिंशच्च पैत्तिकान् ।
हन्ति सर्वामयानेव कामिनीनां शतं व्रजेत् ॥ ९६ ॥
एकविंशतिरात्राद्र्ध्वं परिहार्य्यं त्यजेदिह ।
यथेष्टाहारचेष्टोहि कन्दर्पसदृशो नरः ॥ ९७ ॥
मेधावी बलवान् प्राज्ञो बह्वाशी भीमविक्रमः ।
पुत्रार्थिनी तथा नारी रम्यं पुत्रं प्रसूयते ।
अस्य सूतस्य महात्म्यं वेत्ति शम्भुर्न चापरः ॥ ९८ ॥



महानीलकण्ठो रसः ।

पारदं गन्धकञ्चैव टङ्गनं नागकेशरम् ।
कर्पूरं जातीकोषञ्च लवङ्गं तेजपत्रकम् ॥ ९९ ॥
एतेषां कर्षभागानि सुवर्णं तत्समं भवेत् ।
शुद्धकृष्णाभ्रचूर्णञ्च चतुष्कपिचुभागिकम् ॥ १०० ॥
तालीशं वनकुष्ठञ्च मांसीपुष्पवराङ्गकम् ।
एलाबीजं त्रिकटुकं त्रिफला करिपिप्पली ॥ १०१ ॥
पुष्पं कर्षद्वयञ्चैव पिप्पलीक्वाथभावितम् ।
अनुपानं प्रयोक्तव्यं चोष्णं क्षौद्रसमायुतम् ॥ १०२ ॥
नानारोगप्रशमनं विशेषात् कासरोगनुत् ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥ १०३ ॥
हृच्छूलं पार्श्वशूलञ्च शिरःशूलं विशेषतः ।
स्वरामयं क्षयं कुष्ठं श्लेष्माणं वातशोणितम् ॥ १०४ ॥
बृहच्छृङ्गाराभ्रनाम विष्णुना परिकीर्त्तितम् ।
रक्तपित्तञ्च कासञ्च नाशयेत् नात्र संशयः ॥१०५॥ बृहच्छृङ्गाराभ्रम्



इति रसायनाधिकारो वाजीकरणाध्यायश्च ।
समाप्तोऽयं ग्रन्थः ।

---

महानीलकण्ठरसे नागः सीसकं मुण्डी मुण्डिरी छिन्ना गुडूची । अग्निश्चित्रकः वरा त्रिफला । अब्दा मुस्तकम् ॥८५ – ९८॥

बृहच्छृङ्गाराभ्रे सुवर्णं तत्समभित्येकभागसमम् । घनं मुस्तकं चोचं गुड़त्वक करिपिप्पली गजपिप्पली ॥९९ – १०५॥